University of Mysore

Oriental Library Publications

SANSKRIT SERIES No. 86

GENERAL EDITOR

H. R. RANGASWAMY IYENGAR, M.A.,

*Curator-in-charge, Government Oriental Library, Mysore*

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-श्रीमद्वेदान्ताचार्यविरचितः

# यादवाभ्युदयः

आलङ्कारिकमूर्धन्य-सर्वतन्त्रपारदृश्व-श्रीमदप्पयदीक्षितेन्द्र-
विरचितया व्याख्यया समलङ्कृतः

(सर्गाः १३—१८)



# THE YĀDAVĀBHYUDAYA

OF

SRI VEDĀNTĀCARYA



WITH

THE COMMENTARY OF SRI APPAYYADĪKSHITA

(CANTOS 13–18)



EDITED BY

VIDVAN T. T. SRINIVASA GOPALACHAR,

*Pandit, Govt. Oriental Library, Mysore*

MYSORE:
PRINTED BY THE ASST. SUPDT. AT THE GOVT. BRANCH PRESS
1944

# PREFACE

YĀDAVĀBHYUDAYA is a Mahākāvya in 24 cantos written by Sri Vedānta Dēśika *alias* Venkatanātha, one of the greatest teachers of Srivaiṣṇavism in Southern India, who lived during the 13th and 14th centuries of the Christian era. Born at Tūppil, a suburb of Kānchi, initiated by his father and educated under his maternal uncle, Ātrēya Rāmānuja, Vedānta Deśika mastered all the branches of Sanskrit learning and came into eminence by selfless devotion to his work. To him are ascribed not less than 120 works of which *Tattvamuktākalāpa*, *Nyāya Pariśuddhi*, *Rahasyatrayasāra*, *Sankalpa Suryodaya* and *Yādavābhyudaya*, deserve special mention. They exhibit the depth as well as the width of his scholarship in several branches of learning and his ceaseless devotion to the propagation of Srivaiṣṇavism. As an ardent devotee of Viṣṇu, he seems to have been attracted by the theme of the Life of Sri Kṛṣṇa and written this beautiful poem. According to a story, Venkatanāthā seems to have written this work in a single night in rivalry with the Poet Dindima, who wrote the Rāmābhyudaya.

The commentator of this work is the famous Advaita Scholar, Appayya Dīkṣita, who is also known for his vast learning and is said to have written 104 works on various branches of Sanskrit learning. A complete list of his works is given in the Sanskrit Introduction. He was born in 1552 A.D. in Adayappalam, a village near Kanchi, and belonged to a family of distinguished Pandits. His father, Rangarāja, was a great Advaita teacher and a Saiva, while his grandmother, Totāramba, was a Vaiṣṇava. Intermarriages were quite common in those days between the Śaivas and Vaiṣṇavas and a tradition goes to say that Appayya himself married a Vaiṣṇava, Sumangalā or Mangalanāyaki, daughter of the wellknown scholar, Ratnakheta Dīkṣita, who was a Vaiṣṇava. In his early days he seems to have entertained a spirit of toleration and sympathy for the views of others,

though in later years he stood as a champion for the cause of Saivism and wrote powerful works on Śaivism and Advaita. Though a Śaiva, by birth he was an ardent devotee of Sri Kṛṣṇa. His *Kṛṣṇadhyāna Paddhati* bears evidence to it. Appayya Dīkṣita has been carried away by the beauty of the poem and the love of the theme and written his masterly commentary on *Yādavābhyudaya*, the work of a great teacher of the rival school of thought, the tenets of which, he himself made the end and aim of his life to refute.

It is a pity that such a beautiful work with its commentary should not have been published completely till now. The authorities of the Vanivilas Press, Srirangam, planned the publication of the whole work, but were able to bring out in two volumes the first 12 cantos only with an introduction on the life and work of the poet and the commentator. Since the Mysore Oriental Library had in its collections correct and complete manuscripts of the original work and the commentary, and many institutions and scholars suggested the publication of a critical edition of the whole work with its commentary, the work was taken up for editing. After carefully collating all the manuscripts described in the Sanskrit introduction, a part of the unpublished portion of the work, *viz.*, Sargas 13–18, has now been edited and published as the first volume. It is hoped to publish the remaining Sargas in the succeeding volume.

I take this opportunity to acknowledge the help rendered by the authorities of Sri Parakala Mutt, Mysore, The Principal, Maharaja's Sanskrit College, Mysore, and Vidwan Navalpakam Narasimhachar in bringing out this edition by lending readily the manuscript copies of the work which were in their possession.

MYSORE,
1–6–45.

H. R. RANGASWAMI IYENGAR,
*Curator-in-charge, Oriental Library, Mysore.*

॥ श्रीः ॥

श्रीमते हयग्रीवाय नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥

## सव्याख्ययादवाभ्युदयमहाकाव्यरत्नप्रस्तावना

---

श्रीमानुद्दामभूमा प्रणतसुरवरस्तोमकोटीरकोटी-
वाटीप्रत्युप्तराजद्बहुविधसुमणीकान्तिनीराजिताङ्घ्रिः ।
कल्याणानां प्रसूतिर्मधुहृतनिगमस्तोमरक्षावतीर्णो
विद्यामूर्तिस्स देवो जयतु हयमुखो देवतासार्वभौमः ॥

अमन्दानन्दसन्दोहसंपादनधुरन्धरा ।
रसालङ्कारभरिता कविवाणी विजृम्भताम् ॥

अयि सहृदयाः सुविदितमेवैतत्सरससाहितीनदीष्णानां विश्वेषामपि तत्रभवतां विपश्चिदपश्चिमानां, यत्किल निखिलरसालङ्कारभरितं श्रीमद्वसुदेवनन्दनदिव्यचरिताभिवर्णनपरं यादवाभ्युदयाभिधानं महाकाव्यरत्नं जगतीतले विराजत इति ।

### एतत्काव्यप्रणेतारः

काव्यरत्नस्यास्य कवयितारो विश्वामित्रगोत्रदुग्धाब्धिराकासुधाकरायमाणाः श्रीमत्पुण्डरीकाक्षसूरिपौत्राः श्रीमदनन्तसूरितोताद्र्यम्बासुकृतकल्पतरुसुरुचिरफलायमानाः श्रीमद्वृषगिरिसमधिगतसंनिधानभगवद्वेङ्कटेशघण्टावताराः द्विनवत्यधिकैकादशतीमिते शालिवाहशके आधुनिकगणनसंवादिनि प्रमोदवत्सरे कन्यामास्यादिमे दिने भाद्रपदशुक्लद्वादश्यां शुक्रवासरे भव्यतमे वैष्णवे श्रवणर्क्षे (A. D. 29-8-1270) समवतीर्णाः स्वावतरणपवित्रीकृततुण्डीर-



*

मण्डलमण्डनायमानकाञ्चीनगरपरिसरसमुदञ्चत्तूप्पिलग्रहाराः आत्मीयमातुलप्रवर-श्रीमदात्रेयरामानुजाचार्यगुरुप्रवरकरुणाकटाक्षसमासादितसार्वज्ञ्याः श्रीमद्वैनतेयोपदिष्टश्रीहयवदनमनुपुरश्चरणप्रत्यक्षितश्रीमल्लक्ष्मीहयवदनलालासुधारसास्वाद-समुज्जृम्भितानितरसाधारणमेधावैभवाः विरचितबहुविधगरुडदण्डकहयवदन-स्तवप्रमुखस्तोत्रप्रबन्धाः श्रीमद्यादवाभ्युदयहंससन्देशसङ्कल्पसूर्योदयाद्यनेकोत्त-मकाव्यानां निर्मातारः निजमतिविभवविनिर्मितसम्प्रदायानुरोधिश्रीमन्न्यायपरि-शुद्धिन्यायसिद्धाञ्जनतत्वमुक्ताकलापसर्वार्थसिद्धिशतदूषणीप्रभृतिबहुविधवेदान्त-ग्रन्थाः व्याकृतश्रीमद्यामुनाचार्यभगवद्रामानुजाचार्यप्रमुखपूर्वाचार्यप्रणीतप्रबन्धाः सुग्रथितभव्यतमबहुविधद्राविडसूक्तिप्रबन्धमणिमालाः शुभतमद्रामिडसंस्कृतो-भयवाणीमिलितमणिप्रवालमयसम्प्रदायसमधिगतानिगमान्तरहस्यसूक्त्युपदेशपरि-पूतान्तरङ्गसमुदञ्चदन्तेवासिमण्डलाः श्रीमद्भगवद्रामानुजसिद्धान्तविजयध्वजी-भूतात्मीयपुत्ररत्नवरदार्यवर्यसन्ततसमुपासितचरणपङ्करुहाः (A.D. 29-8-1270 —17-11-1369) शतसंवत्सरपरिमितजगतीतलालङ्करणसमयकृतार्थीकृतशिष्य-निकुरुम्बाः कवितार्किकसिंह–सर्वतन्त्रस्वतन्त्र–श्रीमद्वेदान्ताचार्येत्याद्यपरिमिता-न्वर्थबिरुदपरिभूषिताः श्रीमन्निगमान्तमहादेशिकादिसुगृहीताभिधानैरनिशमनुस-न्धीयमानाः श्रीमद्वेङ्कटनाथाचार्या इति सुप्रतीतम् ।

## एतत्काव्यप्रवृत्तिः

अनितरसाधारणमेधामहिम्ना समेधमानेष्वेतेष्वाचार्यपादेषु कदाचिच्छ्रीरङ्गनगरमुपागतेन डिण्डिमनाम्ना कविसार्वभौमेण एतदाचार्यपादानां कवितार्किकसिंहबिरुदमसहमानेन—

छित्त्वा सर्वाण्यरण्यान्यतिविषमलतागुल्मदुर्गाणि सद्यः
प्राप्तं मां फक्कणान्तं बत भषकततिर्बुक्कणैर्धिक्करोति ।
लज्जन्ते हन्तुमेनां मदकरटिघटाकुम्भपीठीविपाट-
क्रीडाधौरेयधारा मम खलु नखराः किं करोमि क्व यामि ॥

प्राज्ञानामेव राज्ञां सदसि न सहते जल्पमल्पेतरेषां
क्षुद्रेष्वाक्षेपमुद्रां न खलु गणयते डिण्डिमस्सार्वभौमः ।
भांकुर्वद्भेककुक्षिंभरिषु भयभरभ्रान्तभोगीन्द्रसुभ्रू-
भ्रूणभ्रंशी किमम्भःफणिषु पतगराट् सम्भ्रमी बम्भ्रमीति ॥

इत्याक्षिप्ता इमे आचार्यपादास्तदाक्षेपसमुचितयैव सरण्या स्वयमपि—

स्पर्धन्तां सहजं नु कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा
ग्राम्या वा वनवासिनो मदजलप्रस्विन्नगण्डस्थलाः ।
आः कालस्य विपर्ययं शृणु सखे प्राचीनपल्लीमला-
स्वादस्निग्धकपोलभित्तिरधमः कोलोऽपि संस्पर्धते ॥

बाह्यैर्वर्णाडम्बरैर्मा भ्रमन्तु
छित्त्वा गर्भाभ्यन्तरं शोधयन्तु ।
निर्णेतारो नीरसत्वेन को वा
डिण्डीराणां डिण्डिमानां च भेदः ॥

इत्यादिना तं प्रत्याक्षिप्य सहृदयविद्वत्सदसि कवितावादे तं जित्वा युगपदेव तत्प्रदत्तं समस्यासहस्रमपि यथाक्रममेव सम्पूर्य तत्प्रणीतरामाभ्युदयकाव्य-प्रतिस्पर्धितयैकस्यामेव रात्रौ तदतिशायिरसालंकृतिभरितयादवाभ्युदयाह्वयै-तन्महाकाव्यरत्ननिर्माणेन तं डिण्डिमं विस्माययामासुरिति वृद्धानां प्रवादः ।

विद्वत्सदसि समस्यासहस्रपरिपूरणमेभिराचार्यैः प्रणीतमित्ययमंशः—

स्वकमिति हरिदत्तं यामुनस्तोत्रवृत्त्या
व्यवृणुत निगमान्ताचार्यकं वेङ्कटेशः ।
अगणि सदसि सद्भिर्यस्समस्यासहस्री
कविकथकमृगेन्द्रस्सर्वतन्त्रस्वतन्त्रः ॥

इति श्रीमद्यामुनस्तोत्ररत्नभाष्यान्ते 'अगणि सदसि सद्भिर्यस्समस्यासहस्री' इति भाषमाणैरेभिराचार्यैरेव सूचित इति संभाव्यते ।

एवं पराजितो डिण्डिमकविः स्वकपोलयुगलमेव डिण्डिमवाद्यवत्कुर्वन्—

घोटीघाटीकठोरस्फुटविकटकथाटोपवाचाटकोटी-
कोटीराघाटपेटीपुटघटितमणीसंघसंघट्टिताङ्घ्रिः ।
खर्वीकुर्वन् स गर्वं जयति कवितते्स्सर्वतन्त्रस्वतन्त्रो
वेदान्ताचार्यवर्यो विघटितजडधीसंकटो वेंकटेशः ॥
द्विचतुष्पदपरिवर्तनगर्वितकविशरभगण्डभेरुण्डः ।
खण्डनखण्डनकविरिह कविगण्डडिण्डिमो जयति ॥

इत्यादिना आचार्यमणिमेनमगायदित्यपि वृद्धा वदन्ति ।

तदिदमभिप्रेत्य श्रीमन्महाचार्यैः प्रणीते श्रीमद्वेदान्तदेशिकवैभवप्रकाशिकास्तोत्रे—

जित्वा कविं डिण्डिमसार्वभौमं
कृत्वा च कृष्णाभ्युदयं मनोज्ञम् ।
स्तुतस्तदा तेन गुरूत्तमो य-
स्तमाश्रये सर्वकलास्वतन्त्रम् ॥

इत्यभिहितं दृश्यते ।

तदिदं सर्वमुपाश्लोकि भगवद्रामानुजमतभूषणमाडपूशितिरुवरङ्गमाण्डान् तिरुमलैवंशावतंसैः श्रीमद्भिः करूरु–श्रीशैलदेशिकाचार्यवर्यैः प्रणीतायां श्रीमन्निगमान्तमहादेशिकसच्चरित्रदिव्यरत्नावल्याम्—

अथाययौ डिण्डिमसार्वभौमो महाकविर्वादितडिण्डिमस्सन् ।
स गण्डभेरुण्डतया प्रसिद्धः परे कवीन्द्राः शरभाः प्रसिद्धाः ॥
ततो रसालंकृतिलक्षणानां छन्दोविधानस्य च चित्ररीतेः ।
वाग्देवतावत्प्रथिते प्रवक्तर्यस्मिन्नसौ मूकवदेव तस्थौ ॥
ततस्तु रामाभ्युदयं स्वकाव्यं प्रदर्शयामास यशस्विनेऽस्मै ।
गुरूत्तमोऽसावपि काव्यरत्नमथाकरोन्मङ्गलसंनिवेशम् ।

स यादवस्याभ्युदयं तदेतच्चिरं विमृश्यैव रसज्ञधुर्यः ।
भवान्नृसिंहो भगवान्न चैव सिंहः परं सत्कवितार्किकाणाम् ।
इति प्रशस्यैनमतस्सहस्रं सहोपनीतं च महाकवीनाम् ।
नियुज्य तस्मै युगपत्समस्यासहस्रमावेदयदाशुकारी ।
यथाक्रमं तत्सकलं समस्यासहस्रमप्याशु शुभोक्तिगुम्भैः ।
अपूरयल्लेखनिकासहस्री त्वलेखयत्तच्च कविः परोऽपि ।
जितस्स्वयं डिण्डिमवाद्यवत्स्वं विधाय ताल्लद्वितयं च तेन ।
अघोषयड्डिण्डिमसार्वभौमो विनिर्जितोऽसावमुनेति धीमान् ॥

इति ।

## एतत्काव्यप्रतिपाद्यं वस्तु

एतत्काव्यप्रतिपाद्यमानं कथाशरीरं च श्रीमद्वसुदेवनन्दनदिव्यचरितरूपम् । तच्चेदं पञ्चमवेदात्मकश्रीमन्महाभारतदुग्धाब्धेः सुधायमानाद्धरिवंशतः संगृहीतामिति—

विहाय तदहं क्रीडां व्यासवेदार्णवामृतम् ।
वक्ष्ये विबुधजीवातुं यादवेन्द्रकथोदयम् ॥

इत्येतत्काव्योपोद्धातगताचार्यपादसूक्त्यैवावगम्यते ।

## एतत्काव्यस्य गरिमा

काव्यरत्नेऽस्मिन् प्रायः प्रतिश्लोकं परिस्फुरन्ननुप्रासादिशब्दालंकारः पदानां लालित्यमर्थालंकाररसादिकं चानतिक्रामन्नेव शोभते । तथोल्लेखाश्च सहृदयहृदयंगमास्सुगम्भीराः केवलमतिशयोक्त्याद्यदूषिताः परिदृश्यन्ते । क्रियमाणे च भावाविष्करणे प्रतिपदं पुनः पुनरुन्मिषन्त्येव बहवो भावा इति सहृदयशिखामणिभिरालंकारिकमूर्धन्यैरेतद्व्याख्यातृभिरप्पयदीक्षितेन्द्रैरेव—

क्रीडातूलिकया स्वस्मिन् कृपारूषितया स्वयम् ।
एको विश्वमिदं चित्रं विभुश्श्रीमानजीजनत् ॥

(यादवाभ्युदये १–९)

इति श्लोकव्याख्यायां भावोन्नयने पराक्रान्तैश्चित्रीयमाणमानसैः—

इत्थं विचिन्त्यास्सर्वत्र भावास्सन्ति पदे पदे ।
कवितार्किकसिंहस्य काव्येषु ललितेष्वपि ॥
तथाऽपि विस्तरापत्तेर्नैवमग्रे प्रपञ्च्यते ।
काव्यव्याख्याकृतां रीतिः प्राचामेवानुगम्यते ॥

इत्युपश्लोकीत्येतत्काव्यरत्नमुत्कर्षस्य परां कोटीमाटीकत इति नात्रास्माभिर्विशेषतो वक्तव्यमवशिष्यते ।

एतदाचार्यपादानुगृहीताः प्रबन्धाः, तद्विभजनादिकं च—

१. गरुडदण्डकः—श्रीमदहीन्द्रनगर्यां गरुडनदीतीरे गरुडमन्त्रपुरश्चरणेन प्रत्यक्षितस्य श्रीमतो वैनतेयस्य स्तुतिरूप आद्यः प्रबन्धः.

२. गरुडपञ्चाशत्—अयमपि वैनतेयस्तुतिरूपः पञ्चाशत्पद्यात्मकः प्रबन्धः.

३. श्रीहयग्रीवस्तोत्रम् — पक्षीन्द्रोपदिष्टश्रीहयग्रीवमन्त्रपुरश्चरणेन प्रत्यक्षितस्य श्रीहयग्रीवस्य स्तुतिरूपम्.

४. गोपालविंशतिः—बृन्दावनविहारिणः श्रीकृष्णस्य बाललीलावर्णनरूपा.

५. देवनायकपञ्चाशत्—श्रीमदहीन्द्रनगरे औषधाद्रौ संनिधातुः श्रीदेवनायकस्य स्तुतिरूपा.

६. अच्युतशतकम्—प्राकृतभाषामयपद्यशतकेन श्रीदेवनायकस्य स्तुतिरूपम्.

७. देहलीशस्तुतिः—गोपपुर्यां पेण्णानदीतीरे संनिधातुः श्रीत्रिविक्रमस्य स्तुतिरूपा.

८. दयाशतकम्—श्रीवेङ्कटगिरौ संनिधातुः श्रीनिवासस्य दयायाः स्तुतिरूपम्.

९. रघुवीरगद्यम् गद्यसरण्या श्रीमतो रामभद्रस्य दिव्यचरितसंग्रहरूपम्.

१०. वरदराजपञ्चाशत्—काञ्चीक्षेत्रे द्विरदाद्रौ संनिधातुः श्रीमतो हस्तिगिरीशस्य स्तुतिः.

११. यथोक्तकारिस्तोत्रम्—काञ्चीक्षेत्रे वेगवतीनदीमध्ये शेषशायिनो भगवतस्स्तुतिरूपम्.

१२. अष्टभुजाष्टकम्—काञ्चीक्षेत्रे संनिधातुरष्टभुजाह्वयस्य भगवतः स्तुतिरूपम्.

१३. कामासिकाष्टकम्—वेगापगादक्षिणतीरे योगासनासीनस्य श्रीनरहरेः स्तुतिरूपम्.

१४. यतिराजसप्ततिः—श्रीभूतपुर्यामर्चात्मनाऽवस्थितस्य श्रीभगवद्रामानुजसंयमीन्द्रस्य स्तुतिरूपा.

१५. परमार्थस्तुतिः—गृध्रसरस्तीरसंनिधातुर्भगवतो रणपुङ्गवस्य स्तवनरूपा.

१६. सुदर्शनाष्टकम्—गृध्रसरस्तीरे शीतबाधया रुग्णानां तद्बाधापनयनव्याजेन भगवतोऽस्त्रराजस्य स्तुतिरूपम्.

१७. षोडशायुधस्तोत्रम्—षोडशायुधोपेतस्य भगवतोऽस्त्रराजस्य स्तुतिरूपम्.

१८. गोदास्तुतिः—श्रीधन्विपुरे (श्रीविल्लिपुत्तूर्) अर्चात्मनाऽवस्थितायाश्श्रीमतो विष्णुचित्तार्यस्य तनयायाः श्रीगोदादेव्याः स्तवनरूपा.

१९. श्रीस्तुतिः—(कनकधारास्तवः) याचमानस्य कस्य चिदर्थिनो मनोरथपरिपूरणव्याजेन श्रीदेव्याः स्तवनरूपा.

२०. अभीतिस्तुतिः—तुरुष्कयवनादिबाधानिवृत्तिपूर्वकानिर्भयावस्थितिप्रार्थनाव्याजेन भगवतः श्रीरङ्गनाथस्य स्तवनरूपा.

२१. भूस्तुतिः—श्रीरङ्गनगराच्चिरप्रोषितस्य स्वस्य अपराधक्षमाभ्यर्थनाय भूदेव्याः स्तवनरूपा.

२२. भगवद्ध्यानसोपानम्—श्रीरङ्गे मूलोत्सवबेरात्मना संनिधातुः श्रीरङ्गनाथस्य आपादचूडमनुभवप्रकाशनपरम्.

२३. दशावतारस्तोत्रम्—मत्स्यकूर्मादिदशावताररूपिणो भगवतः स्तुतिरूपम्.

२४. पादुकासहस्रम्—भगवतः श्रीरङ्गनाथस्य मणिमयपादुकाया द्वात्रिंशत्पद्धतिविभक्तेन श्लोकानां सहस्रेणाभिवर्णनपरम्.

२५. षाटीपञ्चकम्—श्रीभगवद्रामानुजसंयमिवरविजयाभिवर्णनरूपम्.

२६. दिव्यदेशमङ्गलाशासनपञ्चकम्—श्रीरङ्गादिदिव्यदेशपञ्चक-मङ्गलाशासनपरम्.

२७. अपर्याप्तामृतस्तुतिः—श्रीकुम्भघोणे संनिहितस्य श्रीशार्ङ्गपाणेः स्तवनरूपा.

२८. किंगृहेशस्तुतिः—वीक्षारण्यसंनिधातुः किंगृहेशाह्वयस्य भगवतः श्रीवीरराघवस्य स्तवनरूपा.

२९. नीलास्तुतिः—श्रीनीलादेवीस्तवनरूपा.

इत्येते स्तोत्रप्रबन्धा एकोनत्रिंशत् (२९).

१. यादवाभ्युदयः—श्रीकृष्णदिव्यचरिताभिवर्णनरूपश्चतुर्विंशति-सर्गात्मकः श्रव्यमहाकाव्यप्रबन्धः

२. हंससन्देशः—दशमुखनीताशोकवनिकास्थसीतासमाश्वासनौ-पयिकश्रीरामभद्रप्रहितहंसमूलकसन्देशवर्णनात्मकः खण्डकाव्यप्रबन्धः.

३. सुभाषितनीवी—प्रतिपद्यं त्रिचतुरार्थगुम्भितो द्वादशपद्धति-विभक्तो नीतिप्रबन्धः.

४. सङ्कल्पसूर्योदयः—श्रीविशिष्टाद्वैतसिद्धान्तप्रकाशनपरो दशाङ्क-सहितो दृश्यकाव्यप्रबन्धः.

इतीमे काव्यप्रबन्धाश्चत्वारः (४).

१. यज्ञोपवीतप्रतिष्ठाविधिः—द्विजानुष्ठेयनिखिलश्रौतस्मार्तकर्मौपयिकयज्ञोपवीतप्रतिष्ठाक्रमनिरूपणपरः पद्यात्मकप्रबन्धः.

२. आराधनक्रमसंग्रहः—श्लोकात्मना भगवतो नित्याराधनक्रमसंग्रहणपरः.

३. हरिदिनतिलकम् —श्रीवैष्णवानुष्ठानोपयोग्येकादशीनिर्णयपरं पद्यात्मकम्.

४. वैश्वदेवकारिका—वैश्वदेवाख्यकर्मानुष्ठानप्रकारसंग्रहपरः पद्यात्मकः प्रबन्धः.

५. सच्चरित्ररक्षा—बहुप्रमाणप्रदर्शनपूर्वकं तप्तशङ्खचक्रधारणोर्ध्वपुण्ड्रधारणभगवन्निवेदितोपयोगविधीनां निर्णयपरा.

६. पाञ्चरात्ररक्षा—पाञ्चरात्रप्रमाण्यस्थापनपूर्वकं पाञ्चकालिकक्रियानिरूपणपरा.

७. न्यासदशकम् — श्रीमत्करगिरीशभगवत्प्रपत्तिप्रकारसंग्रहपरं पद्यदशकात्मकम्.

८. शरणागतिदीपिका—श्रीदीपप्रकाशभगवत्प्रपदनप्रकारप्रपञ्चनपरा पद्यात्मिका.

९. न्यासतिलकम्—श्रीमद्रङ्गनाथप्रपत्तिक्रमप्रकाशनपरं पद्यात्मकम्.

१०-११. न्यासविंशतिः—आचार्यसेवातत्स्वरूपादिविवेचनपूर्वकं साङ्गन्यासविद्याप्रकाशनपरा सव्याख्या.

१२. निक्षेपरक्षा—बहुविधप्रमाणप्रपञ्चनपूर्वं न्यासविद्यास्थापनपरा.

१३. वैराग्यपञ्चकम् —श्रीविद्यारण्यमुनिप्रेषितराजसभाह्वानपत्रिकाप्रत्युत्तररूपं वैराग्यप्रशंसनपरं पद्यपञ्चकात्मकम्.

इत्येतेऽनुष्ठानोपयोगिनः प्रबन्धास्त्रयोदश (१३).

१. श्रीस्तोत्रभाष्यम् —श्रीयामुनार्यप्रणीतश्रीस्तुतिरूपायाश्चतुश्श्लोक्या विवरणरूपम् .

२. श्रीस्तोत्ररत्नभाष्यम् —श्रीयामुनार्यप्रणीतस्तोत्ररत्नस्य व्याख्यानरूपम् .

३. गीतार्थसंग्रहरक्षा —श्रीयामुनमुनिप्रणीतश्रीभगवद्गीतार्थसंग्रहस्य व्याख्यानरूपा.

४. तात्पर्यचन्द्रिका — श्रीभगवद्रामानुजमुनिप्रणीतगीताभाष्यस्य-विस्तृतव्याख्यारूपा.

५. तत्वटीका—श्रीभाष्यस्य विस्तृतव्याख्यारूपाऽसमग्रा.

६. अधिकरणदर्पणः—श्रीभाष्यगताधिकरणार्थसंग्रहरूपो दुर्लभः.

७. अधिकरणसारावली—स्रग्धरावृत्तकलितपद्यैः श्रीभाष्यगताधिकरणार्थानां संग्रहपरा.

८-१०. श्रीगद्यत्रयभाष्यम्—शरणागति—श्रीरङ्ग—वैकुण्ठगद्यानां श्रीभगवद्रामानुजमुनिप्रणीतानां विवरणात्मकम् .

इत्येते पूर्वाचार्यग्रन्थव्याख्यारूपाः प्रबन्धा दश (१०).

१. मीमांसापादुका — जैमिनीयपूर्वमीमांसाप्रथमाध्यायाद्यपादार्थसंग्रहरूपा.

२. सेश्वरमीमांसा—पूर्वमीमांसाया अपीश्वराभिप्रायकत्वनिर्धारणैदंपर्येण प्रवृत्ता द्वादशाध्यायीविवरणरूपाऽसमग्रा.

इत्येतौ पूर्वमीमांसाप्रबन्धौ द्वौ (२).

१. ईशावास्योपनिषद्भाष्यम्—ईशावास्योपनिषद्विवरणरूपम् .

२. शतदूषणी—अद्वैतसिद्धान्तखण्डनरूपा षट्षष्टिवादान्तेदानीमुपलभ्यमाना.

३. चकारसमर्थनम्—शतदूषणीगतस्य कस्य चिच्चकारस्य परेण नैरर्थक्यमापादितस्य खण्डनपुरस्सरं तत्स्थापनपरं दुर्लभम्.

इत्येतद्वेदान्तानुबन्धि प्रबन्धत्रितयम् (३).

१. न्यायपरिशुद्धिः—श्रीविशिष्टाद्वैतसिद्धान्तानुरोधी प्रमाणप्रमेय-निरूपणपरो न्यायविस्तरशास्त्ररूपः प्रबन्धः.

२. न्यायसिद्धाञ्जनम्—श्रीविशिष्टाद्वैतसिद्धान्तानुसारी विस्तरेण प्रमेयनिरूपणपरः प्रबन्धः.

३. तत्वमुक्ताकलापः—परपक्षप्रतिक्षेपपूर्वकं श्रीविशिष्टाद्वैतसिद्धान्त-प्रकाशनपरः पञ्चभिस्सरैर्विभक्तः स्रग्धरावृत्तकलितपद्यात्मकः प्रबन्धः.

४. सर्वार्थसिद्धिः—पूर्वप्रदर्शिततत्वमुक्ताकलापस्य नातिव्यास-समासवृत्तिरूपा.

इत्येते वेदान्तप्रकरणग्रन्थाश्चत्वारः (४).

१. द्रमिडोपनिषत्तात्पर्यरत्नावली—श्रीशठकोपसूरिप्रणीतद्रामिडभाषा-मयगाथासहस्रस्य स्रग्धरावृत्तकलितपद्यैस्तत्तद्दशकार्थसङ्ग्रहरूपा.

२. द्रमिडोपनिषत्सारः—श्रीशठकोपसूरिप्रणीतगाथासहस्रगतशतका-र्थसङ्ग्रहरूपः.

इत्येतद्द्रामिडवेदान्तसारसङ्ग्रहात्मकं प्रबन्धद्वयम् (२).

१-२. भूगोलनिर्णयः—पुराणानुसारिभूगोलस्थितिप्रकाशनपरः श्लोक-सप्तकात्मकस्सव्याख्यश्च.

३. शिल्पार्थसारः—शिल्पशास्त्रप्रबन्धो दुर्लभः.

४. रसभौमामृतम्—वैद्यशास्त्रप्रबन्धो दुर्लभः.

५. वृक्षभूमामृतम्—वृक्षायुर्वेदशास्त्रप्रबन्धो दुर्लभः.

६. प्राकृतविशदसङ्ग्रहः—कात्यायनीयप्राकृतव्याकरणसूत्रवृत्तिरूप-स्संगृहीतः प्रबन्धः.

इत्येते ज्यौतिषशिल्पवैद्यप्राकृतव्याकरणग्रन्थाः षट् (६).

इति संस्कृतवाणीमयाः प्रबन्धास्त्रिसप्ततिः (७३).

१—२४. अमृतरञ्जनी—इत्यादयो द्रामिडगाथामयाः प्रबन्धाश्चतुर्विंशतिः (२४).

१—३२. सम्प्रदायपरिशुद्धिः—एतदादयस्संस्कृतद्रामिडोभयभाषामिश्रितमणिप्रवाळभाषापरिकलितास्सम्प्रदायरहस्यग्रन्था द्वात्रिंशत् (३२).

१. निगमपरिमळः—श्रीशठकोपमुनिप्रणीतगाथासहस्रविवृतिरूपाया भगवद्विषयाख्यायाः षट्सहस्र्या व्याख्यानरूपश्चतुस्सप्ततिसहस्रग्रन्थपरिमितो दुर्लभ एक इति द्रामिडभाषामयाः प्रबन्धास्सप्तपञ्चाशत् (५७).

आहत्य चेदानीं प्रायशो ग्रन्थरूपेण नाम्ना चोपलभ्यमाना आचार्यपादप्रणीतास्त्रिंशदधिकशतं प्रबन्धाः। इतोऽन्ये च केचन प्रबन्धा आचार्यपादैः प्राबन्धिषत। ते तु विलुप्ताश्चेति श्रूयत इति।

## एतत्काव्यव्याख्याप्रवृत्तिः

तदेतत्काव्यरत्नं सुधांशुवंशसमुद्भूतेन रामराजपौत्रेण तिम्मराजसूनुना चिन्नतिम्मराजेन साहित्यगोष्ठीमातिष्ठता नियुक्तैरालङ्कारिकमूर्धन्यैस्सर्वतन्त्रपारदृश्वाभिर्विरचितविविधप्रस्थानकशताधिकप्रबन्धैरप्पय्यदीक्षितेन्द्रैर्व्याख्यातम्। तदिदं—

वंशे महति सुधांशोः पाण्डुसुतप्रवरचरितपरिपूते।
आसीदपारमहिमा महीश्वरो रामराज इति॥

उदपादि तिम्मराजस्ततोऽम्बुधेरिव सुधामयान्मणिराजः।
हृदयङ्गमं मुरारेर्यमलंचक्रे प्रभेव गोपीदेवी॥

राजर्षिरेष सुचिरं धुरि स्थितस्सत्यसन्धानाम्।
आराध्य वेङ्कटेश्वरमलभत लोकोत्तरान् पुत्रान्॥

तेषु महितेषु जयति त्रिदिवाधीशेषु पद्मबन्धुरिव।
श्रीचिन्नतिम्मराजः प्रतापनीराजितक्ष्मावलयः॥

साहित्यगोष्ठीं सरसामातिष्ठन्नयमेकदा ।
यादवाभ्युदयं काव्यमश्रौषीद्विदुषां मुखात् ॥
अव्याख्याततया पूर्वैरनभिव्यक्तभावकम् ।
अघृष्टमिव शिल्पज्ञैरभिजातं हरिन्मणिम् ॥
तदाकर्णनतस्सद्यस्समुदञ्चत्कुतूहलः ।
विदुषां पुरतस्तस्य विवृतौ मां न्ययोजयत् ॥
कवितार्किकसिंहस्य काव्यमेतद्यथामति ।
विवृणोमि महीपालनियोगबहुमानतः ॥

इत्येतत्काव्योपोद्धाते दीक्षितेन्द्रैरेवाभ्यधायि ।

## एतत्काव्यव्याख्यातृपरिचयः

इदमिदानीमेतत्काव्यव्याख्याप्रणेतॄन् श्रीमदप्पयदीक्षितेन्द्रानधिकृत्य किञ्चित्प्रस्तूयते—तुण्डीरमण्डलान्तर्गते काञ्चीनगरपरिसरगताडयप्पल्नाम्न्यग्रहारे भारद्वाजकुलतिलकस्सामशाखावलम्बी आचान्दीक्षितनामा कश्चित्सुधीमणिरासीत् । तस्यास्याचान्दीक्षितस्य संस्कृतभाषायामाचार्यदीक्षित इति व्यवहारस्स्यादिति ज्ञायते । अत एवाप्पयदीक्षितेन्द्रप्रणीते न्यायरक्षामणौ—

आसेतुबन्धतटमा च तुषारशैला-
दाचार्यदीक्षित इति प्रथिताभिधानम् ।
अद्वैतचित्सुखमहाम्बुधिमग्नभाव-
मस्मत्पितामहमशेषगुरुं प्रपद्ये ॥

इत्यभिहितमुपलभ्यते । अयमेव वक्षस्स्थलाचार्यनाम्नाऽपि व्यवह्रियते । श्रूयते किलेयं किंवदन्ती—'पुरा किल कदाचित्समाहिषिकेन विजयनगराधीश्वरेण काञ्चीवरदराजसेवार्थमागतेन सचमत्कारमेतदाचान्दीक्षितोपश्लोकितेन कृष्णराजेनायमाचान्दीक्षितो वक्षस्स्थलाचार्यनाम्ना व्यवहृतः' इति ।

तामेनां किंवदन्तीं 'यथाऽस्मत्कुलकूटस्थवक्षस्स्थलाचार्यविरचिते वरदराजवसन्तोत्सवे' इत्युक्त्वा—

'काञ्चित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् ।
वरदस्संशयापन्नो वक्षस्थलमवेक्षते ॥'

इति दीक्षितेन्द्रैश्चित्रमीमांसायामुपात्तं सन्देहालङ्कारध्वन्युदाहरणपद्यमुपोद्बलयतीव भाति । शिवानन्दयतिप्रणीताप्पयदीक्षितचरितपरिशीलनायां त्वाचान्दीक्षितस्यास्य तत्र वक्षस्थलगणपतिसूनुत्वोत्कीर्तनात्पितृनामानुषङ्गेणायं व्यवहारस्स्यादित्यप्यभ्यूहितुं शक्यते । तत्र ह्येवमुक्तम्—

श्रीमत्काञ्चीनगरनिकटे पूर्वपुण्यैकलभ्ये
श्रीमानास्तेऽडयपलमित्यग्रहारस्सुदीप्रः ।
तस्मिन् वक्षस्स्थलगणपतेश्श्रीभरद्वाजगोत्र-
प्रादुर्भूतादजनि शितधीः श्रीमदाचान्मखीन्द्रः ॥

इति ।

तमेनमाचन्दीक्षितं विजयनगराधीश्वरः कृष्णराजो गुरुमवृणोदिति —

श्रीमन्तं भगवन्तमेनमवनीनाथाधिनाथस्तदा
विद्यारण्ययतीन्द्रबोधितनिगूढार्थागमाभ्यागमः ।
श्रीविद्यामनुराजवैभवसुखप्राप्तक्षमामण्डलः
श्रीमान् कृष्णनरेश्वरो गुरुवरं वव्रे बुधाराधितम् ॥

इति तत्रैव शिवानन्दीयेऽभिहितं दृश्यते । सोऽयमाचान्दीक्षितः काञ्चन पत्नीमादौ परिणीय तस्यां चतुरः पुत्रानधिगम्य ततः श्रीवैकुण्ठाचार्यवंश्यश्रीरङ्गराजार्यदुहितरं तोताद्रयम्बानाम्नीं द्वितीयामुदुह्य तस्यामपि चतुरः पुत्रानवाप । तेष्वाद्यः श्रीरङ्गराजाध्वरी सुप्रसिद्ध इति वदन्ति । तदिदं श्रीशङ्करभाष्यभामतीकल्पतरुव्याख्याने परिमले तृतीयाध्यायतृतीयपादान्ते—

श्रीवैकुण्ठाचार्यवंशाम्बुधिहिमकिरणश्रीमदद्वैतविद्या-
चार्यश्रीरङ्गराजाह्वयविसृतयशोविश्वजिद्याजिसूनोः ।

ग्रन्थे वेदान्तकल्पद्रुवरपरिमले सर्वजिद्याजिनोऽस्मिन्
पूर्णः पादोऽजनिष्ट भ्रमरहितहिते निर्विशेषप्रधानः ॥

इत्यनेन सूचित इत्यपि विमर्शका वदन्ति । अत्र श्रीवैकुण्ठाचार्यस्य एतन्मातामहवंश्यत्वसाधकं पितामहवंश्यत्ववारकं च प्रमाणं परिचिन्तनीयम् ।

सोऽयं रङ्गराजाध्वरी कृष्णभूपोत्तरकालिकस्य बोम्मनरेन्द्रस्य सचिवो भूत्वा गतेष्वपि चत्वारिंशद्वत्सरेषु स्वस्यानपत्यतया निर्विण्णो विहाय तं राजानं चिदम्बरमधिगम्य तनुजकामनया नटराजं षड्वत्सरानाराधयंस्तदनुग्रहेण अप्पयदीक्षितेन्द्रनामानमेनं पुत्रमवापेति—

षट्शतात्रिंशदुत्तंसचतुस्साहस्रवर्षके ।
कलौ नृपस्स्वर्यातोऽथ रसा बोम्मवशाऽभवत् ॥
सोऽपि बोम्मनृपश्श्रीमद्रङ्गराजगुरूक्तितः ।
शशास वसुधामिन्द्रस्त्रिलोकीमिव सत्यतः ॥

आचत्वारिंशदायुस्तनयसुखमना मोक्षकाङ्क्षीव कामान्
त्यक्त्वाऽत्युग्रं तपस्यन् विबुधजनवचःप्रार्थ्यमानो नितान्तम् ।
स्वान्ते संभाव्य नित्यं किमपि किमपि संभ्रान्तबालग्रहार्त-
प्रायश्श्रीपुण्डरीकेश्वरमभजदसौ रङ्गराजो मखीन्द्रः ॥

षड्वत्सरेण भगवान् शशिखण्डमौलि-
स्संतुष्टधीर्निजजनानुजिघृक्षुरस्मै ।
अस्मिन् कलाभिरयमेव पतञ्जलिस्ते
पुत्रो यदोर्हरिरिवास्त्विति वाचमूचे ॥

तत्प्रसादमुपलभ्य जायया सार्धमेष निजसद्मसंगतः ।
इष्टदेवमभितर्पयन् गणैरिष्टसिद्धिमगमद्द्विजोत्तमः ॥

इति शिवानन्दीयेऽभ्यधायि । तथा तत्रैवोत्तरत्र चतुःपञ्चाशदुत्तरषट्शताधिकचतुस्सहस्रीमिते कल्यब्दे प्रमादीचवत्सरे कन्यामासि कृष्णप्रथमायामुत्तरप्रोष्ठपन्नक्षत्रे कन्यालग्नेऽप्पयदीक्षितेन्द्राणामेषामाविर्भाव इति—

वीणातत्वज्ञसङ्ख्या (४६५४) लसितकलिसमाभाक्प्रमादीचवर्षे
कन्यामासेऽथ कृष्णप्रथमातिथियुतेऽप्युत्तरप्रोष्ठपाद्भे ।
कन्यालग्नेऽद्रिकन्यापतिरमितदयाशेवधिर्वैदिकेषु
श्रीदेव्यै प्राग्यथोक्तं समजनि स समीपेऽत्र काञ्चीनगर्याः ॥

इत्यनेन श्लोकेन समग्राहि । तत्रैवोत्तरत्र 'कल्यब्दाः ४६५४, पाण्डवाब्दाः ४६५५, शकाब्दाः १४७५, विक्रमाब्दाः १६१०, कोल्लाब्दाः ७२९, कृष्णराजाब्दाः २४, कल्यादिदिनानि ७०००७३, प्रभवादि ४६ तमे प्रमादीचवत्सरे कन्यामासि ५ मे दिने सोमवासरे कृष्णप्रथमा तिथौ उत्तरप्रोष्ठपन्नक्षत्रे सात्विकवेलाचन्द्रहोरायुक्तकन्यालग्ने प्रातश्शुभमुहूर्ते वेदविहितकर्मभक्तियोगज्ञानाभ्यासशरणेषु सज्जनेषु कुमतिहतपाषण्डकोलाहलविभीतेषु अनवधिदयानिधिरद्रिकन्यापतिर्यथा प्राक्कालान्तरे श्रीपार्वत्यै शिवरहस्याख्येतिहासे भविष्यत्कथाप्रसङ्गे—

भारद्वाजकुले देवि कलौ कलुषदूषिते ।

इत्यारभ्य,

भासुराचारनिरतो भविष्ये भूसुरोऽम्बिके ।

इत्यादिवचनोक्तप्रकारेण काञ्चीनगर्याः पश्चात् समीप एव भगवान् समवातरत्' इत्येवं श्लोकस्य विवरणं कृतं दृश्यते । यद्यपीदानीं परिदृश्यमानायां डाक्टर् सामिकण्णपिळ्ळैमहाशयप्रणीतायां प्राचीनकालगणनसूचन्यां तस्मिन् प्रमादीचवत्सरे कन्यामासि पञ्चमे दिने द्वादशीतिथ्याश्लेषानक्षत्रयोरेव योगो दृश्यते, न त्वेतद्विवरणरीत्या कृष्णप्रतिपदुत्तरप्रोष्ठपदनक्षत्रयोर्योगः, तथाऽपि मूल श्लोके

वासराद्यनुल्लेखेन तस्मिन्नेव वत्सरे कन्यामासि द्वाविंशे त्रयोवशे वा दिने गणनाभेदेन तद्योगसम्भवस्यादिति स एवैषां दीक्षितेन्द्राणामाविर्भाव समयः (A.D. 22-9-1553) स्यादित्यभ्युह्यते । तथा तत्रैव दीक्षितेन्द्राविर्भाव-कालिकग्रहस्थितिरपि—

लग्ने रवीन्दुसुतयोर्मकरे च मान्दौ
मीने शशिन्यथ वृषे रविजे च राहौ ।
चापे गुरौ क्षितिसुते मिथुने तुलायां
शुक्रे शिखिन्यलिगते शुभलग्न एवम् ॥

इति श्लोकेनोपावर्णि । ततश्च—

<table>
<tr><td>चन्द्रः</td><td></td><td>राहुः<br>शनिः</td><td>कुजः</td></tr>
<tr><td></td><td colspan="2" rowspan="2">श्रीमदप्पय-<br>दीक्षित<br>जननकालिक<br>राशिकुण्डली</td><td></td></tr>
<tr><td>मान्दिः</td><td></td></tr>
<tr><td>गुरुः</td><td>केतुः</td><td>शुक्रः</td><td>लग्नं<br>रविः<br>बुधः</td></tr>
</table>

इतीदं तात्कालिकग्रहस्थित्यावेदकं चक्रं सूचितं भवति॥

एतेषां दीक्षितेन्द्राणां नामधेयं पित्रा प्रेम्णाऽर्पितं 'अप्प' इति। तदेव च द्राविडकर्णाटान्ध्रादिदेशीयव्यवहारायातेन पूज्यार्थकेन अय्यपदेन अयपदेन वा यज्ञानुष्ठाननिबन्धनेन दीक्षितपदेन च सङ्गतं सत् 'अप्पय्य

दीक्षित' इति 'अप्पयदीक्षित' इति च प्रथितामिति प्रतिभाति । नामकर्मणि तु पित्रा गणेश इत्याख्या च कृतेति—

सौहार्देन यदप्प इत्यनुदिनं पित्रार्पितं तद्धाहि--

र्नामासीदथ नामकर्मणि गणेशाख्या कृता तेन च ।

इति शिवानन्दीयोक्त्या ज्ञायते ।

त इमे दीक्षितेन्द्राः सर्ववेदोविश्वजियाजिबिरुदभूषितास्स्वपितुः श्रीरङ्गराजाध्वरिणस्सकाशादेवाधिगतसकलविद्या इति—

'महतामपि मान्यतमं विदुषां विनिवेश्य गुरुं हृदि वैश्वजितम् ।
नयसंहतिशालिनि कल्पतरौ विवृतश्चरणः प्रथमः प्रथितः' ॥
'यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्तद्दर्शनादखिलदर्शनपारभाजः ।
तं सर्ववेदसमशेषबुधाधिराजं श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि'॥ २ ॥

'सर्वविद्यालतोपघ्नपारिजातमहीरुहान् ।
महागुरून्नमस्यामि सादरं सर्ववेदसः' ॥

'शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान्'

इत्येतत्प्रणीतकल्पतरुपरिमल—न्यायरक्षामणि—शिवतत्त्वविवेक—सिद्धान्तलेश--सङ्ग्रहोक्तिभिरवसीयत इति विमर्शकाः कथयन्ति । प्रदर्शितपद्यगतगुर्वादिपदानां वेदान्तग्रन्थप्रणेतृत्वस्वतातत्वादिप्रयुक्तपूजातात्पर्येणाप्युपपत्त्या तत एवैतेषां सकलविद्याधिगतौ प्रमाणान्तरं परिचिन्तनीयम् । यतः किल शिवानन्दीये दीक्षितेन्द्राणामेषां नवम एव वयसि तातपादानां निर्याणमिति—

'नवमेऽस्य वयसि जाते ताते शीतांशुशेखरोपह्वते ।

याते च कालधर्मे' इत्यभिहितम् । तत्रैतेषां सकलविद्याधिगममात्रमुक्तं' न त्वेतद्गुरुनामधेयं तत्र निरदेशीति ।

त इमेऽप्पयदीक्षितेन्द्रा विजयनगराधीश्वरकृष्णराजतनयचिन्नबोम्मभूप-संमानिता इति समरपुङ्गवदीक्षितप्रणीते यात्राप्रबन्धे—द्वितीयाश्वासान्ते दृश्यमानेन—

कर्णः श्रीचिन्नबोम्मक्षितिपतिरभितो लम्भयन् शातकुम्भ
स्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम् ।
रेजे श्रीरङ्गराजाध्वरिवरकलशाम्भोधिरत्नप्रसूते
विद्याकल्पद्रुमस्य स्वयमिव कलयन् जातरूपालवालम् ॥

इति पद्येन ज्ञायते । तथा—

' द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभुवो वासवस्य द्विरुक्तिः ।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्
अनन्दं कोविदानां जगति विजयते श्रीनृसिंहक्षितीन्द्रः ' ॥ २ ॥
' नरसिंहमहीपाल विदुस्त्वां मकरध्वजम् ।
मार्गणास्तव सञ्जाताः कथं सुमनसोऽन्यथा ॥ २ ॥

इति चित्रमीमांसायां परिणामोत्प्रेक्षालंकारप्रकरणयोर्दर्शनात्

प्राप्तं तत्प्रापणीयं किल यदिह कियान् पूरणीयोऽस्ति नांशो
नानिष्टं वा निवर्त्यं निजविषयतया दृश्यते किञ्चिदत्र ।
किं तु व्यापारमेष प्रथयति फलसंयोजनार्थं परेषां
प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेङ्कटक्षोणिपालम् ॥

इति विधिरसायने दर्शनाच्च चिन्नबोम्मभूपाग्रजनरसिंहभूपालतत्सूनुवेङ्कट-भूमिपालयोस्समकालिका अपीति ज्ञायते ।

तथा चिन्नबोम्मभूपनिदेशात् श्रीकण्ठभाष्यशिवार्कमणिदीपिका—वेङ्कटपतिरायनियोगात्कुवलयानन्दश्च प्रणीत इति—

' भाष्यमेतदनघं विवृण्विति स्वप्नजागरणयोस्समं प्रभुः ।

चिन्नबोम्मनृपरूपभृत्स्वयं मां न्ययुङ्क्त महिलार्धविग्रहः ॥

इति शिवार्कमणिदीपिकोपोद्धाते,

'अमुं कुवलयानन्दमकरोदप्पदीक्षितः ।
नियोगाद्वेङ्कटपतेर्निरुपाधिकृपानिधेः' ॥

इति कुवलयानन्दोपसंहारे च दर्शनादवसीयते । एतेषां नरसिंहचिन्नबोम्मवेङ्कटभूपालानां समयश्च क्रैस्ताब्दीयषोडशशतकापरार्धादारभ्य सप्तदशशतकापरार्धसमाप्तिपर्यन्त इत्यैतिहासिका अभिप्रयन्ति ।

एते दीक्षितेन्द्राः तूप्पुल्ग्रामाभिजनस्य रत्नखेटदीक्षितकवेर्दुहितरं मङ्गलनायकीमुदुह्य तस्यां शङ्कराद्यानेकादशतनयानवापुरिति शिवानन्दीयेऽभ्यधायि । सिद्धान्तकौमुदीप्रौढमनोरमाशब्दकौस्तुभादिव्याकरणग्रन्थप्रणेता भट्टोजीदीक्षितनामा औत्तराहस्सुधीमणिरेतेषां दीक्षितेन्द्राणां सकाशादद्वैतविद्यामधिजग इत्यौत्तराहा वदन्ति च ।

इदमिदानीं किञ्चित्प्रासङ्गिकमभिधीयते—षाजहान्नाम्ना दिल्लीनायकेन यवनप्रभुणा पण्डितराजबिरुदसंमानितः शेषवीरेश्वरशिष्यो जगन्नाथनामा पण्डितप्रवरः शेषवीरेश्वरतातशेषकृष्णसुधीमणेस्सकाशादधिगतव्याकरणशास्त्रं शेषवीरेश्वरीयप्रक्रियाप्रकाशग्रन्थखण्डकप्रौढमनोरमादिप्रणेतारं स्वात्मानं यवनसंसर्गान्म्लेच्छेत्याधिक्षेप्तारं च भट्टोजिदीक्षितं गुरुध्रुगित्यादिना विनिन्दन् एतद्गुरुष्वेष्वप्पयदीक्षितेन्द्रेषुचामर्षभारं वहन् भट्टोजिदीक्षितीयायाः प्रौढमनोरमायाः दीक्षितेन्द्रीयकुवलयानन्दचित्रमीमांसयोश्च मनोरमाकुचमर्दनरसगङ्गाधरचित्रमीमांसाखण्डनाख्यग्रन्थैः खण्डयिताऽपि दयमानमानसैरेतैर्दीक्षितेन्द्रैः—

किं निश्शङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ ।
अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी भवतः ॥

इत्यपरवयसि काश्यां प्रतिबोधितोऽतिनिर्विण्णमानसो गङ्गालहर्या गङ्गामभिष्टूय तत्पूरेणाप्लावित ऐश्वरं पदमध्यगादिति किंवदन्ती श्रूयत इति ॥

एवमेते दीक्षितेन्द्राः निरुपमप्रतिभाप्रकर्षपरिमण्डिताश्शताधिकप्रबन्धनिर्माणेन चतुरधिकशतप्रबन्धनिर्वाहकाचार्येत्यादिविरुदविभूषिता अन्यूनां द्वासप्ततिं वत्सरान् महीमण्डलमलञ्चक्रुरिति—

'द्वासप्ततिं प्राप्य समाः प्रबन्धान् शतं व्यधादप्पयदीक्षितेन्द्रः'

इत्येतदनुजपौत्त्रनीलकण्ठदीक्षितप्रणीते शिवलीलार्णवे दर्शनात्—

'चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलास्सुकृतयश्च काश्चित्कृताः ।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किञ्चिदहमर्थये शिवपदं दिदृक्षे' परम् ॥

आभाति हाटकसभानटपादपद्मज्योतिर्मयो मनसि मे तरुणारुणोऽयम्'

इत्यैतर्दीक्षितेन्द्रैरेव स्वनिर्याणसमयेऽर्धोक्तया विरतौ बाष्पपूरितनयनैरेतत्तनयैः ॥

'नूनं जरामरणघोरपिशाचकीर्णा संसारमोहरजनी विरतिं प्रयाता'

इत्येतदुत्तरार्धमापूरितामिति प्रवादाच्चावसीयते ॥

अप्पयदीक्षितेन्द्रप्रणीताः प्रबन्धाः, तद्विभजनादिकं च—

१-२. शिखरिणीमाला—शिवोत्कर्षसाधनी शिवतत्वविवेकाख्यव्याख्यायुता शिखरिणीवृत्तकलितचतुष्षष्टिपद्यात्मिका स्तुतिः.

३-४. ब्रह्मतर्कस्तवः—शिवापकर्षबोधकवचनानामपि तत्पारम्यतात्पर्यकत्वकथनपरो वसन्ततिलकवृत्तकलितः सव्याख्यः.

५-६. आदित्यस्तवरत्नम्—सूर्यान्तर्यामिशिवस्तुतिपरं सव्याख्यम्.

७-८. शिवध्यानपद्धतिः — पौराणिकशिवध्यानक्रमनिरूपणपरा सव्याख्या.

९-१०. शिवार्चनचन्द्रिका—शिवपूजाक्रमवर्णनपरा बालचन्द्रिकाख्यव्याख्यायुता.

११-१२. पञ्चरत्नस्तवः—व्याख्यायुतः.

१३. आत्मार्पणस्तुतिः—शिवे आत्मसमर्पणवर्णनरूपा.

१४-१५. शिवानन्दलहरी—शिवस्तोत्ररूपा सव्याख्या.

१६-१७. दुर्गाचन्द्रकलास्तुतिः—शिवशक्तिस्तुतिपरा सव्याख्या.

१८-१९. श्रीकृष्णध्यानपद्धतिः — श्रीकृष्णध्यानप्रकारवर्णनपरा सव्याख्या.

२०-२१. वरदराजस्तवः—हस्तिगिरीश्वरस्य श्रीवरदराजस्य भगवतः स्तुतिपरस्सव्याख्यः.

२२. शिवमहिमकालिकास्तुतिः—शिवमाहात्म्यवर्णनपरा.

२३. अरुणाचलेश्वरस्तुतिः—अरुणगिरीश्वरस्य शिवस्य स्तवनरूपा.

२४. आपीतकुचाम्बास्तवः—दुर्गास्तुतिरूपः.

१५. शिवपूजाविधिः—संग्रहेण शिवपूजावर्णनपरः.

२६. शिवकर्णामृतम् — नारायणोत्कर्षवर्णनपराणामन्यपरत्वनिरूपणपूर्वकं शिवोत्कर्षसूचकवचनानि संगृह्य शिवाधिक्यनिरूपणपरम्.

२७. रत्नत्रयपरीक्षा.—हर्यादिशक्तीनामुपासनातारतम्यबोधिनी.

इत्येते सगुणस्तुतिपूजापर्यवसायिनः प्रबन्धाः सप्तविंशतिः (२७).

१. चित्रमीमांसा—विस्तरेणार्थालंकाराणां लक्षणादिप्रपञ्चनपरा.

" इयं चोत्प्रेक्षालंकृतिपर्यन्तैव कविना कृता '

अप्पय्यचित्रमीमांसा न मुदे कस्य मांसला ।
अनूरुरिव घर्मांशोरर्धेन्दुरिव धूर्जटेः ॥ "

इति तद्ग्रन्थान्ते दर्शनात् " इति केचिद्विमर्शकाः । इदमत्र प्रतिभाति—कुवलयानन्दे अर्थान्तरन्यासालंकारादिप्रकरणेषु ' प्रपञ्चश्चित्रमीमांसायां द्रष्टव्यः ' इत्याद्युक्तिदर्शनात् ' अप्पय्यचित्र ' इत्यादिश्लोकस्य बहुषु लिखितपुस्तकेष्व-

दर्शनात् ग्रन्थस्यास्य अर्थालंकारनिरूपणपरत्वात् अर्थचित्रमीमांसेत्येतन्नामधेयं समग्रग्रन्थानुपलम्भमात्रेण अर्थचित्रमीमांसेत्यभिमत्य केनचिच्चतुरलेखकेन तत्पद्यं कृतं स्यादिति॥

२. वृत्तिवार्तिकम्—अभिधादिवृत्तित्रितयमध्ये अभिधालक्षणाख्यवृत्तिद्वयविचारमात्रवर्णनपर्यन्तमिदमुपलभ्यते.

३. कुवलयानन्दः—उपमाद्यर्थालंकारलक्षणादिप्रदर्शनपरः.

इतीदं अलंकारशास्त्रप्रबन्धत्रितयम् (३).

१. नक्षत्रवादावली—व्याकरणशास्त्रसम्बन्धिसप्तविंशतिविप्रतिपत्तिविषयविचारपरा.

इतिः पाणिनीयव्याकरणशास्त्रप्रबन्ध एकः. (१)

१. प्राकृतमणिदीपः—वाल्मीकीयप्राकृतव्याकरणसूत्रवृत्तिरूपा.

इत्ययं प्राकृतव्याकरणप्रबन्ध एकः. (१)

१-२ नामसंग्रहमाला—कविसमयानुरोधिपदसंग्रहरूपा सव्याख्या.

इतीदं निघण्टुप्रबन्धद्वितयम् (२)

१. चित्रपुटः—अविदितप्रतिपाद्यविषयको दुर्लभः प्रबन्धः एकः (१).

१-२. विधिरसायनम्—मीमांसाभिमतविधित्रैविध्यविचारपरं सुखोपयोजन्याख्यव्याख्यायुतं पद्यात्मकम्.

३. पूर्वमीमांसानक्षत्रवादावली—पूर्वमीमांसागतसप्तविंशतिविप्रतिपत्तिविषयविचारपरा.

४. उपक्रमपराक्रमः—विधिवाक्यार्थविषये उपक्रमस्यैव प्राबल्यनिर्णयपरः.

इतीदं पूर्वमीमांसाप्रबन्धचतुष्टयम् (४).

१. वेदान्तवादनक्षत्रवादावली — उत्तरमीमांसानुबन्धिसप्तविंशति-विप्रतिपत्तिविषयविचारपरा.

२. कल्पतरुपरिमलः — श्रीशाङ्करब्रह्मसूत्रभाष्यव्याख्याभूतवाचस्पतिप्रणीतभामत्या व्याख्याभूतां अमलानन्दप्रणीतां कल्पतरुनाम्नीं टीकामधिकृत्य तद्विवरणाय प्रवृत्तोऽयं प्रबन्धः.

३. न्यायरक्षामणिः — श्रीशाङ्करभाष्यानुरोधिब्रह्मसूत्रार्थनिर्णयपरः (प्रथमाध्यायमात्रं).

४. नयमञ्जरी — अद्वैतवेदान्तानुबन्धिविचारपरा नाममात्रत उपलभ्यमाना.

५. सिद्धान्तलेशसंग्रहः — अद्वैतसिद्धान्तानुबन्धिनानामतसंग्रहपरः.

इत्येते अद्वैतसिद्धान्तप्रबन्धाः पञ्च (५).

१. चतुर्मतसारार्थसंग्रहः — श्रीशङ्कराचार्य - श्रीकण्ठाचार्यश्रीरामानुजाचार्य श्रीमध्वाचार्याणामाशयसंग्रहपरश्लोकसप्तत्यात्मकः प्रबन्ध एकः (१).

१. शिवार्कमणिदीपिका — ब्रह्मसूत्रश्रीकण्ठभाष्यविवरणरूपा.

२. शिवाद्वैतनिर्णयः — शिवाद्वैतस्थापनपरः.

इति सगुणशिवाद्वैतप्रबन्धद्वितयम् (२).

१. रामायणतात्पर्यसंग्रहः — रामायणवचनतात्पर्यप्रकाशनपूर्वकं शिवोत्कर्षप्रतिपादनपरः.

२. भारततात्पर्यसंग्रहः — भारतवचनतात्पर्यसंग्रहेण शिवोत्कर्षस्थापनपरः.

इतीदं पौराणिकतात्पर्यसंग्रहरूपं प्रबन्धद्वयं (२)

१. नयमयूखमालिका — श्रीमद्रामानुजसिद्धान्तानुसारिब्रह्मसूत्राधिकरणार्थप्रकाशनपरा.

इति विशिष्टाद्वैतप्रबन्ध एकः (१).

१. न्यायमुक्तावली—श्रीमदानन्दतीर्थीयसिद्धान्तप्रकाशनपरा.

इति द्वैतसिद्धान्तप्रबन्धः (१).

१-२. मध्वतन्त्रमुखमर्दनम्—श्रीमध्वाचार्यप्रणीतब्रह्मसूत्रभाष्य-गतादिमपञ्चाधिकरणीभञ्जनरूपं मध्वमतविध्वंसनाख्यव्याख्योपेतम्.

इतीदं द्वैतमतखण्डनरूपं प्रबन्धद्वितयम् (२).

१. यादवाभ्युदयव्याख्या—श्रीमद्वेदान्ताचार्यप्रणीतयादवाभ्युदय-काव्यव्याख्या.

इति काव्यव्याख्यारूपः प्रबन्धः एकः (१).

इत्याहत्य (५४) चतुःपञ्चाशत्प्रबन्धा दीक्षितेन्द्रप्रणीताः प्रायशो ग्रन्थतः कतिचिन्नामतश्चोपलभ्यन्ते । अन्ये च बहवः प्रबन्धा दीक्षितैः प्रणीता इत्येतद्धिरुदपरिशीलनादेव सुव्यक्तमिति ॥

## एतद्व्याख्यापरिचयः.

श्रीमदप्पयदीक्षितेन्द्रप्रणीतायामस्यां यादवाभ्युदयव्याख्यायां मूलानुबन्धितत्तत्प्रयोगविशेषाणां तत्तदनुशासनविशेषप्रदर्शनपूर्वकं व्युत्पत्तिं प्रकाश्य तत्तदपेक्षितप्रमाणोपन्यसनपूर्वकं नातिविस्तृतया नात्यन्तसंगृहीतया च सुललितयैव शब्दधोरण्या पदार्थवाक्यार्थादिकमुपवर्ण्यत इति मूलभूतकाव्यरत्नस्य सुषुमाभिवर्धकसौवर्णवदुज्जृम्भमाणा सुसमीचीनेयं व्याख्येत्येतत्परिशीलयितॄणामपाणिपिहितमिति नात्राधिकं वक्तव्यमवशिष्यते । परं तु क्वचित्क्वचित्प्रतीयमानोऽन्यथाभावो लेखकप्रमादाशयभेदादिसमुपनत इत्येव विभाव्यते । तदिदं दिङ्मात्रमत्र प्रस्तूयते—

यथा चतुर्दशे सर्गे श्रीकृष्णस्याष्टमहिषीविभूत्यनुभववर्णनावसरे—

'अखण्डिताशक्तिभिरेकवृत्तितः' (यादवाभ्युदय—१४-७६)

इत्यस्मिन् श्लोके एकवृत्तित इत्यस्य व्याख्यानावसरे—" एकस्य सकललोक-

मुख्यस्य स्वस्य वरणात्परिग्रहाद्धेतोः 'वृञ् वरणे' इति धातोर्वृत्तिशब्दो वरणवाची" इति व्याख्याग्रन्थ उपलभ्यते। अत्र वृञ्धातोः क्तिनि तु वृतिरित्येकतकारघटितं रूपं भवति, न द्वितकारघटितम्। अतोऽत्र लेखकप्रमादेन 'वृतु वरणे' इत्यस्य स्थाने 'वृञ् वरणे' इति पतितं स्यादिति विभाव्यते॥

एवं सप्तदशे सर्गे—'अष्टभिश्च हरितामधीश्वरैः' (यादवाभ्युदये १७–६९) इत्यस्मिन् श्लोके अष्टभिरितिरूपसाधनाय "अष्टाभ्य औशिति दीर्घोच्चारणाज् ज्ञापकात् 'अष्टन आ विभक्तौ' इत्यात्वं वैकल्पिकम्" इति व्याख्याग्रन्थ उपलभ्यते। अत्र 'अष्टन आविभक्तौ' इत्यस्य वैकल्पिकत्वकल्पनाभावेऽप्यष्टाभ्य औशिति दीर्घोच्चारणस्यासाङ्गत्याभावेन अष्टाभ्य इति दीर्घोच्चारणस्य आत्ववैकल्पिकत्वकल्पकत्वायोगात्, अष्टनो दीर्घस्य नित्यत्वे 'अष्टनो दीर्घात्' इत्यत्रत्यदीर्घग्रहणमव्यावर्तकं स्यादिति तस्यैवात्ववैकल्पिकत्वज्ञापकत्वसम्भवाच्चात्र 'अष्टनो दीर्घादिति दीर्घग्रहणात्' इत्यस्य स्थाने 'अष्टाभ्य औशिति दीर्घग्रहणात्' इति लेखकप्रमादेन पतितमित्याकल्यते॥

तथा—'त्वत्पदैकदृढभक्तिरूपया' (यादवाभ्युदय–१७–१००) इति श्लोकव्याख्यायां दृढभक्तिशब्दसाधनावसरे "दृढशब्दस्य स्त्रीत्वविवक्षायां भक्तिशब्दस्य प्रियादिपाठेन पुंवद्भावप्रतिषेधात् दृढाभक्तीति भाव्यम्, इह तु भजनस्य दार्ढ्यमात्रं विवक्षितं, न स्त्रीत्वमिति साधुता" इति ग्रन्थो दृश्यते। अनेन चात्र दृढभक्तिशब्दस्य कर्मधारयत्वेऽपि भक्तिशब्दस्य प्रियादिपठिततया पुंवद्भावविधौ अपूरणीप्रियादिष्वित्युक्तया पुंवद्भावो न स्यादिति पूर्वपदे स्त्रीत्वाविवक्षया साधुत्वमास्थेयमिति व्याख्यात्राशयः प्रतीयते। सिद्धान्तकौमुद्यां तु 'पुंवत्कर्मधारय' इत्यादिसूत्रे 'पूरणीप्रियादिष्वप्राप्तः पुंवद्भावोऽत्र विधीयते' इत्युक्तेः भक्त्याद्युत्तरपदकेऽपि कर्मधारये पूर्वपदे स्त्रीत्वविवक्षाया-

मपि 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावविधानादेव साधुत्वमिति भट्टोजिदीक्षितादयोऽभिप्रयन्ति ॥

तथा—त्रयोदशे सर्गे श्रीकृष्णपरिगृहीतपाणिकरुक्मिणीवर्णनावसरे—

प्रियेण सा तेन गृहीतहस्ता तद्वक्त्रदिव्याम्बुजषट्पदेन ।

(यादवाभ्युदये १३–२१)

विलोचनेन व्यवृणोत्सखीभ्यः कृतार्थतां क्षीबदशोल्बणेन ॥

इति श्लोके तद्वक्त्रेत्यादिविशेषणगततत्पदस्य रुक्मिणीपरतामभिमत्य तद्घटितविशेषणस्य असंनिहितेऽपि प्रियपदार्थे परस्परानुरागसूचनसम्भवाभिप्रायेणान्वयमभिप्रेत्य व्याख्यातम् । अत्र 'तेन गृहीतहस्ता तद्वक्त्र' इत्यादि श्लोकानुपूर्वीपरिशीलनायां तत्पदस्य श्रीकृष्णपरत्व—प्रतीत्या तद्घटितविशेषणस्य संनिहित एव विलोचनपदार्थेऽन्वये सति प्रियेण तेन गृहीतहस्ता सा रुक्मिणी क्षीबदशोल्बणेन तद्वक्त्रदिव्याम्बुजषट्पदेन तस्य कृष्णस्य सम्बन्धि यद्दिव्यं मुखाम्बुजं तस्य भ्रमरभूतेन भ्रमरवत्तत्र प्रसक्तेन विलोचनेनात्मीयेन नयनेन सखीभ्यः स्वस्य कृतार्थतां व्यवृणोदित्यपि मूलाशयो भवितुमर्हति ॥

तथा—अष्टादशे सर्गे वामनाश्रमवर्णनावसरे—

अत्र स्थितं श्रान्तिजुषां मुनीनां छायालकृष्णाजिनपल्लवेन ।
वैरोचनेर्दानजलावसेकाद्वर्धिष्णुना वामनपादपेन ॥

(यादवाभ्युदये—१८–५७)

इति श्लोके 'छायालः कृष्णाजिनस्य पल्लवो विस्तारो यस्य तेन' इत्यादिना विवरणं कृतं दृश्यते । अत्र व्यधिकरणबहुव्रीहिमाश्रित्य विस्तारार्थकं पल्लवशब्दमन्विष्यार्थवर्णने कृष्णाजिनवत्पादपस्य भूयःप्रसिद्धिविरहात् मूले प्रसिद्धविस्तारार्थकपदानि परित्यज्य किसलयार्थप्रसिद्धपल्लवपदप्रयोगात् पल्ल-

वितपादपे नीरन्ध्रशीतलच्छायाविशेषोपलब्ध्या छायालविशेषणस्वारस्यसम्भवात् उत्तरत्र वामनस्य पादपत्वरूपणेन तदानुगुण्याच्चात्र वामनीयकृष्णाजिनस्य पल्लवत्वरूपणमुररीकृत्य छायालं कृष्णाजिनमेव पल्लवं यस्य तेनेति समानाधिकरणबहुव्रीह्यभिप्रायेणाप्यर्थवर्णनं कविहृदयङ्गमं स्यादिति प्रतिभाति । एवं तत्रैवोत्तरत्र वामनाश्रमपरिसरगताश्रमवर्णनावसरे—

तमो निगीर्णं सकृदेव पुंसामासीदतामाश्रमहव्यवाहाः ।
इहौषधाख्यानि हवींषि भुक्त्वा धूमोपलक्ष्यं ध्रुवमुद्वमन्ति ॥

(यादवाभ्युदये १८—५९)

इति श्लोकव्याख्यायां 'बहु युगपन्निगीर्णवतामुद्गारो भवतीति भावः' इति ग्रन्थेन हव्यवाहानुष्ठिताधिकाहारोद्वमनतात्पर्येणायं श्लोको व्याकृतः । यथाश्रुतमूलस्वारस्यपरिशीलनायां त्वत्र हव्यवाहैस्सकृदासीदत्पुरुषसम्बन्धिनस्तमसो भुक्तस्योद्वमनकर्मताप्रतीत्या हवीरूपौषधभोजनस्य तमउद्वमनसाधनताप्रतीत्या च लोकपरिदृश्यमानौषधप्रयोगाधीनदुष्टाहारोद्वमनमिवात्रापि हव्यवाहैर्भुक्तमासीदत्पुरुषसम्बन्धितम एव हवीरूपौषधभोजनेन धूममिषादुद्वान्तमित्यपि मूलाशयः प्रतीयत इति । एवमाशयान्तरवर्णनादिकं तत्रतत्रैव टिप्पण्यामधोभागे संगृह्य निर्दिष्टं द्रष्टव्यमिति विस्तरभिया विरम्यते ॥

## उपसंहारः

एतद्व्याख्यापरिभूषितमिदं काव्यरत्नं महीशूरपुर्यामान्ध्राक्षरैः श्रीरङ्गनगरगतवाणीविलासमुद्राशालायां देवनागरलिपिभिश्चादितो द्वादशसर्गान्तमेव मुद्रितमुपलभ्यते । तत उपरितनं तु त्रयोदशसर्गप्रभृति आग्रन्थसमाप्ति नाद्यावधि कुत्रापि सव्याख्यमिदं मुद्रणपथं नीतमिति परिचिन्त्य अमुद्रितप्राचीनहृदयङ्गमग्रन्थमुद्रापणैदम्पर्येण प्रवृत्तायामस्यां महीशूरविश्वविद्यालयानुबन्धिन्यां

महीशूरराजकीयप्राच्यकोशशालायां तत इतोऽनेका मातृकास्समुच्चित्य तदवलम्बेनाधुनाऽस्मिन् सम्पुटे त्रयोदशसर्गप्रभृत्यष्टादशसर्गान्तो भागस्संशोध्य अकारादिवर्णक्रमेण मूलगतश्लोकपादानां व्याख्योपात्तग्रन्थतत्कर्तृनामधेयानां व्याख्यासाधितमूलगतप्रयोगविशेषाणां च. सूचनीभिस्साकं परिष्कृत्य तत्रतत्र टिप्पण्या पाठान्तरनिर्देशेन च सार्धं संमुद्रय प्राकाशि ॥

एतद्ग्रन्थसंशोधनाय महीशूरनगरस्थश्रीमत्परकालमठाधिकारिभिः महीशूरराजकीयसरस्वतीभाण्डाराधिकारिभिः तथा विद्वत्प्रकाण्डैः श्री-उ-नावल्पाक्कं नरसिंहाचार्यवर्यैश्चादर्शपुस्तकप्रदानेन सुबहूपकृतमिति तेभ्यस्सुबहून् धन्यवादानर्पयामः ॥

एतत्संपुटगतभागस्य संशोधनायावलम्बिताः कोशाः

(१) एतत्कोशागारीयः—No. 1193 ग्रन्थलिपिमयः ८–१४ सर्गान्तस्तालकोशोऽशुद्धप्रायः (क) संज्ञितः ॥

(२) एतत्कोशागारीयः—No. 3856 ग्रन्थलिपिमयः १०–१५ सर्गान्तस्तालकोशो नात्यशुद्धः (ख) संज्ञितः ॥

(३) एतत्कोशागारीयः—No. 1194 ग्रन्थलिपिमयः १३–१८ सर्गान्तस्तालकोशोऽशुद्धः (ग) संज्ञितः ॥

(४) एतत्कोशागारीयः—No. A 174 आन्ध्रलिपिमयः १३–२४ सर्गान्तःकाकलकोशो नात्यशुद्धः (घ) संज्ञितः ॥

(५) एतत्कोशागारीयः—No. 3099 ग्रन्थलिपिमयः १५–१८ सर्गान्तो जीर्णस्तालकोशो नातिशुद्धः (ङ) संज्ञितः ॥

(६) नावल्पाक्कं विद्वत्प्रवरैः श्रीनरसिंहार्यैः प्रेषितः १३, १४, १६, १७, १८ सर्गयुतो ग्रन्थलिपिमयः क्वचित्क्वचिच्छोधितस्तालकोशो (अ) संज्ञितः ॥

(७) महीशूरनगरस्थश्रीपरकालमठीयः ग्रन्थलिपिमयः १३–२४ सर्गान्तस्तालकोशो नात्यशुद्धः (ट) संज्ञितः ॥

(८) मैसूरु सरस्वतीभाण्डारीयः No. 564 आन्ध्राक्षरमयस्तालकोशः १–२४ सर्गान्तो मूलमात्रयुतः (ज्ञ) संज्ञितः ॥

(९) श्रीमदहीन्द्रनगरे ग्रन्थलिपिमुद्रितः १३–२४ सर्गान्तो मूलमात्रयुतः श्रीपरकालमठीयः (ग्र–मु) संज्ञितः ॥

(१०) काञ्च्यां श्रीनिगमान्तमहादेशिकग्रन्थमालायां देवनागराक्षरैर्मुद्रितो मूलमात्रयुतः (दे–मु) संज्ञितः ॥

इत्येतत्कोशदशकमवलम्ब्य यथामति संशोध्य मुद्रापितेऽस्मिन् ग्रन्थे मानुषशेमुषीसुलभेनानवधानेन सीसकाक्षरयोजकादिदोषेण च सम्भावितान् प्रमादान् क्षमन्तां, मोदन्तां च गुणग्राहिणो विपश्चितस्सहृदया इति सर्वमनाविलम् ॥

जयतु यदुवंशकेतुर्जयतु च वेदान्तदेशिकी वाणी ।
तदुभयमननविभून्ना तृप्तस्वान्ता जयन्तु भुवि सन्तः ॥

देशोऽयं क्षोभदूरो भवतु जलमुचस्सन्तु काले सुवर्षाः
क्षोणी सस्यैस्समृद्धा भवतु सुरुचिरा नीरुजस्सन्तु लोकाः ।
विद्या प्रज्ञा गरिष्ठा जयतु बुधगणैस्सेव्यमाना नितान्तं
जीयादाचन्द्रतारं जयपदमहितश्चामभूमीपतीन्द्रः ॥

इति सप्रश्रयं प्रार्थयते
सहृदयविद्वद्वशंवदः

मैसूरु,
१०–९–४४.

तिरु. तिरु. श्रीनिवासगोपालाचार्यः.
महीशूरपुरी राजकीयप्राच्यकोशालयपण्डितः.

# यादवाभ्युदये त्रयोदशाद्यष्टादशसर्गान्तभागगतविषयाणां सूचनी

---

## त्रयोदशे सर्गे रुक्मिणीपरिणयवर्णनपरे (१०९ श्लो).

पृ-१-६२.

१. रुक्मिणीहरणाय भीष्मकनगरीं समुपागतस्य श्रीकृष्णस्य शचीदेव्यालयाद्विनिर्गताया रुक्मिण्याश्च परस्परसानुरागावलोकनरसानुभववर्णनम्. (श्लो. १-१९).

२. रथारोपणाय श्रीकृष्णपरिगृहीतहस्ताया रुक्मिण्या आनन्दातिरेकजनितसात्त्विकभावादिवर्णनम् (श्लो. २०-२४).

३. श्रीकृष्णरुक्मिणीरूपपरस्परानुगुणमिथुनस्य रुक्मिणीसखीभिस्सादरावलोकनवर्णनम् (श्लो. २५-२६).

४. श्रीकृष्णेन जाग्रत्यपि राजलोके रुक्मिण्या हस्तग्रहणपूर्वकमात्मरथारोपणम् (श्लो. २७-२८).

५. रथारूढयोर्व्रजतोः श्रीकृष्णरुक्मिण्योः शोभाविशेषस्य तादात्विकतन्मानसाध्यवसायस्य च वर्णनम् (श्लो. २९-३३).

६. श्रीकृष्णेन स्वानुद्रुतशिशुपालरुक्म्यादिपरिभवनपूर्वकं द्वारकां प्रत्यागमनम् (श्लो. ३४-४०).

७. द्वारकां प्रविशता श्रीकृष्णेन द्वारकालङ्कारोपवर्णनपूर्वकं सात्यकिप्रभृत्यानीतोपायनपरिग्रहस्य वर्णनम् (श्लो. ४१-४३).

८. द्वारकायां राजवीथ्या राजसदनं प्रयास्यतोः श्रीकृष्णरुक्मिण्योर्दर्शनत्वरया समागतानां पौरनारीणां विलासचेष्टादिवर्णनम् (श्लो. ४४-७१).

९. निजोपकारिकां प्रविष्टस्य श्रीकृष्णस्य देवैः शङ्खपद्मादिनिधिभिश्च माङ्गलिकोपचारोपवर्णनम् (श्लो. ७२-७४).

१०. विवाहसमयसन्निहितानां मुनिसभासत्पौरजनवन्दिवनीपकपुरोधसां सम्माननाद्युपवर्णनपूर्वकमुद्वाहमङ्गलौपयिकाक्षतारोपणकौतुकसूत्रबन्धनलाजहोमसप्तपदीवह्निपरिक्रमणाश्मास्थापनस्विष्टकृद्धोमारुन्धतीदर्शनाशीर्वचनयौतकार्पणादीनामुपवर्णनम् (श्लो. ७५-१००).

११. श्रीकृष्णरुक्मिणीनिवासभूताया द्वारकायास्समृद्धिवर्णनम् (श्लो. १०१-१०२).

१२. रुक्मिणीरूपया श्रिया समलङ्कृतस्य भगवतः श्रीकृष्णस्य शोभातिशयवर्णनपूर्वकं तस्य सकलाभिगम्यत्वसकलेष्टप्रदत्वादिवर्णनम् (श्लो. १०३-१०८).

१३. भगवतश्श्रीकृष्णस्येव रुक्मिण्याश्श्रीरूपाया नित्यौभत्यवर्णनम् (श्लो. १०९).

---

चतुर्दशे सर्गे जाम्बवतीसत्यभामादिपरिणयवर्णनपरे (श्लो. ८०)
पृ. ६३-१०८.

१. सङ्ग्रहेण स्यमन्तकोपाख्यानवर्णनम् (श्लो. १-४).

२. आत्मनो मृषाभिशस्त्यपनिनीषया स्यमन्तकमण्याहरणाय जाम्बवद्बिलमुपागतस्य श्रीकृष्णस्य जाम्बवता भल्लूकराजेन सार्धमेकविंशतिदिनपरिमितस्य नियुद्धस्योपवर्णनम् (श्लो. ५-१६).

३. श्रीकृष्णभुजबलपीडितेन क्रमात्परिक्षीणशारीरबलेन श्रीकृष्णं च भगवन्तं दाशरथिमेव प्रत्यभिजानता स्वापराधक्षमाभ्यर्थनपूर्वकमभिष्टुवता जाम्बवता श्रीकृष्णाय स्यमन्तकमणेः स्वात्मजाया जाम्बवत्याश्च प्रदानस्य तदुद्वाहस्य चोपवर्णनम् (श्लो. १७-५९).

४. आत्मनः श्वशुरभूतस्य जाम्बवतश्शुभां गतिमनुगृह्य जाम्बवत्या प्रियया सह द्वारकां समागतेन श्रीकृष्णेन सत्राजिताय स्यमन्तकमणिमर्पयित्वाऽऽत्मनो मृषाभिशस्तेश्शमनम् (श्लो. ६०-६९).

५. मृषाभिशंसनापवादपरिजिहीर्षया सत्राजितेन प्रदत्तां सत्यभामाह्वयां तत्पुत्रीं प्रियां परिगृह्य अन्याश्च पञ्च महिषीरुदूढवता श्रीकृष्णेन ताभिरष्टभिः पट्टमहिषीभिस्सह विभूतिवैभवानुभवस्य वर्णनम् (श्लो. ७०-८०).

---

पञ्चदशे सर्गे शिशुपालवधवर्णनपरे (श्लो. १३५).
पृ. १०९-१८३.

१. आत्ममनीषितगानपूर्वकं सत्यलोकाद्द्वारकामुपागतेन नारद-

महर्षिणा श्रीकृष्णाभिष्टवनपूर्वकं तत्सन्निधौ शिशुपालसंहारावश्यकतां विनिवेदितवता तत्कृतार्हणेन स्वलोकं प्रत्यागमनम् (श्लो. १–२९).

२. युधिष्ठिरसमाहूतस्य तदीयराजसूययज्ञशालामुपागतस्य भगवतः श्रीकृष्णस्य युधिष्ठिराद्यनुमत्या अग्रपूजनाय प्रवृत्ते सति सहदेवे तन्मूर्धनि सञ्जातायाः पुष्पवृष्टेर्वर्णनम् (३०–४०).

३. श्रीकृष्णाग्रपूजनवार्ताश्रवणकुपितशिशुपालविकत्थनमसहमानेन श्रीमता गाङ्गेयेन श्रीकृष्णमहिमानुवर्णनपूर्वकं तदग्रपूजाविरोधिशिशुपालनिधनावश्यंभावसूचनपूर्वकं च श्रीकृष्णाग्रपूजाया अवश्यकर्तव्यत्वप्रशंसनम् (श्लो. ४१–७२).

४. श्रीकृष्णाग्रपूजाविरोधिनं तत्प्रशंसाश्रवणकुपितं च शिशुपालं हन्तुकामान् भीमादींस्तस्य कृष्णैकवध्यत्वोक्तिपुरस्सरं निवार्य श्रीकृष्णपूजनाय प्रचोदयमाने सति गाङ्गेये तदनुमोदनाय सन्निहिते नारदे च नर्तनपूर्वकं श्रीकृष्णं गायति सति सहदेवेन श्रीकृष्णाग्रपूजाया विधानम् (श्लो. ७३–९५).

५. श्रीकृष्णाग्रपूजनदर्शनकुपितस्य पाण्डवगाङ्गेयादीन्विगर्हमाणस्य शिशुपालस्य कुपिताकृतिवर्णनपूर्वकं तस्य श्रीकृष्णं प्रति युद्धायाभिनिर्याणवर्णनम् (श्लो. ९६–११०).

६. श्रीकृष्णशिशुपालयोर्युद्धाभिवर्णनपूर्वकं श्रीकृष्णप्रहितचक्रायुधेन निकृत्तशिरसस्तस्य शिशुपालस्य मुक्त्यवाप्तिवर्णनम् (श्लो.१११–१३२).

७. सदा द्विषतोऽपि शिशुपालस्य स्वानुस्मरणसुकृतसम्पादनेन मुक्तिप्रदातुर्भगवतो दयायाः प्रशंसनम् (श्लो. १३३).

---

षोडशो सर्गो नरकासुरवधवर्णनपरः (श्लो. १४७).

पृ. १८४–२३६

१. द्वारकां प्रत्यागच्छतः पुरन्दराधिष्ठितस्य ऐरावतस्य वर्णनम् (श्लो. १–२०).

२. श्रीकृष्णसदनमुपागतेन गृहीतसत्कारेण पुरन्दरेण नरकासुरपराक्रमवर्णनपूर्वकं तद्बाधापनोदनाय श्रीकृष्णसन्निधौ तद्वधाभ्यर्थनम् (श्लो. २१–४९).

३. पुरन्दराभयदानपूर्वकं श्रीकृष्णेन स्मृतस्य सद्यस्समागच्छतो वैनतेयस्य वर्णनम् (श्लो. ५०–६९).

४. निजविरहमसहमानया सत्यभामया सह वैनतेयमधिरुह्य चक्राग्निना दुर्गतत्पालकदाहपूर्वकं प्राग्जोतिषाह्वयं नरकासुरपुरमधिगतेन श्रीकृष्णेन नरकासुरानुगदानवनिषूदनपूर्वकं चक्रायुधेन नरकासुरशिरोलवनम् (श्लो. ७०–१०८).

५. नरकासुरापहृतादितिदेवीकुण्डलोपहरणपूर्वकं निषूदितस्य स्वतनयस्य शुभगतिं प्रार्थयमानाया आत्मानं च बहुधाऽभिष्टुवत्या भूदेव्याः श्रीकृष्णेन परिसान्त्वितायाः स्वावासं प्रति गमनम् (श्लो. १०९–१३२).

६. नरकान्तःपुरनिरुद्धमात्मानं कामयमानं षोडशस्त्रीसहस्रं परिगृह्य द्वारकां च प्रस्थाप्य अदितिदेव्यै कुण्डलार्पणाय देवानां प्रीणनाय च सत्यभामया सह गरुडमारूढेन श्रीकृष्णेन देवलोकं प्रति प्रस्थानम् (श्लो. १३३–१४७).

---

सप्तदशो सर्गो पारिजातहरणवर्णनपरे (श्लो. १३५)
पृ. २३७–३०५.

१. सत्यभामया सह वैनतेयमधिरुह्य नाकलोकमुपागतस्य नरकासुराहृतकुण्डलद्वयमदितिदेव्यै समर्पितवतो वासवादिपरिकलिताईणस्य भगवतश्श्रीकृष्णस्य भूलोकं प्रति प्रस्थानम् (श्लो. १–८).

२. भूलोकं प्रति प्रस्थितेन मध्येमार्गं सत्यभामां प्रति नयनपथगतस्य पुरन्दरोद्यानस्य नन्दनस्य तद्गततमालवाटिकायास्तत्रत्यपुरुहूतवापिकायास्तत्परिसरवर्तिनो मन्दारादिचतुर्विधदिव्यतरुपरिवृतस्य पारिजाताख्यदिव्यमहीरुहस्य चाभिवर्णनम् (श्लो. ९–३९).

३. सत्यभामेच्छया पारिजाताख्यं दिव्यद्रुमं द्वारकां नेतुकामस्य श्रीकृष्णस्य निदेशाद्गरुडेन तदुत्क्षेपपूर्वकं स्वपक्षपङ्क्तौ स्थापनम् (श्लो. ४०–४५).

४. विदितपारिजातहरणोदन्तेन आग्रहग्रहगृहीतेन देवसैन्यपरिवृतेन ऐरावतमधिरूढेन शतमन्युना सह समराय श्रीकृष्णेनाभिनिर्याणम् (श्लो. ४६-५०).

५. वज्रिप्रयुक्तशरगणसमाहतेनात्युग्ररूपधारिणा गरुडेन परिभूतेषु सत्सु देवेषु वह्न्यादिदिशापालेष्वपि श्रीकृष्णप्रहितशराभिघाता-दैन्यमापन्नेषु अधिगतधृतिना वज्रधारिणा शतधृतिना सह चक्रधारिणः श्रीकृष्णस्य युद्धवर्णनम् (श्लो. ५१-७६).

६. श्रीकृष्णपराजितेन भग्नदर्पेण सत्यभामासापहासदृष्टिवीक्षितेन विलज्जमानेन अधिगतसात्त्विकभावेन प्रतिबुद्धेनात्मानमेव विगर्हमाणेन सङ्क्रन्दनेन शरणगमनपुरस्सरं भगवतश्श्रीकृष्णस्याभिष्टवनम् (श्लो. ७७-१२०).

७. वासवाभिष्टुतेन देवानामभयं स्वायुधबलैश्वर्यादिकं कालान्तरे पारिजातप्रतिनिवर्तनं चानुजानता पक्षीन्द्रवाहनेन श्रीकृष्णेन द्वारकां प्रति प्रस्थानम् (श्लो. १२१-१३५).

---

अष्टादशे सर्गे देवलोकद्वारकामध्यदृश्यमानमेर्वादिवर्णनपरे (श्लो.१२६)
पृ. ३०६-३७६.

१. आरूढताक्ष्र्येण द्वारकां प्रति प्रस्थितेन श्रीकृष्णेन सत्यभामां प्रति मध्येमार्गं दृश्यमानस्य मेरोर्वर्णनम् (श्लो. १-८).

२. मेरुपार्श्ववृत्तिशीतार्तक्रौञ्चमाल्यवत्प्रभृतिकेसराख्यशैलपङ्क्तिवर्णनपूर्वकं इलावृतकिंपुरुषादीनां भूप्रदेशविशेषाणां वर्षाणामुपवर्णनम् (श्लो. ९-१४).

३. यथाश्रीकृष्णमनीषितं विहायसि गच्छतो गरुडस्य गतिविशेषवर्णनम् (श्लो. १५-१८).

४. कैलासशैलवर्णनम् (श्लो. १९-२३).

५. कुबेरराजधान्या अलकाया मानससरसः शोणिताख्यबाणासुरनगरस्य क्रौञ्चमन्दरगिर्योश्च वर्णनम् (श्लो. २४-३२).

६. पुरारिक्रीडावनसहितस्य हिमवद्गिरेर्वर्णनम् (श्लो. ३३-३७).

७. हैमवत्या गङ्गाया वर्णनम् (श्लो. ३८-५२).

८. नरनारायणतपोवनभूतस्य बदर्याश्रमस्य वर्णनम् (श्लो. ५३-५५).

९. बदर्याश्रमादाग्नेय्यां स्थितस्य वामनाश्रमस्य वर्णनम् (श्लो. ५६-५७).

१०. वामनाश्रमपरिसरवृत्तिमुन्याश्रमाणां वर्णनम् (श्लो. ५८–६१).

११. श्रीकृष्णगुरोस्सांदीपिनेराश्रमस्य वर्णनम् (श्लो. ६२).

१२. आर्यावर्तकुरुक्षेत्रयोर्वर्णनम् (श्लो. ६३-६४).

१३. अयोध्यावर्णनम् (श्लो. ६५.)

१४. कलिन्दशैलस्य तत्प्रभूताया यमुनानद्याश्च वर्णनम् (श्लो. ६६-७०).

१५. गरुडवेगवर्णनपूर्वकं पश्चिमाम्बुधिपर्यन्ताया भूमेस्सौभाग्यवर्णनम् (श्लो. ७१–७४).

१६. शरन्मेघशुकश्रेणीसरिदादीनामुपवर्णनम् (श्लो. ७–७९).

१७. वेलावनवर्णनपूर्वकं समुद्रस्य वर्णनम् (श्लो. ८०–११२).

१८. श्रीकृष्णेन सत्यभामया सह द्वारकामागच्छन्तं जयशालिनमात्मानं दिदृक्षया प्रत्युद्गन्तुकामानां पौरनरनारीणां वर्णनपूर्वकं राजसौधादिसमलङ्कृतायां द्वारकानगर्या वर्णनम् (श्लो. ११३–१२९).

१९. सप्रेमदृष्टिपातं पौरजनैरुद्वीक्षितेन सत्यभामया सह वैनतेयादवरुह्य सुरतरुसमीराकृष्टमधुकरमुखरितां द्वारकामधिगत्य समलङ्कृतनिजसौधेन विदितानिरुद्धबन्धनवृत्तान्तेन अनिरुद्धरोधकबाणासुरजिगीषया श्वस्सेनाप्रस्थानमादिष्टवता श्रीकृष्णेन निजविरहव्याकुलिताभिः प्रेयसीभिस्सह सुखेन रात्रेरतिवाहनम् (श्लो. १३०–१३६).

---

सङ्गेन अकृत्रिमाभिलाषेण निशामयन्ती पश्यन्ती निमेषैः त्यक्ता अपरा वनिता चित्राङ्गनानां चित्रलिखितस्त्रीणां सुरयोषितां च अन्वकार्षीत् निर्निमेषतया अनुकरणं कृतवती ॥ ५८ ॥

> समीक्षितस्यापि सहत्वसङ्गा-
> दुष्प्रापलोभादपि दूयमाना ।
> गलद्भिरन्या वलयप्रसूनै-
> रभ्यर्चनामातनुतेव शौरेः ॥ ५९ ॥

**समीक्षितस्येति**—समीक्षितस्य सम्यक् दृष्टस्यापि कृष्णस्य, अपिशब्देन तावता अतृप्तिं द्योतयति, सहत्वसङ्गात् सहत्वे सहभावे सदा समीक्षणार्थे अविश्लेषे अभिलाषात् दुष्प्रापलोभात् दुष्प्रापे कृच्छ्रेण महता तपसा प्राप्तव्ये तदुपभोग लोभादपि दूयमाना खिद्यमाना अन्या गलद्भिः तद्विश्लेषणशङ्कया तदैव च्यवमानैः वलयैरेव प्रसूनैः शौरेः अभ्यर्चनां आतनुतेव अकरोदिव, स्वाभिलषितसिद्ध्यर्थमिति भावः ॥ ५९ ॥

> समानकान्त्या प्रियया समेते
> दृष्टे जगद्धातरि जातरागा ।
> प्रणामयोग्येयमितीव मत्वा
> प्राप्तं पदं मेखलयाऽपरस्याः ॥ ६० ॥

**समानेति**—समानकान्त्या तुल्यशोभया प्रियया समेते दृष्टे प्रियासाहित्येन दृष्टे जगद्धातरि जगतां धारके कृष्णे जातरागा इयं प्रणामयोग्या लक्ष्मीविशिष्टभगवद्दर्शन[1]शालित्वदायकपुण्येयं नमस्कारो-

[1] भगवद्दर्शनशालित्वेत्यत्र सामान्ये नपुंसकं बोध्यम् । 'शालित्वादधिक'—ख.

चितेति मत्वेव अपरस्याः अन्यस्याः मेखलया पदं चरणं प्राप्तम् ।[1] तद्दर्शने सति मदनपीडयाऽत्यन्तं कार्श्येन काञ्ची गलितेत्यर्थः ॥ ६० ॥

तासां तदेकोत्सुकदर्शनानां
समाधिभाजामिव शेमुषीणाम् ।
अलं प्रभुस्सोऽपि न मातुमासी-
दपारहर्षादनघामवस्थाम् ॥ ६१ ॥

तासामिति—तदेकोत्सुकदर्शनानां कृष्णैकासक्तदृष्टिपातानां तासां समाधिभाजां शेमुषीणां बुद्धीनामिव अपारहर्षात् निरवधिकानन्दात् अनघां रम्यां अवस्थां प्रभुः सर्वत्राव्याहतशक्तिकः स कृष्णोऽपि मातुं अलं पर्याप्तो नासीत् ॥ ६१ ॥

अवारुणीसम्भवसौरभैस्तै-
रनन्यसाध्याधरबिम्बरागैः ।
निरञ्जनोपस्थितनेत्रशोभैः
स पिप्रिये पौरवधूमुखाब्जैः ॥ ६२ ॥

अवारुणीति — सः कृष्णः अवारुणीसम्भवसौरभैः अमद्यप्रभवामोदैः, स्वतस्सिद्धामोदैरिति यावत्, एवमुत्तरविशेषणद्वयेऽपि स्वतःसिद्धत्वमभिसंहितम्, अनन्यसाध्याधरबिम्बरागैः अलक्तकादिरागद्रव्यान्तरासम्पाद्यबिम्बसदृशाधररागैः निरञ्जनोपस्थितनेत्रशोभैः अञ्जननिरपेक्षं यथा तथा प्राप्तनेत्रकान्तिभिः पौरवधूमुखाब्जैः पिप्रिये प्रीतो बभूव ॥ ६२ ॥

---

[1] तद्दर्शनैरिति–घ.

स पौरकन्याकरविप्रकीर्णान्
प्रायः प्रतीच्छन्नुपचारलाजान् ।
अचीचरत्स्यन्दनमब्जनेत्रः
सव्यापसव्येन गतेन वीथीम् ॥ ६३ ॥

स इति—अब्जनेत्रः कमललोचनः सः कृष्णः पौरकन्यानां करैः विप्रकीर्णान् क्षिप्तान् उपचारलाजान् प्रायः बाहुल्येन प्रतीच्छन् प्रतिगृह्णन् सन् स्यन्दनं रथं सव्यापसव्येन दक्षिणेन वामेन च गतेन गमनेन वीथीं अचीचरत् चारयति स्म। वीथ्यां गृहश्रेणीद्वयेऽपि प्रतिसौधं लाजाद्युपचारान् तत्तद्गृहद्वारि गत्वा ग्रहीतुं मुहुः सव्यापसव्येन रथं चारितवानित्यर्थः ॥ ६३ ॥

कह्लारपद्मोत्पलकान्तिचोरैः
कटाक्षणैः पौरवधूजनानाम् ।
मुग्धेन्दुहासो मुमुदे मुकुन्दः
पश्यन् प्रियां प्रापितपुष्पवृष्टिम् ॥ ६४ ॥

कह्लारेति—कह्लारपद्मोत्पलानां कान्तेश्चोरैः तत्सदृशकान्तिभिरिति यावत्, पद्मं सितपद्मं [1] विवक्षितं, धावल्यस्यापि वर्णनासिद्धये, आरुण्यस्य कह्लारग्रहणेन सिद्धेः। पौरवधूजनानां कटाक्षणैः कटाक्षकरणैः कटाक्षशब्दात् 'तत्करोति '(ग. सू. २०४) इति ण्यन्तात् ल्युट्, प्रापितपुष्पवृष्टिं [2] लम्भितपुष्पवर्षां पुष्पैरिव कटाक्षैरभिवृष्टां प्रियां पश्यन् मुग्धेन्दुहासः आश्चर्येण [3] त्वाभावः पौरस्त्रियः पश्यन्तीत्याकूतगर्भमुग्धेन्दुसदृशमन्दहासः मुकुन्दः मुमुदे मोदते स्म ॥ ६४ ॥

[1] तथाविवक्षित—क. ख. [2] आलम्भित-क. अवलम्बित—घ. [3] 'त्वामेव पौरस्त्रियः' इति शुद्धपाठेनात्र भाव्यमिति भाति.

कृष्णस्य तां स्कन्धमुपघ्नयन्तीं
सुरद्रुमस्येव सुवर्णवल्लीम् ।
अवेक्ष्य नूनं चतुरः पुमर्था-
ननन्यलभ्यानलभन्त पौराः ॥ ६५ ॥

[1] कृष्णस्येति — सुरद्रुमस्येव स्थितस्य कृष्णस्य स्कन्धं देहं उपघ्नयन्तीं सुवर्णवल्लीमिव स्थितां [2] 'स्कन्धः प्रकाण्डे काये च' इति विश्वः, कृष्णदेहाश्रयणमत्र तद्देहसंश्लेषेणावस्थानम्, तां रुक्मिणीं पौराः पुरभवा जनाः अवेक्ष्य अनन्यलभ्यान् उपायान्तरेण लब्धु-मशक्यान् चतुरोऽपि पुमर्थान् धर्मकामादिरूपान् पुरुषार्थान् अलभन्त । नूनमित्युक्तार्थनिश्चये । भगवन्तमाश्रितायाः श्रियः साक्षाद्दर्शने सर्व-पुरुषार्थसिद्धिर्युक्तैवेति भावः । युगपत्सर्वपुरुषार्थसिद्ध्या यावानानन्दः तावन्तमानन्दमन्वभूवन्नित्यन्ततस्तात्पर्यम् । सुवर्णस्य वल्लीमिति षष्ठी-समासः, प्रकृतिविकारभावसम्बन्धस्य षष्ठ्याऽभिधानोपपत्तेः, सुवर्ण-विकृतिं वल्लीमिति मध्यमपदलोपिसमासाश्रयणे गौरवात् । एवमन्यत्रापि द्रष्टव्यम् ॥ ६५ ॥

वक्त्रैः सुधासोदरकान्तिपूरैः
कस्तूरिकापत्रकलङ्कदृश्यैः ।
अलक्ष्यदेहा विदधुर्मृगाक्ष्यः
प्रत्युप्तपूर्णेन्दुशतान् गवाक्षान् ॥ ६६ ॥

वक्त्रैरिति — अलक्ष्यदेहाः भित्तिव्यवहिततया अदृश्यदेहाः मृगाक्ष्यः सुधासोदरकान्तिपूरैः सुधासदृशकान्तिबृंहणैः कस्तूरिकापत्र-कलङ्कदृश्यैः कस्तूरिकाणां पत्राणि कस्तूरिकारचिताः पत्रलेखाः तानि

[1] 'कृष्णस्येति—कृष्णस्य स्कन्धं देहं उपघ्नयन्तीं उपाश्रयं कुर्वतीं अत एव सुरद्रुमस्य स्कन्धं प्रकाण्डं उपघ्नयन्तीं' ज [2] स्कन्धः प्रकाण्डे कायो च—ख. ग. घ.

कलङ्का इवेति उपमितसमासः, तान्येव कलङ्का इति रूपकसमासो वा, सुधासोदरेति प्रत्युप्तपूर्णेन्दुशतानीति च उपमारूपकोभयसमभिव्याहार-सत्त्वेन अन्यतरनियामकाभावात्, तैर्हेतुभिः दृश्यैः दर्शनमात्रेण [1] मनस उल्लासकारिभिः "तद्दृश्यं दृष्टमात्रे यत्कुर्यादुल्लासिकां नवाम्" इति दृश्य-लक्षणम्, एवंभूतैः वक्त्रैः गवाक्षान् प्रत्युप्तपूर्णेन्दुशतान् विदधुः चक्रुः ॥ ६६ ॥

**शुचिस्मितास्सौधतलान्तरस्थाः**
**पद्मेक्षणं प्रेक्ष्य परिस्फुरन्त्यः ।**
**शरत्पयोदोदरसंश्रितानां**
**क्षणद्युतीनां द्युतिमन्वविन्दन् ॥ ६७ ॥**

**शुचीति**—सौधतलान्तरस्थाः हर्म्यतलाभ्यन्तरे स्थिताः, तल-शब्दः स्वरूपमात्रवाची "तलं [2] स्वरूपाधारयोरपि" इति विश्वः। पद्मेक्षणं पुण्डरीकाक्षं प्रेक्ष्य परिस्फुरन्त्यः विकुर्वाणाः शुचिस्मिताः अवदात-मन्दहासाः स्त्रियः शरत्पयोदोदरसंश्रितानां शरन्मेघाभ्यन्तरमाश्रितानां क्षणद्युतीनां विद्युतां द्युतिं अन्वविन्दन् अलभन्त। अत्र सौधतलावस्था-नस्य उपमाने प्रतिबिम्बधर्मः शरन्मेघसंश्रय उक्तः। परिस्फुरन्त्य इत्यस्य तु चलनार्थतया तटित्स्वपि योजयितुं शक्यत्वात् न प्रतीयमानधर्मसापे-क्षता ॥ ६७ ॥

**अपाङ्गजालैरसितोत्पलाभैः**
**कृष्णात्मकं भावमिवोद्वमन्त्यः ।**
**वितेनिरे राजपथे मृगाक्ष्यः**
**तदादृतां बर्हवितानशोभाम् ॥ ६८ ॥**

**अपाङ्गजालैरिति**—असितोत्पलाभैः इन्दीवरसदृशैः अपाङ्ग-जालैः अपाङ्गदर्शनसमूहैः कृष्णात्मकं कृष्ण आत्मा स्वरूपं यस्य

[1] मानसोल्लासकारिभिः—ख. ज. [2] स्वरूपाधरयोः—ख. घ. ज.

तं कृष्णरूपेण परिणतं भावं आकूतं उद्वमन्त्य इव स्थिताः मृगाक्ष्यः राजपथे तदाहतां तस्य कृष्णस्येष्टां बर्हवितानशोभां मयूरपिञ्छरचितस्य [1]उल्लोचस्य शोभां वितेनिरे चक्रुः । बाल्ये मयूर[2]पिञ्छाभरणधारणा-न्मयूरपिञ्छप्रियः कृष्ण इति भावः ॥ ६८ ॥

**हरेरभिख्यामनुपाधिरम्यां**
**विलोचनैर्वीतनिमेषविघ्नैः ।**
**आस्वादयन्त्यस्सुदृशस्तदानी-**
**मयत्ननिष्पीतसुधा इवासन् ॥ ६९ ॥**

हरेरिति—अनुपाधिरम्यां भूषणाद्युपाधिं विशेषणं विनैव मनोज्ञां हरेः अभिख्यां कान्तिं वीतनिमेषविघ्नैः अपेतनिमेषप्रतिबन्धैः विलोचनैः आस्वादयन्त्यः सुदृशः अयत्ननिष्पीतसुधा इवासन् सुधा-सम्पादनयत्नं विनैव सुधास्वादसुखमन्वभवन्नित्यर्थः ॥ ६९ ॥

**अम्भोरुहाणामवलेपसीमां**
**कर्णोत्पलानामपि कान्तिकक्ष्याम् ।**
**विलङ्घयन्तस्सुदृशां कटाक्षा**
**विलिल्यिरे कृष्णमवाप्य लक्ष्यम् ॥ ७० ॥**

अम्भोरुहाणामिति—अम्भोरुहाणां अवलेपसीमां गर्वसीमां, शोभातिशयमिति यावत्, कर्णानामुत्पलानि अवतंसीकृतानि तेषां कान्तिकक्ष्या कान्त्युत्कर्षः, कक्ष्याशब्दो गेहप्रकोष्ठे वर्तमानः सीमा-शब्दवदुत्कर्षे विलङ्घनानुगुण्यात् प्रयुक्तः, [3]तमपि विलङ्घयन्तः

1 उल्लोचनस्य—क. 2 पिञ्छाभरणात्—ख. 3 तं विलङ्घयन्तः.

तदुभयातिशायिकान्तिकाः सुदृशां कटाक्षाः कृष्णं लक्ष्यं उद्देश्यं अवाप्य विलिल्यिरे विलग्ना बभूवुः । स्वबलेन किञ्चिदतिसीमादिकमतिलङ्घ्य गच्छन्तोऽपि [1] अतिलङ्घितमशक्यप्राप्ये तत्रैवालग्नन्तीति भावः ॥ ७० ॥

**तमात्मवन्तं परविद्ययेव**
**पराक्रमं तत्परयेव लक्ष्म्या ।**
**तमेव देवं दययेव जुष्टं**
**संमेनिरे तत्त्वविदस्सभार्यम् ॥ ७१ ॥**

तमिति—तत्त्वविदः तत्त्वज्ञा महर्षयः सभार्यं तं कृष्णं परया विद्यया [2] दहरोपासनादिरूपया ब्रह्मविद्यया जुष्टं प्राप्तं आत्मवन्तं वश्यचित्तं योगिनमिव, आत्मशब्दात् अन्तःकरणवर्तिनः प्रशंसायां मतुप्प्रत्ययः । "आत्मा यत्नधृतिस्वान्तस्वभावपरमात्मसु" इति रत्नमाला, तत्परया आसक्तया [3] पराक्रमपक्षपातिन्या, तत्परया [4] पराक्रमकरणानन्तरभाविन्या वा लक्ष्म्या जुष्टं पराक्रमं शौर्यमिव, दयया जुष्टं तमेव [5] कृष्णमिव संमेनिरे बहुमेनिरे ॥ ७१ ॥

**तां प्राप्य चित्रामिव तारकेशः [6]**
**[7] स्तव्यैः स्तुतो वन्दिगणैरभौमैः ।**
**विवेश धाम स्वमुदीर्णधामा**
**वैवाहिकीं सम्पदमाप्तुमिच्छन् ॥ ७२ ॥**

तामिति—तारकेशः चन्द्रः चित्रां चित्राख्यां [8] तारकामिव तां रुक्मिणीं प्राप्य अभौमैः भूमिभवव्यतिरिक्तैः दिव्यैः अत एव स्तव्यैः

---

[1] "अतिलङ्घितुमशक्यं प्राप्य तत्रैव लगन्तीति भावः" इति पाठ्यमिति भाति. [2] परोपासनादि—घ. [3] अपवरकं—क. [4] पराक्रमान्तर—क. ख. घ. [5] अत्र 'देवं' इत्यधिकेन भाव्यमिति भाति. [6] एवं 'चित्रया शशिनं यथा' इति श्रीमद्वाल्मीकिरामायणे (अयो. १६-१०) [7] स्तुत्यैः—घ. [8] 'तारकां' इति—क. ग. घ. कोशेषु न दृश्यते.

स्वयमेव स्तवार्हैः वन्दिगणैः विश्वावसुप्रभृतीनां वन्दिनां गणैः स्तुतः उदीर्णधामा उद्गतप्रभावः कृष्णः "[1] धामा देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः" इति विश्वः, वैवाहिकीं विवाहप्रयोजनां सम्पदं समृद्धिं उपहारादिरूपां आप्तुमिच्छन् सन् स्वं धाम मन्दिरं विवेश। चित्रामिति मधुमासस्य चित्रा विवक्षिता। तत्संयोगे हिमनिर्मुक्तः पूर्णचन्द्रो भृशं शोभत इति तस्योपमानता। एवं रघुवंशेऽपि दृश्यते—

काऽप्यभिख्या तयोरासीद्व्रजतोश्शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव॥ (र. वं. १-४६)

इति। स्तव्यैरित्यत्र 'दण्डादिभ्यो यत् (पा. सू. ५-१-६६) [2] इत्यार्थे यत्प्रत्ययः, दण्डादेराकृतिगणत्वात्। वैवाहिकीमित्यत्र 'प्रयोजनम्' (पा.सू. ५-१-१०९) इति सूत्रात् ठकि 'टिड्ढाणञ्' (पा.सू. ४-१-१५) इत्यादिना ङीप्॥ ७२॥

**विहारयोगेन विभज्य युक्तं**
**मिथोऽनुरूपं मिथुनं तदाद्यम्।**
**उपाचरन् व्योमचरा यथार्हं**
**संप्रीणनैरुत्सवसंविधानैः॥ ७३॥**

विहारेति—विहारयोगेन क्रीडासम्बन्धेन विभज्य विभागं विश्लेषं कृत्वा युक्तं, नित्य [3]सम्बन्धित्वेऽपि क्रीडया कञ्चित्कालं स्वेच्छया विभज्य पुनरपि संयुक्तमित्यर्थः, मिथोऽनुरूपं परस्परसदृशं आद्यं तन्मिथुनं व्योमचराः व्योमनि चरन्तो देवाः यथार्हं यथोचितं संप्रीणनैः संप्रीतिकरणैः उत्सवसंविधानैः उत्सवस्योपकरणैः उपहारैः उपाचरन् उपचरन्ति स्म॥ ७३॥

[1] धाम' इति ह्रस्वान्तस्साधुरिति भाति. [2] अत्र 'इत्यार्हीयः' इति शुद्धपाठेन भाव्यमिति भाति [3] संबन्धत्वेऽपि—ख.

सदाऽभिगम्यैरभिगम्यमानं
विश्राणने वैश्रवणात्प्रभूतम् ।
तं शङ्खपद्मप्रमुखा महान्तः
सिषेविरे शेवधयस्समेताः ॥ ७४ ॥

**सदेति**—अभिगम्यैः सेव्यैः ब्रह्मादिभिरपि सदा अभिगम्यमानं सेव्यमानं विश्राणने वितरणे विषये वैश्रवणात् कुबेरात् प्रभूतं अधिकं "धनदेन समस्त्यागे" (श्री. वा. रामा. १-१-१९) इति कुबेरस्यापि वितरणित्वं प्रसिद्धम्, तं कृष्णं शङ्खपद्मप्रमुखाः महान्तः शेवधयः निधयः "निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः" इत्यमरः, समेताः मिलितास्सन्तः सिषेविरे सेवन्ते स्म । विवाहोत्सवे स्वस्वरूपेण समागत्य सेवामकुर्वन्नित्यर्थः ॥ ७४ ॥

अकृत्स्नसंवेदिनि जीवलोके
संग्राहयन् धर्ममथात्मवृत्त्या ।
प्रत्यर्चयामास मुनीनुपेतान्
प्रभुस्स्वयं प्रेष्य इवोपचारैः ॥ ७५ ॥

**अकृत्स्नेति**—अथ अनन्तरं प्रभुः कृष्णः अकृत्स्नसंवेदिनि सर्वप्रकारधर्मानभिज्ञे जीवलोके मर्त्यलोके "मर्त्यलोको जीवलोकः" इति यादवः, आत्मवृत्त्या स्वाचारेण धर्मं संग्राहयन् इत्थं महत्सु वर्तितव्यमिति [1] धर्ममनुशिक्षयन् सन् उपेतान् मुनीन् प्रेष्यो भृत्य इव स्वयं उपचारैः अर्घ्यपाद्यादिभिः प्रत्यर्चयामास उत्सवार्थमागमनेन पूजितवतस्तान् प्रतिपूजयामास । सर्वानपि प्रत्येकं पूजयामासेति [2] वा ॥ ७५ ॥

---

[1] धर्मेऽनुशिक्षयन्—घ. [2] अत्र 'वा' इत्यस्य स्थाने 'भावः' इति क. घ. कोशयोः पाठः.

अपत्रपाविप्लुतचेतसो ये
त्यक्त्वा विपक्षं तरसोपसेदुः ।
यथाक्रमं सात्यकिरुत्सवादौ
संभावयामास सभासदस्तान् ॥ ७६ ॥

अपत्रपेति—ये राजानः विपक्षं रुक्मिशिशुपालादिवर्गं त्यक्त्वा तरसा वेगेन अपत्रपाविप्लुतचेतसः अस्मान् दृष्ट्वा किं वक्ष्यन्ति यादवा इति लज्जोपपीडितमनसः उपसेदुः उपसन्नाः [1]सभासदः सभायामुपविष्टाः, तान् सर्वान् सात्यकिः यथाक्रमं क्रमानतिलङ्घनेन उत्सवादौ उत्सवारम्भे सम्भावयामास पूजयामास । अरिपक्षस्थितानामपि तं त्यक्त्वा समागतानां पूजनमुचितं, विशेषादुत्सवादाविति भावः ॥ ७६ ॥

शुभंयवस्स्वामिमहोत्सवेन
स्वाराज्यमक्षय्यमिवाप्तवन्तः ।
दत्तोपचारा वसुदेवदारैः
पुण्याशयाः पौरजना जहर्षुः ॥ ७७ ॥

शुभंयव इति—शुभंयवः शुभान्विताः भाग्यशालिनः स्वामिनः कृष्णस्य महोत्सवेन अक्षय्यं क्षेतुं क्षपयितुमशक्यं "क्षय्यजय्यौ शक्यार्थे" (पा. सू. ६–१–८१) इति निपातः, स्वाराज्यं स्वः स्वर्गे राजत इति स्वाराडिन्द्रः, तस्य भावः स्वाराज्यं, राजतेः क्विप्, 'रो रि (पा. सू. ८–३–१४) इति रलोपः, "ढ्रलोपे पूर्वस्य" (पा. सू. ६-३-१११) इति दीर्घः, [2]ब्राह्मणादित्वात् भावे ष्यञ्प्रत्ययः, तदाप्तवन्तः लब्धवन्त इव स्थिताः वसुदेवदारैः

[1] द्वितीयान्तमप्येतद्भवितुमर्हति [2] 'गुणवचनब्राह्मणादिभ्यः कर्मणि' (पा. सू. ५-१-१२४) इत्यनेनेति भावः.

देवकीप्रभृतिभिः दत्तोपचाराः उत्सवसन्तोषात् [1]दत्तवसनाभरणाद्युपचाराः पुण्याशयाः भगवत्संशीलनेन प्रतिदिनमुपचीयमानानां पुण्यानामाधाराः "आशयः स्यादभिप्राये मानसाधारयोरपि" इति विश्वः, पौरजनाः पुरे भवाः प्रजाः जहृषुः हृष्यन्ति स्म ॥ ७७ ॥

सहोदरन्यस्तभरस्तदात्मा
रुक्माणि रत्नानि च रौहिणेयः ।
अदत्त सन्तोषवशादभीक्ष्णं
वाञ्छाधिकं वन्दिवनीपकानाम् ॥ ७८ ॥

सहोदरेति—सहोदरेण कृष्णेन न्यस्तभरः स्वस्मिन् निहितोत्सवनिर्वाहभारः तदात्मा स कृष्ण आत्मा यस्य, प्रेम्णा वस्तुवृत्त्या च, स रौहिणेयः रोहिण्या अपत्यं बलदेवः संतोषवशात् हर्षायत्तत्वात् वन्दिवनीपकानां स्तुतिपाठकानां याचकानां च "वनीपको याचनिकः" इत्यमरः, सम्बन्धसामान्यविवक्षया षष्ठी, रुक्माणि रत्नानि च सुवर्णानि मणींश्च वाञ्छाधिकं तत्तदभिलाषाधिकं यथा तथा अभीक्ष्णं अतिमात्रं अदत्त दत्ते स्म । 'रुच दीप्तौ' (भ्वादि—७४५) इति धातोः 'युजिरुचितिजां कुश्च' (उ. सू. १४३) इति मन्प्रत्यये चकारस्य ककारे च रुक्मशब्दः ॥ ७८ ॥

अनन्यभक्तैरनुभाव्यभूम्ना
दत्तेक्षणो दानपतिस्त्रिधाम्ना ।
समाहितैस्संमतमुद्धवाद्यैः
पुरोधसां पूजनमाचचार ॥ ७९ ॥

अनन्येति—अनन्यैः एकान्तिभिः भक्तैः अनुभाव्यभूम्ना भोग्यमहिम्ना त्रिधाम्ना कृष्णेन दत्तेक्षणः दत्तनियोगदृष्टिपातः दानपतिः

[1] दत्तवसनाभरणादिसत्काराः—ज.

अक्रूरः समाहितैः समाहितचित्तैः पूज्यानुक्रमप्रदर्शनादाववहितैः उद्धवाद्यैः उद्धवप्रभृतिभिः संमतं अङ्गीकृतं, भूते क्तः, न वर्तमाने, अत एव तद्योगे न षष्ठी,[1] पुरोधसां पुरोहितानां पूजनं आचचार चकार। विभक्त-घनेषु विभक्तशब्दवत् समाहितचित्तेषु समाहितशब्द उत्तरपदलोपेन वर्तेत इत्याहुः ॥ ७९ ॥

आहन्यमाना धृतहेमकोणैः
गन्धर्वमुख्यैरिव गाढविद्यैः ।
जातानुनादा जगतां त्रयाणां
दोषच्छिदो दुन्दुभयः प्रणेदुः[2] ॥ ८० ॥

आहन्यमाना इति—धृतहेमकोणैः धृतहेममयवाद्यवादनैः 'कोणो वीणादिवादनम्' इत्यमरः, गन्धर्वमुख्यैः विश्वावसुप्रभृतिभिरिव गाढ-विद्यैः दृढविद्यैः स्वभ्यस्तगान्धर्वशास्त्रैः आहन्यमानाः अत एव जातानु-नादाः जातप्रतिध्वानाः त्रयाणां जगतां दोषच्छिदः पापशोकादि-निवारकाः दुन्दुभयः भेर्यः प्रणेदुः प्रणदन्ति स्म। 'उपसर्गादसमासेऽपि' (पा. सू. ८-४-१४) इति णत्वम् ॥ ८० ॥

विभावितं शिक्षितनाट्यवेदै-
रुद्राहसंगीतमुदारक्लृप्तम् ।
प्रसादनं दृष्टिमनश्श्रुतीना-
मदिव्यमास्कन्दितदिव्यमासीत् ॥ ८१ ॥

विभावितमिति—शिक्षितनाट्यवेदैः अभ्यस्तगान्धर्वशास्त्रैः विभावितं संपादितं उदारक्लृप्तं उदारं चारु यथा तथा रचितं दृष्टि-

[1] 'क्तस्य च वर्तमाने' (पा. सू. २-३-६७) इति सूत्रेणेति भावः.
[2] विनेदुः—घ.

मनश्श्रुतीनां प्रसादनं यथायोग्यमन्वयः, नृत्तं दृष्टेः, गीतवाद्ये श्रोत्रस्य, त्रयमपि मनसः प्रसादजननं, अदिव्यं भौमं उद्वाहस्य सगीतं उद्वाह-समये मङ्गलार्थं प्रयुक्तं गीतनृत्तवाद्यत्रयं 'गीतं वाद्यं तथा नृत्तं त्रयं संगीतमुच्यते' इति सङ्गीतरत्नाकरे[1], आस्कन्दितदिव्यं तिरस्कृतदिव्यं तिरस्कृतदिव्यसंगीतं आसीत् तदतिशाय्यभूदित्यर्थः ॥ ८१ ॥

लावण्यपूरं ललिताङ्गयष्टेः
  कार्त्स्न्येन निर्वेष्टुमपारयन्त्यः ।
अङ्गानि वध्वाः कुलवृद्धनार्यः
  प्रसाधनैरन्तरयांबभूवुः ॥ ८२ ॥

लावण्येति—ललिताङ्गयष्टेः मनोज्ञशरीरयष्टेः वध्वाः उपस्थित-विवाहाया रुक्मिण्याः लावण्यपूरं कान्तिसमृद्धिं कार्त्स्न्येन साकल्येन निर्वेष्टुं उपभोक्तुं अपारयन्त्यः अशक्नुवत्यः कुलवृद्धनार्यः महाकुलप्रभवा वृद्धस्त्रियः अङ्गानि तस्या अवयवान् प्रसाधनैः आभरणैः अन्तरयां-बभूवुः अन्तरमन्तर्धिः, तद्वच्चक्रुः छादयामासुरित्यर्थः। "अन्तरा विवरान्त-र्धिभेदेष्ववधिरन्ध्रयोः" इति रत्नमाला। अन्तरशब्दान्मतुबन्तात्[2] अन्त-रवन्तं करोतीत्यर्थे [3]णिचि[4] 'णाविष्ठवत्प्रातिपदिकस्य' (वा. ४२०८) इतीष्ठवद्भावात् 'विन्मतोर्लुक्' (पा. सू. ५-३-५) इति मतुपो लुक्। ततो लिटि 'कास्प्रत्ययात्' (पा. सू. ३-१-३५) इत्यादिना अम्प्रयोगोऽनुप्रयोगश्च ।

"अङ्गं गात्रान्तिकोपायावयवेष्वप्रधानके" इति ।
अङ्गशब्दस्य शरीरावयवोभयवाचित्वे रत्नमाला ॥ ८२ ॥

[1] रत्नाकरः-ज. [2] 'अन्तरवन्तमकुर्वन्नित्यर्थे' इति सुस्पष्टम्. [3] तत्करोति तदाचष्टे' इति (ग. सू. २०४) गणसूत्रेण णिच्. [4] अत एव 'प्रातिपदिका-द्धात्वर्थे बहुलमिष्ठवच्च' (ग. सू. २९३) इति गणसूत्रे इष्ठवदित्यप्यप्रामाणिकमिति शब्देन्दुशेखरकृत्.

प्रयुज्यमानानि तयोर्यथार्हं
मङ्गल्यमाल्याभरणाक्षतानि[1] ।
प्रायेण लोकाभ्युदयं प्रदातुं
तत्सङ्गमात्तादृशतामकाङ्क्षन् ॥ ८३ ॥

प्रयुज्यमानानीति—तयोः रुक्मिणीमाधवयोः यथार्हं यथोचितं प्रयुज्यमानानि मङ्गल्यानि माल्यान्याभरणान्यक्षतानि च प्रायेण नूनं लोकाभ्युदयं लोकस्य मङ्गलद्रव्यतया श्रेयः प्रदातुं तत्संगमात् तयोस्संपर्कात् तादृशतां स्वेषां मङ्गलद्रव्यरूपतां अकाङ्क्षन् ॥ ८३ ॥

अरातिपक्षार्णवमन्दराभे हस्ते
हरेर्यत्तदबन्धि सूत्रम् ।
तदाददे स्थानवशादभिख्यां
संवीतनागेन्द्रनिदर्शनीयाम् ॥ ८४ ॥

अरातीति—अरातिपक्षः[2]शत्रुवर्गः स एवार्णवः तस्य मन्दराभे मन्थाचलसदृशे हरेर्हस्ते यत्तत्सूत्रं कौतुकसूत्रं [3]अबन्धि निहितं,

[1] अक्षतानीति—यद्यपि नामलिङ्गानुशासने 'लाजाः पुंभूम्नि चाक्षताः' (वैश्य ४७) इति नित्यपुंलिङ्गबहुवचनान्तोऽक्षतशब्दः प्रतीयते । तथैव सुधायां भानुजीदीक्षितेनापि व्याख्यातं च । तथाऽपि मेदिन्यादौ क्लीबताया अप्यभिधानादिदमुपपद्यते । अत एव व्याख्यात्रा मुकुटेनापि 'लाजाः पुंभूम्नि तेऽक्षतम्' इति पठित्वा व्याकृतं च । वस्तुतस्त्वत्रत्याक्षतशब्दो न लाजपरः, किंतु अखण्डिततण्डुलपरः । तस्य च क्लीबता 'क्लृप्यक्षतं तण्डुले' इति वैजयन्त्यादावभिधानादुपपद्यते । तथैव प्रायोजि च श्रीमद्रामायणे युद्धकाण्डान्तिमसर्गे 'अक्षतं जातरूपं च' इति । तथा टकासर्वस्वादिव्याख्यानेष्वपि क्लीबताऽभिहिता दृश्यत इत्यत्रत्याक्षतशब्दः क्लीबो निर्विवाद इति. [2] शत्रुवर्गः अर्णव इव तस्य ज. [3] अबन्धि बद्धं, तत् स्थानवशात् मन्दरसदृशहस्तरूपात् स्थानवशात् संवीतनागेन्द्रनिदर्शनीयां वेष्टितेन वासुकिनोपमेयां अभिख्यां कान्तिं आददे । यत्तदिति यत्पदसान्निहितं तत्पदं प्रसिद्धिं परामृशतीति निर्देशकतत्पदप्रयोगः—ज.

तत् सूत्रं स्थानवशात् संवीतनागेन्द्रानिदर्शनीयां मथनपाशभूतवासुकिसदृशीं अभिख्यां शोभां आददे। तत्पदं प्रसिद्धिं परामृशतीति निर्देशकतत्पदप्रयोगः [1] ॥ ८४ ॥

समेधितस्तस्य विवाहवह्निः
पुरोधसा पुण्यकृदग्रिमेण ।
प्रदक्षिणावृत्तशिखाकलापः
प्रायेण नीराजनमाततान ॥ ८५ ॥

समेधित इति—पुण्यकृदग्रिमेण पुण्यकृतामग्रभवेन श्रेष्ठेन पुरोधसा समेधितः प्रदक्षिणावृत्तशिखाकलापः प्रदक्षिणं यथा तथा आवृत्तज्वालासमूहः तस्य कृष्णस्य विवाहस्य वह्निः प्रायेण नूनं नीराजनं आततान आरात्रिकोपचारमकरोत् ॥ ८५ ॥

आशास्य लाजाञ्जलिहोमभाजा
क्षेमाशिषा किञ्चिदशेषहृद्यम् ।
अन्योन्यमाकेकरसस्मिताक्षा-
वपश्यतामादिमदम्पती तौ ॥ ८६ ॥

आशास्येति—आदिमदम्पती आदिभवौ जायापती तौ रुक्मिणीमाधवौ लाजाञ्जलिहोमभाजा क्षेमाशिषा 'दीर्घायुरस्तु मे पतिर्जीवातु शरदश्शतम्' (तै. मन्त्रप्रश्ने १-५-२) इति क्षेमविषयिण्या शुभवाचा अशेषहृद्यं सर्वेषामिष्टं, किञ्चित् [2] दीर्घायुष्मानिति भावः, आशास्य अर्थयित्वा अन्योन्यं आकेकरसस्मिताक्षौ आकेकरे अद्भुतरूपदर्शनादाकुञ्चितपुटत्वादिविकारयुक्ते सस्मिते साकूतमन्दहासानुगते अक्षिणी ययोः तथाभूतौ अपश्यताम्। यस्य महाकल्पा अप्येकैकदिवसायन्ते तस्य शतवर्ष-

[1] अत्र 'पुनर्निर्देशकतत्पदप्रयोगः' इति सुस्पष्टपाठेन भाव्यम्. [2] 'दीर्घायुष्मत्त्वमिति' इति, दीर्घायुष्ट्वमिति' इति वाऽत्र पाठस्स्यात्.

जीवितत्वप्रार्थनाऽपि कियतीति सोपहासं परस्परं व्यलोकयतामित्यर्थः। यद्यपि लाजहोमे शतवर्षजीवितत्वप्रार्थना वधूमात्रकर्तृका, लाजहोमस्य एतदीयत्वात् मन्त्रलिङ्गाच्च, तथापि कारयितृत्वेन पत्युरपि लाजहोमे अनुप्रवेशोऽस्तीति तावाशास्येत्युक्तम् ॥ ८६ ॥

**वैलक्ष्यडोलामिव संश्रितानां**
**विलोचनानां ववृधे विहारैः।**
**तयोरनन्यादृशवैभवाना-**
**मन्योन्यराजीवमधुव्रतानाम् ॥ ८७ ॥**

**वैलक्ष्येति**—तयोः दम्पत्योः वैलक्ष्यडोलां विलक्षस्य लज्जितस्य भावो वैलक्ष्यं लज्जा सैव डोला प्रेङ्खा रागप्रहितानां दृशां पुनः पुनः सङ्कोचापादकतया तद्गतागतकारित्वात्, तां आश्रितानां आरूढानामिव स्थितानां, लज्जापरतन्त्राणामिति यावत्, अनन्यादृशवैभवानां अनन्यादृशं अनितरप्रकारं सर्वातिशायि वैभवं सौभाग्यं येषां तेषां अन्योन्यराजीवमधुव्रतानां अन्योन्यस्यैव पद्मस्य भ्रमराणां पद्मे भ्रमरवत् [1]परस्परस्मिन्नासक्तिमतां विलोचनानां विहारैः ववृधे प्रवृद्धम्। भावे लिट् ॥ ८७ ॥

**परस्परं पाणिसरोजयोगा-**
**द्बभूवतुस्तौ पुलकाञ्चिताङ्गौ।**
**अस्विद्यतां च ज्वलनस्तु मन्दै-**
**रसूत धूमैरधिवासमात्रम् ॥ ८८ ॥**

**परस्परमिति**—परस्परं पाणिसरोजयोगात् पाणिग्रहणकालीनात् पाणिसरोजसंपर्कात् तौ दम्पती पुलकाञ्चिताङ्गौ पुलकव्याप्त-

---

[1] परमासक्तिमतां—घ.

शरीरौ बभूवतुः । अस्विद्यतां च स्विन्नौ चाभूताम् । ज्वलनस्तु मन्दैः धूमैः अधिवासमात्रं लाजादिहोमद्रव्यसौरभसंक्रमणमात्रं असूत जनयामास । स्वेदादिक[1]मन्यसिद्धमिति न तदग्निना संपादनीयमासीदित्यर्थः ॥ ८८ ॥

**समन्त्रकं साक्षिणि हव्यवाहे**
**सख्योचितां सप्तपदीं भजन्तौ ।**
**स्वशासनेन स्वयमन्वयाता-**
**माचारमागन्तुकदम्पतीनाम् ॥ ८९ ॥**

**समन्त्रकमिति**—हव्यवाहे विवाहाग्नौ साक्षिणि स्थिते समन्त्रकं 'एकमिषे' (तै. मन्त्रप्रश्ने. १ ३-७) इत्यादिमन्त्रसहितं यथा तथा [2]सख्यस्योचितां सख्यसम्पादनीं "सखा सप्तपदा भव" (तै. मन्त्रप्रश्ने. १-३-१४) इति तस्य सप्तपदीसाध्यत्वश्रवणात् सप्तपदीं सप्तानां पदानां समाहारं भजन्तौ तौ स्वशासनेन इत्थं कर्तव्यमिति शास्त्ररूपेण स्वकीयनियोगेन आगन्तुकदम्पतीनां सांसिद्धिकदम्पतीनां आचारं अन्वयातां अन्वसरताम् ॥ ८९ ॥

**अन्वेतु विष्णुस्स्वयमित्युदीर्य**
**प्रियां पराधीन इवानुगच्छन् ।**
**जायापतीनां जगदुद्भवानां**
**[3]भव्यां दशां भावयति स्म नाथः ॥ ९० ॥**

**अन्वेत्विति**—विष्णुः स्वयमन्वेतु इत्युदीर्य "एकमिषे विष्णुस्त्वाऽन्वेतु" (तै. मन्त्रप्रश्ने. १-३-७) इत्यादिमन्त्रमुच्चार्य पराधीनः विधिपरतन्त्र इव प्रियामनुगच्छन् नाथः जगदुद्भवानां जगदुद्भूतानां जायापतीनां भव्यां योग्यां दशां अग्निपरिक्रमणावस्थां भावयति स्म

[1] मन्यतस्सिद्ध–अ. [2] सख्यास्योचितां–क. ख. ग. घ. [3] भाव्यां–घ.

अभिनयति स्म । अन्वेतु विष्णुरिति मन्त्रार्थानुवादेन मन्त्रः प्रकृते सार्थक आसीदिति दर्शितम् ॥ ९० ॥

आत्मानमेव स्वयमग्निरूपं
परिक्रमैः पर्यचरत्स देवः ।
विश्वस्य बाह्यान्तरनित्यवृत्त्या
न कर्म कर्ता च [1] न कर्म एषः ॥ ९१ ॥

आत्मानमिति—स देवः अग्निरूपं अग्निशरीरकमग्न्यन्तर्यामिणं आत्मानं स्वयमेव परिक्रमैः प्रदक्षिणैः पर्यचरत् परिचरति स्म । [2]एष एव विश्वस्य जगतः बाह्यान्तरनित्यवृत्तया बहिःप्रदेशे अन्तःप्रदेशे चानिशं वर्तमानतया न कर्म कर्ता च, बहिरन्तश्च सर्वत्र व्याप्य वर्तमानो हि न केन चित् प्रदक्षिणीकर्तुं शक्यते, न च किञ्चित् प्रदक्षिणीकरोति । गगनादिवत् । [3]एवकारो द्योतनार्थः, य एवंभूतः स एव परिक्रमैः पर्यचरदिति ॥ ९१ ॥

प्रदक्षिणेन क्रमणेन ताभ्यां
दत्तार्चनो दिव्यवधूवराभ्याम् ।
नूनं तथाऽनर्च विघूर्णनेन
स्वान्तः स्थितौ वह्निरपि स्वयं तौ ॥ ९२ ॥

प्रदक्षिणेनेति—ताभ्यां दिव्यवधूवराभ्यां अप्राकृतवधूवराभ्यां

---

[1] अत्र मूले 'य एष एव', इति पाठस्स्यात्. ग्रन्थाक्षरमुद्रितमूलकोशे ख कोशे च 'य एव एषाम्' इति पाठो दृश्यते. ञ-कोशपरिदृश्यमानव्याख्यापर्यालोचनयाऽत्र 'एषां' इत्यस्य स्थाने येषामति पाठस्स्यादिति संभाव्यते। तथाचास्मिन् पाठे य एव विश्वस्य बाह्यान्तरनित्यवृत्त्या येषां न कर्म न कर्ता च स देवः स्वयमेव अग्निरूपमात्मानं (तैः) परिक्रमैः पर्यचरादित्यन्वय इति प्रतिभाति. [2] व्याख्यायामप्यत्र 'य एष एव' इति पाठ उचितः. 'यः कृष्ण एव विश्वस्य बाह्यान्तरनित्यवृत्त्या बाह्याभ्यन्तरभागयोस्सदा वर्तमानतया येषां प्रदक्षिणानां न कर्म, न च कर्ता' इति ञ-कोशे पाठः. [3] एवकारो विरोधालंकारद्योतनार्थः—ञ.

प्रदक्षिणेन क्रमणेन दत्तार्चनः कृतपूजनः वह्निः स्वयमपि स्वान्तः स्थितौ अन्तर्यामितया स्वाभ्यन्तरे स्थितौ तौ विघूर्णनेन ज्वालायाः प्रदक्षिणावृत्त्या नूनं तथा प्रदक्षिणक्रमणैः आनर्च अर्चति स्म । महत्तरैः पूजितस्य तथैव सद्यः प्रतिपूजनं युक्तमिति भावः ॥ ९२ ॥

तस्यास्सलीलं चरणारविन्दं
कामी गृहीत्वा करपङ्कजाभ्याम् ।
आस्थापयद्यां दृषदं मुकुन्दः
साऽभूत्स्वयं मौलिमणिः श्रुतीनाम् ॥ ९३ ॥

तस्या इति—कामी कामुकः मुकुन्दः तस्याः चरणारविन्दं करपङ्कजाभ्यां सलीलं गृहीत्वा यां दृषदं आस्थापयत् "आतिष्ठेममश्मानम्" (तै. मन्त्रप्रश्ने. १-५-१) इति मन्त्रेण यमश्मानमारोहयत्, आङ्पूर्वस्तिष्ठतिरारोहणार्थः, "आतिष्ठेममश्मानम्" (तै. मन्त्रप्रश्ने. १-५-१) इति मन्त्रे आतिष्ठेत्यस्य स्थाने आरोहेति छान्दोग्यपाठदर्शनात् "महेन्द्रमास्थाय महोक्षरूपम्" इति प्रयोगाच्च, (रघुवंशे. ६-७२) सा दृषत् स्वयं श्रुतीनां मौलिमणिः किरीटरत्नं अभूत् । लक्ष्मीचरणसंपर्कमहिम्ना दृषदपि उपनिषदां श्लाघनीयाऽभूदित्यतिशयोक्तिः ॥ ९३ ॥

यदत्र कर्मण्ययथाकृतं त-
त्स्विष्टं क्रियादग्निरिति ब्रुवाणः ।
स्वतेजसा भावितविश्वतेजाः
स्वाहासखं देवमुपास्त देवः ॥ ९४ ॥

यदत्रेति—स्वतेजसा भावितविश्वतेजाः स्वभासा सम्पादितनिखिलप्रकाशः "तस्य भासा सर्वमिदं विभाति" (श्वेताश्व. ६–१४. मुण्डक. २–२–१०) इति श्रुतेः, देवः कृष्णः अत्र कर्मणि यत् अयथाकृतं न्यूनातिरिक्ततया कृतं तत् अग्निः स्विष्टं क्रियात् सुष्ठु अन्यूना-

नतिरिक्तमिष्टं यागं करोत्विति ब्रुवाणस्सन् स्वाहासखं स्वाहा अग्निप्रिया "स्वाहाऽऽग्नेयी च तत्प्रिया" इति यादवः, तस्यास्सखायं देवं अग्निं उपास्त उपासितवान्। "यदस्य कर्मणोऽत्यरीरिचम्" इति मन्त्रेण स्विष्टकृद्यागं कृतवानित्यर्थः। [1] इष्टमिति यजधातोः भावे क्तः ॥९४॥

रामस्य सीतेव रमेव विष्णो-
रमुष्य भूयास्त्वमिहैकपत्नी।
इत्यूचिषो यादववृद्धदारान्
प्रीताशया प्रैक्षत सा सनाथा ॥ ९५ ॥

**रामस्येति**—रामस्य सीतेव विष्णोः रमेव च अमुष्य कृष्णस्य त्वं इह जगति एका मुख्या प्रियतमा पत्नी भूयाः भवतात् इत्यूचिषः यादववृद्धानां उग्रसेनादीनां दारान् सनाथा कृष्णसहिता सा प्रीताशया प्रीतमानसा सती प्रैक्षत प्रेक्षणेनानुगृहीतवती ॥ ९५ ॥

वरेण वन्द्येन सुरासुराणां
मङ्गल्यसीमान्तभुवा च वध्वा।
समीक्षिता ब्रह्मसुतस्य पत्नी
सर्वैरभूत्सादरदर्शनीया ॥ ९६ ॥

**वरेणेति**—सुरासुराणां वन्द्येन वरेण मङ्गल्यसीमान्तभुवा मङ्गलानामुत्कर्षविश्रान्तिभूम्या वध्वा च समीक्षिता विवाहसमये दृष्टा ब्रह्मसुतस्य वसिष्ठस्य पत्नी अरुन्धती सर्वैरपि वधूवरैः सादरदर्शनयीाऽभूत् कृष्णरुक्मिणीभ्यां दृष्टेत्यस्मादेव [2]पुण्या मङ्गल्यकारिणीति सबहु-

[1] इष्टमिति—यजधातोर्भावे क्तप्रत्यये तस्य कित्त्वात् 'वचिस्वपियजादीनां किति' (पा. सू. ६-१-१५) इत्यनेन यकारस्य संप्रसारणेन इकारे 'संप्रसारणाच्च' (पा.सू. ६-१-१०८) इति पूर्वरूपैकादेशे 'व्रश्चभ्रस्ज' (पा. सू. ८-२-३६) इत्यादिना जकारस्य षत्वे 'ष्टुना ष्टुः' (पा. सू. ८-४-४१) इति तकारस्य टकारे च इष्टमिति रूपसिद्धिः. [2] पुण्य—ख.

[1]मानं द्रष्टव्याऽभूत् । सुरासुराणां न शाश्वतिको विरोधः, किन्तु राज्ञामिव तत्तत्कार्य[2]विशेषप्रयुक्त इति न[3] द्वन्द्वैकवद्भावप्रसङ्गः ॥ ९६ ॥

तदेकभावा [4]तमनन्यभावं
नाथप्रिया नाथमनुव्रजन्ती ।
अभीष्टसिद्धेरधिदेवतेयं
यद्वा सवित्रीति यथार्थमूचे ॥ ९७ ॥

तदेकेति—[5]तदेकः तदभिन्नः कृष्णमयो भावो यस्यास्सा तथोक्ता नाथप्रिया नाथस्य प्रेयसी अनन्यभावं वनितान्तरविमुखभावं तं नाथमनुव्रजन्ती अरुन्धतीदर्शनादिष्वनुवर्तमाना सा रुक्मिणी इयं अभीष्टसिद्धेः [6]पत्युरभिलषितसिद्धेः अधिदेवता [7]अधिष्ठात्री देवता, यद्वा सवित्री अभीष्टसिद्धेर्जननी वेति यथार्थं [8]यथा तथा ऊचे उक्ता, द्रष्टृजनैरिति शेषः । यथार्थमित्यस्य महालक्ष्म्या वस्तुत एव सर्वप्रकारभगवन्मनोरथपरिपूरकत्वादिति हृदयम् ॥ ९७ ॥

कृताशिषं कृष्णगृहेश्वरीं तां
पुरोधसा पुण्यमनोरथेन ॥
सकौतुकां कौतुकिनस्सुरत्नै-
रभ्यर्चयामासुरमात्यवृद्धाः ॥ ९८ ॥

कृताशिषमिति—पुण्यः पवित्रः मनोरथो यस्य तेन विहितैक-

---

[1]मानं दृष्टा—घ. [2]विशेषे—क. ख. ग. [3]'येषां च विरोधः शाश्वतिकः' (पा. सू. २ ४·९) इत्यनेन अहिनकुलमित्यादौ शाश्वतिकविरोधस्थल एव द्वन्द्वैकवद्भावविधानात् देवासुराणां अमृतादिनिमित्तकमेव वैरं न त्वहिनकुलादिवज्जातिवैरमिति नात्र द्वन्द्वैकवद्भावप्रसङ्ग इत्यर्थः. [4]'तदनन्य' इति अ—कोशादन्यत्र पाठोऽभिमतो दृश्यते. [5]तदेकः इति अ—कोशादन्यत्र न दृश्यते. [6]सिद्धेरित्यन्तं, अ—कोशादन्यत्र न दृश्यते. [7]देवतेत्यन्तं अ—कोशादन्यत्र न दृश्यते. [8]तथेत्यन्तं अ—कोशादन्यत्र न दृश्यते.

रुचिना पुरोधसा पुरोहितेनं कृताशिषं कृताशीर्वादां सकौतुकां कौतुकेन प्रतिसरसूत्रेण सहितां "कौतुकं विषयाभोगे हस्तसूत्रे कुतूहले" इति यादवः, कृष्णगृहेश्वरीं कृष्णस्य गृहिणीं तां रुक्मिणीं कौतुकिनः सहर्षाः "कौतुकं त्वभिलाषे [1]स्यादुत्सवेनसहर्षयोः" इति विश्वः, अमात्यवृद्धाः मन्त्रिवृद्धाः सुरत्नैः उत्तमरत्नैः यौतकरूपैः अभ्यर्चयामासुः। ईश्वरीमिति [2]ईशधातोः औणादिके वरटि टित्त्वात् ङीप् ॥ ९८ ॥

**मनुष्यतां मानयतो विहारैः**
**स्वामेव देवीमुपयच्छतस्ते ।**
**समेधतां मङ्गलमित्युशन्तः**
**सत्याशिषस्तं मुनयश्शशंसुः ॥ ९९ ॥**

**मनुष्यतामिति**—विहारैः क्रीडाभिः मनुष्यतां मानयतः पूजयतः स्वयं परिग्रहेण [3]बहुकुर्वतः 'मान पूजायाम्' (चुरादि. १७१०) इति चौरादिको धातुः, स्वां सतीं स्वकीयामेव सतीं देवीं उपयच्छतः परिणयतः ते तव मङ्गलं समेधतां संवर्धतामिति उशन्तः [4]इच्छन्तः इच्छापूर्वं वदन्त इति यावत्, सत्याशिषः अमोघाशीर्वादाः मुनयः शशंसुः तुष्टुवुः ॥ ९९ ॥

---

[1] कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः ।
परंपरासमायातमङ्गले च कुतूहले ॥

इति विश्वकोशे दर्शनादत्र 'स्यादुत्सवे नर्महर्षयोः' इति शुद्धपाठेन भाव्यम्. [2] ईश धातोरिति—यथाप्रयोगमुणादयः प्रकृत्यन्तरेभ्योऽपि बहुलग्रहणाद्भवन्तीत्यभ्युपगमने 'अश्नोतेराशुकर्मणि' (उ. सू. ५३५) इत्यनेन अश्नोतेर्विहितोऽपि वरट् ईशतेरपि भवतीति भावः. [3] बहू—ख. [4] वश कान्तौ–(अदादि. १०८) 'कान्तिरिच्छा' इति वशधातोरिच्छार्थकत्वस्य शाब्दिकैरभ्यनुज्ञानादिच्छन्त इत्यर्थो लभ्यते । वशधातोः लटश्शत्रादेशे 'सार्वधातुकमपित्' (पा. सू. १-२-४) इत्यनेन शतुर्ङित्त्वात् 'ग्रहिज्यावयिव्यधिवष्टि' (पा. सू. ६-१-१६) इत्यादिना वकारस्य संप्रसारणे पूर्वरूपे च उशन्त इति रूपं सिध्यति.

प्रदाय ताभ्यामुपदास्समीचीः
प्रत्यागतास्स्वानि गृहाणि पौराः ।
आशापतीनां विभवादनूनां
तत्रैव ते सम्पदमन्वभूवन् ॥ १०० ॥

प्रदायेति—ताभ्यां दम्पतीभ्यां समीचीः उत्तमाः उपदाः उपहारान् प्रदाय स्वानि गृहाणि प्रत्यागताः पौराः तत्रैव स्वस्वगृहेष्वेव आशापतीनां दिक्पतीनां विभवात् ऐश्वर्यात् अनूनां आविकलां[1] सम्पदं अन्वभूवन् । उपहारप्रदानप्रीतयोस्तयोस्सङ्कल्पात् पौराणां गृहेषु महती सम्पत् सन्निदध इत्यर्थः ॥ १०० ॥

स्त्रीपुंसनाम्ना बहुधा विभक्तं
विश्वं ययोरेव विभूतिमाहुः ।
नयो जहौ द्वारवतीं न ताभ्या-
मङ्गीकृतामादिमदम्पतीभ्याम् ॥ १०१ ॥

स्त्रीपुंसेति—स्त्री च पुमांश्च स्त्रीपुंसौ 'अचतुर' (पा.सू.५-४-७७) इत्यादिना निपातः, स्त्रीपुंसाविति नाम्ना व्यपदेशेन बहुधा सुरनर-तिर्यगादिबहुप्रकारेण विभक्तं विश्वं ययोरेव विभूतिमाहुः, [2]पराशरादयो महर्षय इति शेषः, ताभ्यां आदिमदम्पतीभ्यां अङ्गीकृतां द्वारवतीं नयः नीतिः न जहौ न तत्याज । ताभ्यामधिष्ठितत्वात् द्वारवती सदा स्वत एव नीतिमत्यासीदित्यर्थः ॥ १०१ ॥

---

[1] सकलां—ख. [2] पराशरादय इति—

'देवतिर्यङ्मनुष्येषु पुंनामा भगवान् हरिः ।
स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥ (विष्णुपुराणे. १-८-३५)

इति पराशरादिभिरभिधानादित्यर्थः ।

वधूसखे तत्र जगन्निवासे
वसत्यमर्यादगुणानुभावे ।
तस्मिन्निवासीदनपायभावा
तस्यां नगर्यामपि रुक्मिणीश्रीः १०२ ॥

वधूसख इति—वध्वा रुक्मिण्याः सख्यौ सुहृदि अमर्याद-गुणानुभावे अनवधिकगुणप्रभावे जगतां निवासे कृष्णे तत्र द्वारकायां वसति सति रुक्मिणीरूपा श्रीः तस्मिन् कृष्ण इव तस्यां नगर्यामपि अनपायभावा स्थिरभावा आसीत् । नगरीपक्षे भावस्सत्ता, कृष्णपक्षे लीलाऽभिप्रायसत्ता वा । [1]सरुक्मिणकिभगवन्निवासमहिम्ना सा नगरी सदा परिपुष्टाऽभूदित्यर्थः ॥ १०२ ॥

तस्याः कटाक्षैर्विहिताभिषेकः
तद्बाहुना कल्पितकण्ठमाल्यः ।
अवाप शोभामधिकां मुकुन्दः
सौभाग्यसिंहासनसार्वभौमीम् ॥ १०३ ॥

तस्या इति—तस्याः रुक्मिण्याः कटाक्षैः विहिताभिषेकः कृतस्नानः, तया सदैव रागान्निरीक्ष्यमाणः, तद्बाहुना तस्या भुजेन कल्पितकण्ठमाल्यः रचितकण्ठस्रक्कृतोपगूहनः मुकुन्दः सौभाग्यसिंहासनसार्वभौमीं सुभगस्य चक्षुष्यस्य भावस्सौभाग्यं तदेव सिंहासनं तस्य सार्वभौमीं अखण्डेश्वरीं, निरातिशयचक्षुःप्रियतावहामिति यावत्, अधिकां लौकिकस्नानमाल्यादिशोभातिशायिनीं शोभां अवाप । सार्वभौमीति

---

[1] अत्र 'चक्रहस्तनिवास' इति ख—कोशादन्यत्र पाठो दृश्यते.

[1] सर्वभूमिशब्दादीश्वरार्थे अण्प्रत्ययः । [2] अनुशतिकादित्वात् [3] सौभाग्यपदवदुभयपदवृद्धिः ॥ १०३ ॥

कदम्बगोलश्रियमाक्षिपन्तं
कन्दर्परूपोदयपूर्वरूपम् ।
प्रियापरिष्वङ्गरसेन धन्यं
प्रीताशयो बहुमतात्मदेहम् ॥ १०४ ॥

कदम्बेति—कदम्बगोलश्रियमाक्षिपन्तं रोमाञ्चोद्गमात् कदम्बमुकुलशोभां तिरस्कुर्वन्तं अत एव कन्दर्परूपोदयपूर्वरूपं [4]कन्दर्पस्य रूपं वपुस्सौन्दर्यं वा "अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्य[5]वपुष्वश्लोकशब्दयोः" इति केशवः, तदुदयस्य तज्जन्मनः [6]प्राग्रूपं, तज्जननोन्मुखं कारणमिति यावत्, सर्वत्र रोमाञ्चोद्गमेन रोमकूपेषु अङ्कुरजननोन्मुखव्रीहिवत् बृंहणात् प्रतिरोमकूपं एकैकमन्मथरूपजननोन्मुखतत्कारणत्वमारोप्यते निरतिशयसौन्दर्याभिव्यक्तये । सदा रोमाञ्चोद्गमे हेतुगर्भं विशेषणं—प्रियापरिष्वङ्गरसेन रुक्मिणीपरिरम्भजनितेनानन्देन धन्यं कृतार्थं आत्मदेहं स्वशरीरं प्रीताशयस्सन् बहुमत बहु

[1] सर्वभूमीत्यादि—'सर्वभूमिपृथिवीभ्यां' (पा. सू. ५-१-४१) इत्यतः सर्वभूमीत्याद्यनुवृत्त्या 'तस्येश्वरः' (पा. सू. ५-१-४२) इत्यनेन ईश्वरेऽर्थे सर्वभूमिशब्दादण् प्रत्यय इति भावः. [2] अनुशतिकादित्व दिति—'अनुशतिकादीनां च' (पा. सू. ७-३-२०) इति सूत्रेण सर्वभूमिशब्दस्य अनुशतिकादिगणप्रविष्टत्वाभ्युपगमेन पूर्वोत्तरपदयोरुभयोरादिभूतयोरकारोकारयोर्वृद्धौ अण्णन्तत्वात् 'टिड्ढाणञ्' (पा. सू. ४-१-१५) इत्यादिना स्त्रियां ङीपि च सार्वभौमीशब्दः सिध्यतीति भावः. [3] सौभाग्यपदवदिति—उभयपदवृद्धिमात्रेऽयं दृष्टान्तः, न त्वनुशतिकादित्वांशेऽपि। सौभाग्यशब्दे तु सुभगशब्दाद्भावार्थे ष्यञि 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (पा. सू. ७-३-१९) इत्यनेनैव तत्र पूर्वोत्तरपदाद्योर्वृद्धिविधानादिति बोध्यम्. [4] कन्दर्परूपं—घ. [5] 'वपुष्षु श्लोक' इति पाठस्साधुः । एवमेव केशवीयनानार्थार्णवसंक्षेपकोशे घक्षरकाण्डे दृश्यते च. [6] पूर्वरूपं—घ.

यथा तथा मनुते स्म। अमतेति "मनु अवबोधने" (तनादि १४७२) इति धातोः लुङ् 'तनादिभ्यस्तथासोः' (पा. सू. २-४-७९) इति वैकल्पिकस्सिचो लुक्। 'अनुदात्तोपदेश (पा. सू. ६-४-३७) इत्यादिना अनुनासिकलोपः ॥ १०४ ॥

तां प्राप्य कृष्णः प्रभुतामिव स्वां
मनःप्रसूतेरिव मन्त्रसिद्धिम्।
आसीदभीतैस्सहसाऽभिगम्यो
मित्त्रैरमित्त्रैरपि सापराधैः ॥ १०५ ॥

तामिति—कृष्णः स्वां स्वकीयां प्रभुतां प्रभुत्वशक्तिमिव स्थितां मनःप्रसूतेः मनसिजस्य मन्त्रसिद्धिं कृष्णवशीकरणमन्त्रस्य फलदानदशामिव च स्थितां तां प्राप्य मित्त्रैः सुहृद्भिः सापराधैः अमित्त्रैः शत्रुभिः अभीतैस्सद्भिः सहसा अतर्कितं अभिगम्य आसीत्। पुरुषकाररूपलक्ष्मीसान्निधिमहिम्ना नित्यप्रसन्नतया मित्त्रवदेव सद्यः कृतापराधानां रिपूणामप्युपसर्पणीय आसीदित्यर्थः। अत्र प्राप्याभिगम्य इति प्राप्त्यभिगमनक्रिययोः भिन्नकर्तृकत्वेऽपि कर्मणि लकारवाच्ये सति तत्कर्तृक-[1]क्रियया क्त्वाप्रयोगस्य "सेतुं दृष्ट्वा समुद्रस्य मुच्यते ब्रह्महत्यया" इत्यादौ दर्शनात् तादृशस्थले मीमांसकैः साधुत्वसमर्थनाच्च प्राप्येति ल्यपस्साधुत्वमनुसंधेयम् ॥ १०५ ॥

श्रीवत्ससंस्थानजुषा प्रकृत्या
स्थानेन चिह्नेन च लक्षणीयौ।
दृष्टावभीष्टं भजतां ददाते
जगत्पती ताविह दम्पती द्वौ ॥ १०६ ॥

श्रीवत्सेति—श्रीवत्ससंस्थानजुषा श्रीवत्साकारभाजा प्रकृत्या

1 क्रियायां—ग.

जगन्मूलप्रकृत्यैव स्थानेन चिह्नेन च लक्षणीयौ दृश्यौ, [1]श्रीवत्साख्यो भगवद्वक्षस्स्थलरोमावर्तविशेषो मूलप्रकृतिरूप इति श्रीविष्णुपुराणे प्रतिपादितम्, स च भगवद्वक्षोगताया लक्ष्म्याः स्थानं, भगवतः चिह्नम्, अतः स्थानस्य चिह्नस्य च रुक्मिणीमाधवयोः यथाक्रममन्वयः, जगत्पती जगतां स्वामिनौ तौ दम्पती द्वौ इह भूलोके दृष्टौ सन्तौ भजतामभीष्टं ददाते दत्तवन्तौ। दाञ् धातोः (जुहोत्यादि १०९.१) लिडात्मनेपदद्विवचनम्। भजतामिति सम्बन्धसामान्यविवक्षया षष्ठी। भूलोकेऽप्येतादृशं भाग्यं [2]कदाचिदासीदित्यद्भुतं सूचयितुमिहेत्युक्तम्। यद्वा—ददाते अद्यापि वितरत इत्यर्थः। अस्मिन् पक्षे लडात्मनेपदद्विवचनम्। [3]भजतामिति दृष्टाविति च समाधिदृष्ट्या तपोबलेन वा अर्चावताररूपेण वा दृष्टावित्येतत्परम्। इहेति च कृत्स्नजगत्परामिति विशेषः। अत्र भजतामिति भजधातोरुभयपदिनः [4]शतृप्रत्यययोगेन अकर्तृगामिक्रियाफलद्योतकेन [5]परार्थं भजतां तदभीष्टमपि प्रयच्छत इति गम्यते। स्वार्थं भजतामभीष्टसिद्धिस्तु तत एव कैमुतिकन्यायेन सिध्यति। [6]तदा ददाते इत्युभयपदिनः आत्मनेपदप्रयोगो भक्तगतस्यापि दानक्रियाफलस्य [7]दातृगतत्वारोपेणेति। तेन भक्तगतेऽपि फले स्वकीयत्वाभिमानव्यञ्जनात् तयोर्भक्तेषु निरतिशयं वात्सल्यं व्यज्यते। दम्पती इति द्विवचनेनैव द्वित्वे सिद्धेऽपि द्वाविति विशेषणेन तौ द्वावेव एवमतिवात्सल्येन भक्तसंरक्षकौ, नान्य इति परिसङ्ख्या व्यज्यते। तयोरतिवात्सल्ये निदानं जगत्पती इत्यनेन प्रतिपाद्यते। स्वामित्वं [8]स्वकयिषु वस्तुषु वात्सल्यमुद्दीपयतीति भावः। जगत्प-

---

[1] अत्र 'श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम्। प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे॥' (वि. पु. १-२२-६८) इति प्रमाणं बोध्यम्. [2] कदा आसीदित्यद्भुतं—क. ख. ग. घ. [3] ताविति दृष्टाविति च—क. ख. ग. घ. [4] प्रत्ययेन—क. ख. ग. घ. [5] परार्थं भजतां अभीष्टमपि प्रयच्छत इति—घ. [6] तथा—घ. [7] दातृगतद्वारेणेति—घ. [8] स्वकीयवस्तुषु—क. ख. ग. घ.

तित्वमेवोपपादयितुं श्रीवत्सेत्यादिविशेषणेन जगन्मूलप्रकृतेः स्थानचिह्नभावेन तच्छेषत्वोक्त्या परभावः [1]प्रख्यापितः ॥ १०६ ॥

**न ते मनुष्या न च देवतास्ते**
**प्रायेण तावेव तथाभवन्तौ ।**
**यैरेवमन्योन्यविभूषितं तत्**
**द्वन्द्वातिगं द्वन्द्वमवैक्षि धन्यैः ॥ १०७ ॥**

**न त इति**—धन्यैः [2]पुण्यदृग्भिः यैः जनैः अन्योन्यविभूषितं अनुरूपसौन्दर्यादिमत्तया अन्योन्येनालङ्कृतं द्वन्द्वातिगं शीतोष्णादिद्वन्द्वमतिक्रान्तम्, अतिपूर्वकात् गमेः 'अन्येष्वपि दृश्यते' (वा २०१६) [3] इति ख्य प्रत्ययः, द्वन्द्वं मिथुनं एवं उक्तविवाहाद्यवस्थाविशिष्टं अवैक्षि अवेक्षितम्, कर्माणि लुङ्; ते मनुष्या न भवन्ति। ते देवताश्च न भवन्ति। प्रायेण नूनं तथाभवन्तौ द्रष्टृजनरूपेणापि संपद्यमानौ तौ रुक्मिणीवासुदेवावेव । अन्येषां तद्दर्शनभाग्यं न सम्भवतीति भावः । [4] द्वन्द्वं युग्मं च मोक्षादिमिथुनं कलहो रहः' इति यादवः ॥ १०७ ॥

**अथ समुदितहर्षैरादृतो मन्त्रिवृद्धैः**
**सुरपतिदयिताभिः स्तूयमानापदानः ।**
**रुचिमिव निरपायां रुक्मिणीं प्राप्य हृष्यन्**
**यदुपतिरधिचक्रे यायजूकाधिकारम् ॥ १०८ ॥**

**अथेति**—अथ अनन्तरं समुदितहर्षैः स्वामिमहोत्सवादुत्पन्नसन्तोषैः मन्त्रिवृद्धैः आदृतः श्लाघितः सुरपतिदयिताभिः अप्सरोभिः स्तूयमानापदानः स्तूयमानपराक्रमः "अपदानं पराक्रमः" इति वैज-

---

[1] प्रतिपादितः -क. ख. ग. घ [2] 'पुण्यधृग्भिः' इति 'पुण्यवद्भिः' इति वा मूलानुरूपं विवरणमिति भाति. [3] 'इति डप्रत्ययः' इति पाठस्साधुः. [4] अत्र 'द्वन्द्वं युग्मं हिमोष्णादिमिथुनं कलहो रहः' इति पाठः स्यात् ।

यन्ती , निरपायां स्थिरां रुचिं स्वस्य कान्तिमिव स्थितां रुक्मिणीं प्राप्य तुष्यन् यदूनां पतिः कृष्णः यायजूकाधिकारं इज्याशीलानामधिकारं यागानुष्ठानं अधिचक्रे आरेभे । अधिपूर्वः करोतिरारम्भार्थः । अत्र क्रियाफलस्य शिष्टाचारप्रमाणकलोकानुग्रहस्य अकर्तृगामित्वेऽपि कर्तृगामित्वारोपेणात्मनेपदम् । यद्वा मनुष्याधिकारेषु यागेषु मनुष्यभावाभिनयादधिकारमधिचक्रे, न पराजिग्ये, सेह इत्यर्थः । अस्मिन् पक्षे "अधेः प्रसहने" (पा. सू. १-३-३३) इति सूत्रान्नित्यमात्मनेपदम् । तत्र 'प्रसहनमपराजयः, परजये [1]शक्तसमक्रियया तदभावः क्षमापर्यवसायी, इति व्याख्यातं धातुवृत्तौ । (तनादि. २७५ पृ.) तथा भारविप्रयोगोऽपि—

"[2]भवादृशाश्चेदधिकुर्वते परान्निराश्रया हन्त हता मनस्विता"॥

(किराता. १-४३) इति । मालिनीवृत्तम् । "ननमयययुतेयं मालिनी भोगिलोकैः" (वृत्तरत्नाकरे. ३-८७) इति लक्षणात् ॥ १०८॥

---

[1] अत्र 'शक्तस्य क्षमया तदभावः' इति पाठस्समुचित इति भाति । अत एव माधवीयधातुवृत्तौ कृञ्धातुप्रक्रियानिरूपणावसरे 'प्रसहनमभिभवः, अपराजयो वा । अपराजयश्च पराभिभवे शक्तस्य क्षमयैव यस्तदभावस्सः' इत्युक्तं दृश्यते.

[2] अत्र 'भवादृशाश्चेदधिकुर्वते रतिं' इति मल्लिनाथसुधिया पाठोऽभ्युपगम्य 'प्रसहनं परिभवः' इति काशिकाग्रन्थमनुरुध्य रतिं संतोषं अधिकुर्वते स्वीकुर्वत इति व्याख्याय "यद्यप्यत्र प्रसहनस्यासंगतेः 'अधेः प्रसहने' (पा. सू. १-३-३३) इत्यात्मनेपदं न भवति, तथाऽप्यस्याकर्त्रभिप्रायविवक्षायामेव प्रयोजकत्वात्कर्त्रभिप्राये 'स्वरितञितः' (पा. सू. १-३-७२) इत्यात्मनेपदं प्रसिद्धम्" इति निर्वाहः कृतः । अत्रत्यदीक्षितप्रवरग्रन्थपर्यालोचनायां तु 'अधिकुर्वते परान्' इति तत्र पाठात् 'भवादृशा अपि निकारं प्राप्य परान् यदि सहन्ते' इत्यर्थाभ्युपगमात् 'अधेः प्रसहने' (पा.सू. १-३-३३) इत्यात्मनेपदेनैव प्रयोगनिर्वाहो भवतीत्याकल्यते । तथा विद्यामाधवीयव्याख्यायामप्येतत्पाठाभिप्रायेणैव "परानधिकुर्वते 'अधिरीश्वरे' (पा. सू. १-४-९७) इति कर्मप्रवचनीयसंज्ञा, शत्रूनीश्वरीकुर्वत इत्यर्थः" इति प्रकारान्तरेणापि व्याख्यातं दृश्यते.

सुभगमुपलबिम्बे शातकुम्भेऽपि रत्नं
कनति विपिनभागे कालकण्ठेऽपि गङ्गा।
वशिकनृपगृहे सा वासुदेवेऽप्यदीव्यत्
न हि भवति विशेषः क्वापि नित्योन्नतानाम् ॥ १०९ ॥

सुभगमिति—रत्नं उपलबिम्बे पाषाणप्रतिमायां, "बिम्बोऽस्त्री [1]मण्डलं संघे प्रतिमामुखलक्ष्मसु" इति यादवः, शातकुम्भे सुवर्णेऽपि सुभग चक्षुष्यम्। गङ्गा विपिनभागे काननप्रदेशे कालकण्ठे शिवेऽपि कनति दीप्यते। एवं सा रुक्मिणी वशिकनृपगृहे [2]तुच्छभीष्मकस्य राज्ञो गृहे "वशिकं तुच्छरिक्तके" इत्यमरः, वासुदेवेऽपि अदीव्यत् अद्योतत। नित्योन्नतानां सदा स्वत एव उत्कृष्टानां क्वापि आश्रयविशेषे विशेषः न्यूनाधिकभावभेदो न भवति हि। अत्रोपमानोपमेयवाक्येषु सुभगं कनति अदीव्यदिति शब्दानां एकार्थपर्यवसायितया प्रतिवस्तूपमालङ्कारः, न हि भवतीत्यादौ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेति तयोः परस्परानु[3]प्राणितत्वेन सङ्करः। मालिनी [4]वृत्तम् ॥

[5]इति श्रीभरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनुना
अप्पयदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने
त्रयोदशस्सर्गः ॥

---

1 'मण्डलसमप्रतिमा' इति मुद्रितवैजयन्त्यां पाठ उपलभ्यते. 2 तुच्छे भीष्मकस्य—ख. 3 प्राणितत्वेन तयोः—क. 4 वृत्तमेतत्—ख. 5 इति विश्वजिद्याजि—क. ख. ग.

# चतुर्दशस्सर्गः

अथ जाम्बवतीसत्यभामापरिणयनोपो[1]द्धातं स्यमन्तकोपाख्यानमारभते—

अथैकदा रोधसि पश्चिमोदधे-
रदभ्रसत्राजितभक्तियन्त्रितः ।
त्रयीमयश्चन्द्रसमीकृतद्युतिः
प्रसेदिवान् प्रादुरभूद्दिवाकरः ॥ १ ॥

अथेति—अथ रुक्मिणीविवाहान्तभगवल्लीलानन्तरं एकदा कदाचित् पश्चिमोदधेः रोधसि तीरे अदभ्रसत्राजितभक्तियन्त्रितः अनल्पया सत्राजिताख्यस्य यादवस्य भक्त्या वशीकृतः आराधितः अत एव प्रसेदिवान् प्रसन्नः त्रयीमयः [2]वेदत्रयमयः दिवाकरः चन्द्रसमीकृतद्युतिः चन्द्रसदृशीकृतदीप्तिस्सन् सामीप्याद्भक्तस्य तापो मा भूदिति अनुष्णीकृतदीप्तिस्सन् प्रादुरभूत् प्रादुर्भूतः । "स्तोकाल्पक्षुल्लकास्सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु" इत्यमरः । [3]वंशस्थवृत्तमेतत् । "जतौ तु वंशस्थमुदीरितं जरौ" (वृत्तरत्नाकरे. ३–४६) इति लक्षणात् ॥

अनल्पतेजोनिधिमप्रमाद्यतां
प्रसूतिमिष्टस्य धनस्य भूयसः ।
स्वकण्ठलग्नं द्युमणिः स्यमन्तकं
महामणिं भूमिभृते वरं ददौ ॥ २ ॥

अनल्पेति—द्युमणिः दिवः गगनस्य मणिः सूर्यः "दिव उत्" (पा. सू. ३–९–१३१) इत्युत्त्वम्, अथवा द्युशब्दः

---

[1] द्धातस्यमन्त–क. ख. ग. घ. [2] वेदमयः–क. ख. ग. घ.
[3] 'वंशस्थवृत्तम्—क. ख. ग. सर्गेऽस्मिन् वंशस्थवृत्तम्–अ.

[1]उकारान्त आकाशपरो दिवसपरो वा, "आकाशे दिवसे च द्युः" इति यादवः, अनल्पतेजोनिधिं अनल्पस्य तेजसः निधानं अप्रमाद्यतां अशुद्धत्वादिप्रमादरहितानां इष्टस्य भूयसः बहुधनस्य प्रसूतिं प्रसूतिकारणं [2]'कर्तरि च' इत्यादिना करणे क्तिन्, कण्ठे लग्नं भूषणतया सक्तं स्यमन्तकं स्यमन्तकाख्यं महामणिं उत्तमरत्नं 'सन्महत्' (पा. सू. २-१-६१) इत्यादिना पूजावचनस्य महच्छब्दस्य [3]समासः भूमिभृते राज्ञे वरं ददौ। प्रसन्नाद्देवात्प्राप्यमीप्सितं वरः। "वरो ना रूपजामात्रोः देवादेरीप्सिते वृतौ" इति यादवः ॥ २ ॥

**तमुग्रसेनार्थमियेष कंसजित्**
**न वार्यते राजनि रत्नहारिता।**
**प्रतीत्य सत्राजित एतदप्रियं**
**क्वचिन्निचिक्षेप गुणाधिके मणिम् ॥ ३ ॥**

**तमिति**—कंसजित् कृष्णः तं स्यमन्तकं उग्रसेनार्थं उग्रसेनाय इदं यथा भवति तथा इयेष। ननु कृष्णस्यापि कथं परद्रव्ये स्पृहा, तत्राह—न वार्यत इति। राजनि रत्नहारिता उत्तमवस्तुहर्तृता न वार्यते न निषिध्यते। 'राजा रत्नस्य भाजनम्' इति न्यायात्। अत उग्रसेनस्य राज्ञः कृते [4]तदभ्यर्थनं युक्तमिति भावः। एतत् कृष्णस्पृहारूपं अप्रियं स्वस्यानिष्टं सत्राजितः प्रतीत्य अवगम्य गुणाधिके विश्वसनीयत्वादिगुणाढ्ये क्वचित् द्विजे मणिं निचिक्षेप निक्षिपति स्म। उग्रसेनार्थमिति [5]'अर्थेन सह नित्यसमासः सर्वलिङ्गता च' इति वक्तव्यात् क्रियाविशेषणत्वेन नपुंसकलिङ्गता ॥ ३ ॥

---

[1] ओकारान्तः—क. [2] अत्र 'अकर्तरि च' इति पाठः स्यात्। 'स्त्रियां क्तिन्' (पा. सू. ३-३-९४) इत्यत्र 'अकर्तरि च कारके' इत्यनुवृत्तया करणे क्तिनिति तद्भावः स्यात्. [3] 'आन्महतः' (पा. सू. ६-३-४६) इत्यादिना महतस्तकारस्यात्वं च बोध्यम्. [4] तदर्थनं—अ. [5] 'अर्थेन सह नित्यसमासवचनम्' (वा-१२७३) सर्वलिङ्गता च' (वा. १२७४) इति वार्तिकद्वयं वार्तिकपाठे.

यदेकमेकेन च लब्धमेकतो
रसेन रत्नामिषमर्थकाङ्क्षिणा ।
बभूव तद्बन्धुविरोधमादध-
त्क्रमाद्बहूनां विनिपातकारणम् ॥ ४ ॥

यदिति—यदेकं रत्नामिषं रत्नरूपं [1]भोग्यवस्तु एकतः एकस्माद्धातुः अर्थकाङ्क्षिणा तत्प्रसूतधनकाङ्क्षिणा एकेन पुंसा रसेन आदरेण लब्धं तत् बन्धूनां विरोधमादधत् क्रमात् कालक्रमेण बहूनां विनिपातस्य निधनस्य कारणं बभूव । अत्र "कश्चिन्निचिक्षेप गुणाधिके मणिम्" इत्येतदनन्तरमित्थं पौराणिकी कथा—[2]तमेतं मणिं सत्राजितस्यानुजः प्रसेनः कदाचिद्धृत्वा मृगयार्थं वनमगमत् । तत्र कश्चित्सिंहस्तं हत्वा मणिमग्रहीत् । सिंहमपि हत्वा जाम्बवान् मणिमादित । ततः कृष्णेन प्राक् तस्य मणेरर्थिततया तेनैव कश्चित्प्रसेनं मारयित्वा मणिर्गृहीत इति पुरे मृषाभिशस्तिरभूत् । तामपमार्ष्टुकामः कृष्णः काननं गत्वा जाम्बवतो बिले तं निर्जित्य मणिं गृहीत्वा द्वारकायां यदूनां समक्षं पुनरपि तं सत्राजिते न्यवीविशत् । ततस्सत्राजितेन मृषाभिशस्तिः कृतेति भीतेन कृष्णाय स्वदुहितरि सत्यभामायां दत्तायां अक्रूरेण स्वस्मै प्राक् प्रतिश्रुता कन्या अन्यत्र दत्तेति सत्राजिते सञ्जातरोषेण प्रेरितः शतधन्वा रात्रौ सुप्तं सत्राजितं मारयित्वा [3]मणिमग्रहीदित्यर्थं सत्यभामामुखेनाकर्ण्य तस्याः प्रतिये शतधन्वानं हन्तुकामे कृष्णे कृष्णाभिप्रायं विदित्वा मणिमक्रूरे निवेश्य वेगिनीमश्वामारुह्य पलायमानं शतधन्वानं बलदेवेन सह रथेन मिथिलापर्यन्तमन्वधावत् । ततोऽवसन्नायामश्वायामवरुह्य पद्भ्यां पलायमानं तं कृष्णः स्वयमपि रथादवरुह्य पद्भ्यामाधाव्य मारयित्वा तस्मिन् [4]मणावनुपलब्धेः प्रतिनिवृत्य रथे स्थिताय बलदेवाय मारित-

[1] भोग्यं वस्तु—अ. [2] तं मणिम्—क. ख. घ. [3] मणिमग्रहीत् । इत्थं—अ.
[4] 'मणेरनुपलब्धेः' इति 'मणावनुपलब्धे' इति वाऽत्र पाठस्समीचीनः.

श्शतधन्वा, न च मणिरुपलब्ध [1]इत्यवदत् । ततः किञ्चिदाविश्वासेन विमनायमान इव बलः कृष्णं द्वारकां प्रेषयित्वा स्वयं मिथिलां प्रविश्य तत्र मैथिलेन पूज्यमानः वत्सरत्रयमवात्सीदिति । एवं बहूनां विरोधो विनिपातश्च श्लोकेन संक्षिप्य प्रदर्शितः ॥ ४ ॥

स्यमन्तकोदन्तविशेषसंभवां
मृषाभिशस्तिं शमयन्नथात्मनः ।
प्रसेनविध्वंसकसिंहघातिनो
बिलं ययौ जाम्बवतो बलानुजः ॥ ५ ॥

**स्यमन्तकेति**—अथ बलानुजः कृष्णः स्यमन्तकोदन्तविशेषसंभवां पूर्वोक्तस्यमन्तकवृत्तान्तविशेषप्रभवां आत्मनः मृषाभिशस्तिं मिथ्यापवादं शमयन् 'अर्जयन् वसति' इतिवत् [2]हेतौ शतृप्रयोगः, शमयितुमि[3]च्छतीति यावत्, प्रसेनविध्वंसकसिंहस्य हन्तुः जाम्बवतः बिलं ययौ ॥ ५ ॥

स्तनन्धयोपान्तनिबद्धगीतया
ददर्श धात्र्या विधृतं करेण सः ।
घनाष्टभारप्रभवं दिनेदिने
मणीश्वरं दर्शितकौस्तुभश्रियम् ॥ ६ ॥

**स्तनन्धयेति**—सः कृष्णः स्तनन्धयोपान्तनिबद्धगतिया जाम्बवतश्शिशोस्समीपे कृतगानया धात्र्या मात्रा उपमात्रा वा करेण विधृतं दिनेदिने प्रतिदिनं घनाष्टभारप्रभवं घनानामष्टौ भाराः पलषोडशसहस्रं "तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः" इत्यमरः,

[1] इति विवदन्—ग. [2] 'लक्षणहेत्वोः क्रियायाः' (३–२–१२६) इति सूत्रेणेति बोध्यम्. [3] अत्र 'इच्छाम्निति' इति पाठस्स्यात्.

तेषां प्रसवितारं दर्शितकौस्तुभश्रियं कौस्तुभसमानकान्तिमिति यावत्, मणीश्वरं मणिप्रवरं ददर्श ॥ ६ ॥

**जिघृक्षया दत्तदृशं च तत्र तं**
**जरानिरुद्धोऽपि जवेन जाम्बवान् ।**
**अरोधनीयं विबुधैरपि स्वयं**
**रुरोध नैसर्गिकसत्त्वरोषितः ॥ ७ ॥**

**जिघृक्षयेति**—तत्र बिले जिघृक्षया दत्तदृशं ग्रहीतुमिच्छया मणौ दत्तदृशं, न केवलं मणिं दृष्टवन्तं, किन्तु तज्जिघृक्षया तमेकाग्रं पश्यन्तं चेति चकारार्थः, विबुधैरपि अरोधनीयं रोद्धुमशक्यं तं कृष्णं जरया निरुद्धोऽपि जाम्बवान् नैसर्गिकसत्त्वरोषितः आजानसिद्धेन बलेन प्रकोपितस्सन् जवेन स्वयं रुरोध यथा मणिं न गृह्णाति तथा रुन्धे स्म ॥

**मलिम्लुचं कश्चिदिवागतं हरिं**
**वनेचरः प्रेक्ष्य तदर्हविक्रियः ।**
**अहेतिहस्तं स्वयमप्यनायुधः**
**प्रसह्य तं [1]बाधयितुं प्रचक्रमे ॥ ८ ॥**

**मलिम्लुचमिति**—वने चरतीति वनेचरो जाम्बवान्, "तत्पुरुषे कृति बहुलम्" (पा. सू. ६-३-१४) इति सूत्रेण सप्तम्या अलुक्,

[1]साधयितुं-ख. अत्र 'बाधयितुं' इति ग्रन्थाक्षरमुद्रितमूलकोशेऽपि पाठो दृश्यते। अस्मिंस्तु पाठे बाधतेश्चौरादिकत्वं कल्पनीयं, णिजर्थस्य वाऽविवक्षाऽङ्गीकार्या स्यात् । तस्मादत्र किञ्चिल्लिपिसाम्यकृतभ्रान्त्या 'राधयितुं' इत्यस्य स्थाने 'बाधयितुं' इति लिखितं स्यादिति भाति । तत्र च 'राधो हिंसायाम्' (पा. सू. ६-४-१२३) इत्यनुग्राहकस्य सत्त्वात् 'अयं स्वादिश्चुरादिश्च' इति माधवीयायां धातुवृत्तौ दिवादौ राध्यतिप्रक्रियानिरूपणावसरेऽभिधानाच्च हिंसार्थकस्य राधयतेः प्रमितत्वमिति सुवचम् । अत एवैतद्व्याख्यायां हिंसितुमिति विवरणं दृश्यते । इत्थं च व्याख्यायामपि 'राधयितुं' इति पाठस्समीचीन इति भाति ।

आगतं[1] कञ्चित् अप्रसिद्धं मलिम्लुचं[2]चोरमिव प्रेक्ष्य तदर्हविक्रियः चोरोचितविक्रियः चोरनिग्रहमात्रोचितविकारस्सन् अहेतिहस्तं अनायुधकरं तं कृष्णं स्वयमप्यनायुधः आयुधरहितः प्रसह्य बलात्कारेण साधयितुं हिंसितुं प्रचक्रमे प्रक्रमते स्म ॥ ८ ॥

**अनन्यतन्त्रस्य पितुः पितामहः**
**सुतस्य चारब्धमवेक्ष्य संयुगम् ।**
**समीहितोदर्कमिदं द्वयोरिति**
**प्रबुध्यमानो न निरोधमादधे ॥ ९ ॥**

**अनन्येति**—पितामहः चतुर्मुखः अनन्यतन्त्रस्य स्वतन्त्रस्य पितुः स्वजनकस्य कृष्णस्य सुतस्य स्वपुत्रस्य जाम्बवतश्च संयुगं युद्धं अवेक्ष्य इदं द्वयोः कृष्णजाम्बवतोः समीहितोदर्कं अभिमतभाविफलमिति प्रबुध्यमानः जानन् निरोधं नादधे न चकार । "उदर्कः फलमुत्तरम्" इत्यमरः । संयुगपरस्यापि इदंशब्दस्य लिङ्गशेषाविवक्षया [3] सामान्ये नपुंसकप्रयोगः ॥ ९ ॥

**मिथस्तयोरस्तदयं विमथ्नतो-**
**रनायुधं युद्धमपेतकैतवम् ।**
**अकल्पितप्राश्निकमन्ववैक्षत**
**स्वयं चतुर्भिर्दशभिश्च साक्षिभिः ॥ १० ॥**

**मिथ इति**—अस्तदयं क्षिप्तदयं निर्दयं यथा तथा मिथो विमथ्नतोः [4]अन्योन्यमवमथ्नतोः तयोः अनायुधं अपेतकैतवं अकपटं अकल्पितप्राश्निकं अकृतमध्यस्थं युद्धं स्वयं ताभ्यां चतुर्भिः दशभिश्च चतुर्दशभिश्च साक्षिभिः अन्ववैक्षत । ततोऽन्ये साक्षिणो नाभूवन्नित्यर्थः ।

---

1 अत्र "हरिं कृष्णं" इत्यधिकेन भाव्यम् । 2 "प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः" इत्यमरः । 3 सामान्येन नपुंसक-ख. 4 अन्योन्यं मृद्नतोः—ञ.

"[1]मल्यः तटस्थः प्राश्नीकः साक्षी "इति यादवः ।

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥

इति चतुर्दश साक्षिणः स्मृत्युक्ताः ॥ १० ॥

**अरिष्टचाणूरमुखेष्वलक्षितं**
**प्रदर्शयन् ऋक्षपतेः पराक्रमम् ।**
**चिरं ददौ युद्धमचिन्त्यचेष्टितो**
**मनस्विनस्तस्य मधुप्रभञ्जनः ॥ ११ ॥**

**अरिष्टेति**—अरिष्टचाणूरमुखेषु अरिष्टचाणूरप्रभृतिषु कंसमल्लेषु अलक्षितं अदृष्टं ऋक्षपतेः भल्लूकानां पत्युर्जाम्बवतः पराक्रमं [2]प्रदर्शयन् स्वयं योधनेन स्फुटीकारयन् अचिन्त्यचेष्टितः अतर्क्यचरितः मधुप्रभञ्जनः मधोरामर्दनः कृष्णः मनस्विनः उत्साहवतः तस्य युद्धं चिरं ददौ अनुवर्तयामासेत्यर्थः ॥ ११ ॥

**प्रकीर्यमाणा निजमुष्टिमुद्गर-**
**क्षताकृतेर्जाम्बवतः क्षतोद्भवैः ।**
**रराज रामावरजस्य सा तनुः**
**सशक्रकोपा वसुधेव शाद्वला ॥ १२ ॥**

**प्रकीर्यमाणेति**—निजमुष्टय एव मुद्गराः तैः क्षताकृतेः क्षतशरीरस्य जाम्बवतः क्षतोद्भवैः असृग्भिः प्रकीर्यमाणा रामावरजस्य कृष्णस्य सा तनुः सशक्रकोपा शक्रकोपाख्यैर्जन्तुभिस्सहिता [3]शाद्वला [4]शादवती तृणहरिता वसुधेव रराज ॥ १२ ॥

---

[1] 'मध्यस्थः प्राश्निकस्साक्षी मूली स्याद्दृष्टसाक्षिणि' इति मुद्रितवैजयन्तीकोशे दृश्यते. [2] दर्शयन्—क. ग. घ. [3] 'नडशादाड्ड्वलच्' (४,२-८८) इत्यनेन बालतृणावाचिनः शादशब्दात् चातुरर्थिको ड्वलच् प्रत्ययः. [4] 'शाद्वलवती' इति क. घ. पुस्तकयोर्दृश्यमानः पाठोऽपपाठः । शाद्वलशब्देनैव तृणहरितेत्यर्थलाभेन मतुबन्तेन विवरणस्यानावश्यकत्वात्.

स ऋक्षराजः क्षतजैर्जयश्रियः
कुचार्पितैः कुङ्कुमकर्दमैरिव ।
परिष्कृताङ्गः प्रचितोन्नताकृतिः
सगैरिकक्ष्माधरसंपदं दधौ ॥ १३ ॥

स इति—क्षतजैः रक्तैः जयश्रियः कुचार्पितैः कुचयोर्लिप्तैः कुङ्कुमकर्दमैरिव परिष्कृताङ्गः प्रचितोन्नताकृतिः उपचितोन्नतशरीरः ([1] त व्रतयोः व्रह्माणं न त्यक्तुं गतेति विशेषः) स ऋक्षराजः जाम्बवांश्च सगैरिकक्ष्माधरसम्पदं अरुणधातुभिस्सहितस्य पर्वतस्य कान्ति दधौ॥ १३

अशेषयज्ञाग्रहरं समागतं
जिगीषयाऽनुव्रतया स दीक्षितः ।
अतोषयत्संयुगसप्ततन्तुना
विभाव्यऋत्विग्विधिना भुजादिभिः ॥ १४ ॥

अशेषेति—जिगीषया जेतुमिच्छयैव अनुव्रतया अनुगतं [2] व्रतं यया तया धर्मपत्न्या उपलक्षितः युद्धमखार्थं गृहीतदीक्षः सः जाम्बवान् अशेषयज्ञानां अग्रहरं श्रेष्ठभागभाजं समागतं कृष्णं भुजादिभिः नियुद्धोपयोगिभुजचरणाद्यवयवैः विभाव्यऋत्विग्विधिना संलक्ष्यऋत्विक्संविधानेन 'ऋत्यकः'(पा. सू. ६-१-१२८) इति वैकल्पिकः प्रकृतिभावः, संयुगसप्ततन्तुना युद्धमखेन अतोषयत् । 'सप्ततन्तुर्मखः क्रतुः' इत्यमरः ॥ १४॥

तलप्रहारैरथ मुष्टिपातनैः
पदाभिघातैर्भुजयन्त्रपीडनैः ।
मिथःप्रतिक्षेपपुनर्गृहीतिभिः
नियुद्धचर्यानिपुणौ निजघ्नतुः ॥ १५ ॥

तलेति—अथ तलप्रहारैः चपेटापातनैः "तलं स्वरूपाधरयोः

[1] अत्र कुण्डलितस्थाने "अत्र प्रचयो बृंहणं, औन्नत्यं तुङ्गतेति विशेषः" इति शुद्धपाठेन भाव्यमिति भाति. [2] 'व्रतं' इतीदं—क. घ. कोशयोर्गलितम्.

खड्गमुष्टिचपेटयोः" इति विश्वः, मुष्टीनां पातनैः पदाभिघातैः भुजयन्त्रपीडनैः भुजद्वयसंयोजनरूपयन्त्रपीडनैः [1] मिथः अन्योन्यं प्रतिक्षेपपुनर्गृहीतिभिः प्रतिक्षेपाः भुजाभ्यामुद्धृत्य दूरतः क्षेपाः, पुनर्गृहीतयः पुनस्तस्यैव ग्रहणानि, ताभिश्च नियुद्धचर्यानिपुणौ द्वन्द्वयुद्धाचरणकुशलौ निजघ्नतुः नितरां हतः[2] ॥ १५ ॥

[3] कृतप्रतीकारविशेषतोषितौ
परस्परच्छिद्रनिवेशितेक्षणौ ।
दिशागजेन्द्राविव दर्पदुर्मदौ
दिनानि तौ निन्यतुरेकविंशतिम् ॥ १६ ॥

कृतेति — कृतप्रतीकारविशेषतोषितौ कृतस्य एकेनाचरितस्य मुष्टिघातादेः प्रतीकार इतरेण कृतः मुष्टिघातादिरेव तेनात्यन्ततुष्टौ परस्परयोरन्योन्ययोः छिद्रेषु रन्ध्रेषु निवेशितेक्षणौ दत्तचक्षुषौ दिशागजेन्द्राविव दर्पदुर्मदौ बलाधिक्याहङ्कारेण मदान्धौ तौ ऋक्षराजश्रीकृष्णौ एकविंशतिं दिनानि कृतैकविंशतिसङ्ख्याकानि दिवसानि निन्यतुः नीतवन्तौ ॥ १६ ॥

---

[1] मिथःप्रतिक्षेपपुनर्गृहीतिभिः परस्परस्थैः प्रतिक्षेपैः पुनर्ग्रहणैश्च नियुद्धचर्यानिपुणौ बाहुयुद्धक्रीडाक्रियाकुशलौ तौ निजघ्नतुः परस्परं हननं चक्रतुः—**ग. ञ.** [2] अत्र 'हतः स्म' इति 'अहताम्' इति वा विवरणेन भाव्यमिति भाति. [3] "कृतप्रतीकारविशेषतोषितौ प्रथमं केनचित्कृतस्यागसः तदन्यकृतेन प्रतीकारेण अतिशयेन संतोषितौ ततस्स्वानुरूपत्वस्फुटीभावात्, न तु व्यथितौ, परस्परच्छिद्रनिवेशितेक्षणौ अन्योन्यं ग्रहणरन्ध्रान्वेषणे निहितलोचनौ दर्पदुर्मदौ दर्पेणोद्वृत्तौ तौ दिशागजेन्द्राविव स्थितौ एकविंशतिं दिनानि निन्यतुः बाहुयुद्धेन अतिवाहयांचक्रतुः । एकविंशतिमित्यस्य 'विंशत्याद्यास्सदैकत्वे' इत्येकवचनान्तता" इति—**ग. ञ.** कोशयोरेतच्छ्लोकव्याख्या दृश्यते.

अहीयत प्रत्यहमृक्षभूपतिः
स्वलीलया कंसरिपुस्समैधत ।
तमःप्रकाशाविव तौ दिनागमे
बभूवतुस्संयति पूर्वपश्चिमौ ॥ १७ ॥

**अहीयतेति**—ऋक्षभूपतिः भल्लूकानां राजा जाम्बवान् प्रत्यहं अहन्यहनि अहीयत क्षीणबलोऽभवत् । कंसरिपुः श्रीकृष्णः स्वलीलया स्वस्य केलिरूपया युद्धक्रियया [1] समैधत प्रतिदिनं बलेन व्यवर्धत । उक्तार्थमेव दृष्टान्तेन विशदयति—पूर्वपश्चिमौ प्रथमोपात्तानन्तरोपात्तौ ऋक्षभूपतिकंसरिपू संयति दिनागमे प्रभातकाले तमःप्रकाशाविव अन्धकारालोकाविव बभूवतुः जातौ । यथा प्रभाते तमसः क्षयः प्रकाशस्याभिवृद्धिः तद्वदेव जाम्बवतो बलक्षयः कृष्णस्य बलवृद्धिर्जातेति भावः ॥ १७ ॥

[2] स तेजसा यादवतिग्मतेजसः
समिध्यमानेन निवारितोन्नतिः ।
शरन्नदीपूर इव स्फुटाशयः
शनैश्शनैश्शान्तिमवाप जाम्बवान् ॥ १८ ॥

**स इति**—समिध्यमानेन दीप्यमानेन यादवः श्रीकृष्णः तिग्मतेजा इवेति उपमितसमासः, तस्य तेजसा पराक्रमेण आतपेन च,

---

1 "समैधत समृद्धबलोऽभवत् । पूर्वपश्चिमौ वयसा पूर्वापरभूतौ संयति युद्धे दिनागमे तमःप्रकाशाविव बभूवतुः यथा प्रभाते पूर्वपश्चिमौ पुराणनूतनौ तमःप्रकाशावुपचितापचितौ भवतः, तथा बभूवतुरित्यर्थः--**ग. अ.** 2 "**स इति**—सः यादवः तिग्मतेजा इव तस्य समिध्यमानेन स्वयमेव दीप्यमानेन, इन्धेः कर्मकर्तरि यक्, तेजसा पराक्रमेण "तेजो धाम्नि पराक्रमे" इति विश्वः, निवारितोन्नतिः निरुद्धशौर्योत्कर्षः अत एव स्फुटाशयः विस्तीर्ण (विशीर्ण) हृदयः जाम्बवान् शनैश्शनैः शान्तिं क्षयमवाप, शरन्नदीपूर इव, स यथा वर्षात्ययात् प्रबलीभवता सूर्यतेजसा निवारितोत्कर्षो नैर्मल्यात् व्यक्ताभ्यन्तरः शनैः क्षयमवाप्नोति तद्वदित्यर्थः" इति–**ग. अ.** कोशयोरेतच्छ्लोकव्याख्या दृश्यते ॥ १८ ॥

निवारिता उन्नतिः आनन्त्यं बलाधिकता अगाधता च यस्य स तथोक्तः सः जाम्बवान् स्फुटाशयः प्रकाशमानहृदयः शरन्नदीपूरः शरत्कालनदीप्रवाह इव शनैश्शनैः दिनक्रमेण शान्तिमवाप प्रशमं प्राप्तवान्। उपमालङ्कारः ॥ १८ ॥

[1] वलीभिरापादतलं तरङ्गितः
सिरालुदेहः पलितैस्सितासितः।
चिरप्रवृत्ताहवसम्भृतश्रमो
न चेतसा ऋक्षपतिः प्रचुक्षुभे ॥ १९ ॥

**वलीभिरिति**—आपादतलं शिरःप्रभृति पादतलपर्यन्तं वलीभिः वार्धकप्रयुक्तरेखाभिः तरङ्गितः सञ्जाततरङ्गः सिरालुदेहः सिराभिर्धमनीभिः सन्ततो देहो यस्येति तथोक्तः पलितैः सितकेशैः सितासितः केशैस्सितः शरीरकन्त्या असित इत्यर्थः, ऋक्षपतिः चिरप्रवृत्ताहवसम्भृतश्रमः बहुकालारब्धसङ्ग्रामसम्पादितश्रान्तिरपि चेतसा मनसा न प्रचुक्षुभे अतिवृद्धो जाम्बवांश्चिरयुद्धसञ्जातश्रमोऽपि मनोधैर्येण क्षुब्धो नाभवदित्यर्थः ॥ १९ ॥

---

1 "**वलीभिरिति**—आपादतलं पादाधोभागपर्यन्तं वलीभिः जराविश्लथत्वविकारैः तरङ्गितः संजाततरङ्गः सिरालुदेहः त्वचः क्षीणबलत्वादभिव्यक्तसिराशालिदेहः, सिराशब्दात् 'प्राणिस्थादातः' (पा. सू. ५-२-९६) इति लच्प्रत्ययः। पलितैः जरसा शुक्लैः केशरोमभिः सितासितः धवलमेचकः 'वर्णो वर्णेन' (पा. सू. २-१-६९) इति समासः, अर्धपलित इति यावत्, चिरप्रवृत्ताहवसंभृतश्रमः चिरप्रवृत्तेन युद्धेन प्राप्तश्रमः ऋक्षपतिः जाम्बवान् चेतसा न प्रचक्षुभे न भीतो बभूव। 'क्षुभ संचलने' (भ्वादि ७५१) भौवादिको धातुरात्मनेपदी। शारीरबलाभावेऽपि मानसबलेन स्थिरोऽभूदित्यर्थः" इति—ग. ञ. कोशयोरेतच्छ्लोकव्याख्या दृश्यते.

स्वविक्रमादप्रतिमात्सुरद्विषां
भयानकादानकदुन्दुभेस्सुतः ।
[1]अबिभ्यतं प्रेक्ष्य तमृक्षपुङ्गवं
महासुरं केवलमस्मरन्मधुम् ॥ २० ॥

स्वविक्रमादिति—आनकदुन्दुभेः वसुदेवस्य सुतः कृष्णः अप्रतिमात् असदृशात् सुरद्विषां असुराणां भयानकात् [2]भयजनकात् स्वविक्रमात् स्वस्य पराक्रमात् अबिभ्यतं अत्रस्यन्तं 'नाभ्यस्ताच्छतुः' (पा. सू. ७-१-७८) इति नुमागमनिषेधः, ऋक्षपुङ्गवं ऋक्षश्रेष्ठं तं प्रेक्ष्य मधुं मधुनामानं महासुरं केवलमस्मरत् मधुरेवायमिति व्यचिन्तयदित्यर्थः। कर्मणश्शेषत्वविवक्षाभावात् 'अधीगर्थ' (पा. सू. २-३-५२) इत्यादिना न षष्ठी ॥ २० ॥

युगान्तदम्भोलिनिपातभीषणैः
निहन्यमानं निजमुष्टिमुद्गरैः ।
स्वनाभिपद्मोद्भवजृम्भिकासुतं
बलानुजन्मा युधि बह्वमन्यत ॥ २१ ॥

युगान्तेति—बलस्य अनुजन्मा कृष्णः युगान्तदम्भोलिनिपातभीषणैः कल्पान्ताशनिपातवत् भयंकरैः निजमुष्टय एव मुद्गराः आयुधविशेषाः, निजमुष्टयः मुद्गरा इवेति वा, 'द्रुघणे मुद्गरघनौ' [3]इत्यमरः, तैः निहन्यमानं एकद्व्यादिहननमात्रेणाखिन्नतया चिरानुवर्तमाननिहननं, न तु निहतमिति भावः, स्वनाभिपद्मोद्भवस्य ब्रह्मणः जृम्भिकायाः सुतं जृम्भासमये तन्मुखान्निर्गतं जाम्बवन्तं बहु यथा तथा अमन्यत ॥ २१॥

---

[1] अबिभ्यतां—झ. [2] भयंकरात्—ग. ञ [3] इति यादवः—क. ग. ञ.

दशननायोधनकेलिकिङ्करं
परामृशन्नृक्षपतिं परः पुमान् ।
बलीयसस्तस्य बहूपकारवित्
बभञ्ज दर्पं भुजयन्त्रलीलया ॥ २२ ॥

**दशाननेति**—ऋक्षपतिं जाम्बवन्तं दशाननायोधनकेलौ रावण-युद्धक्रीडायां किङ्करं स्वभृत्यं परामृशन् विचिन्तयन् बहूपकारवित् तदा तत्कृत [1]बहूपकारज्ञः परः पुमान् कृष्णः भुजयन्त्रलीलया संयोजित-भुजद्वयरूपस्य यन्त्रस्य विलासेन बलीयसः [2]बलवत्तरस्य दर्पं बभञ्ज, न तु देहमिति भावः ॥ २२ ॥

तमादितो मानुषमात्रमागतं
सदृक्षमृक्षाधिपतिस्ततः परम् ।
अथाधिकं सामिनिरुद्धपौरुषः
क्रमादमीमांस्यममंस्त कर्मभिः ॥ २३ ॥

**तमिति**—ऋक्षाधिपतिः जाम्बवान् आगतं तं आदितः आदौ मानुषमात्रं केवलमानुषं ततः परं सदृक्षं स्वसदृशं अथ सामिनिरुद्धपौरुषः अर्धं निगृहीतपराक्रमस्सन् स्वस्मादधिकं क्रमात् कर्मभिः सर्वथा स्वपराक्रम-निरोधकैश्चेष्टितैः अमीमांस्यं अचिन्तनीयमहिमानं च अमंस्त मन्यते स्म ॥

उवाच चैनं विधिवक्त्रसम्भवः
स्वविक्रमप्रीतमनुक्रमाद्विदन् ।
सगद्गदं सन्नमितेन मौलिना
नखात्विषा पुष्पितमञ्जलिं वहन् ॥ २४ ॥

**उवाचेति**—स्वविक्रमप्रीतं चिरं युद्धमनुवर्तितवतः [3]स्वस्य पराक्रमेण प्रीतं एनं कृष्णं अनुक्रमात् तत्तत्कर्मक्रमेण विदन् परमेश्वर

---

[1]बहूपकाराभिज्ञः—ग. [2]'तस्य' इति शेषः. [3] 'तस्य' इति—क.घ. कोशयोः पाठोऽसाधुः.

इति जानन् अत एव सन्नमितेन अकृत्यं कृतमिति व्रीलया नमितेन मौलिना उपलक्षितः नखत्विषा पुष्पितं सञ्जातपुष्पं अञ्जलिं वहन् सः विधिवक्त्रसम्भवः जाम्बवान् सगद्गदं व्रीलाहर्षादिभिः स्खलत्कण्ठं यथा तथा उवाच च । अमंस्तेति पूर्वक्रियासमुच्चयार्थश्चकारः ॥ २४ ॥

अहो महत्सत्त्वमहो पराक्रम-
स्त्वमीश्वरो नूनमहो निरीश्वरः ।
अतीतदेवासुरनागनैर्ऋतः
पतिः पतीनां प्रतिभाति मे भवान् ॥ २५ ॥

अहो इति—अहो इत्याश्चर्ये । महत् सत्त्वं बलं । अहो पराक्रमः शौर्यकरणम् । त्वं निरीश्वरः ईश्वररहित ईश्वरः, परमेश्वर इति यावत् । नूनमित्युक्तार्थनिश्चये । अहो परमेश्वरागमनमत्राश्चर्यमित्यर्थः । उक्तमेव परमेश्वरत्वनिश्चयमादरात् पुनरपि विधान्तरेणाह—अतीतेति । भवान् अतीतदेवासुरनागनैर्ऋतः अतिक्रान्ताः [1] देवासुराः नागाः सर्पाः नैर्ऋताः राक्षसाश्च येन स तथा पतीनां ब्रह्मादीनां प्रजापतीनां पतिः परमेश्वरो मे प्रतिभाति । अत्र युष्मदस्मदुपपदस्य शेषत्वात् [2] 'शेषे प्रथमः' (पा. सू. १-४-१०८) इति प्रथमपुरुषनिर्देशः ॥ २५ ॥

अनेकमन्वन्तरदर्शिना मया
न खल्वरामो ददृशे भवादृशः ।
निजौजसा नैर्ऋतयूथघातिनं
नियोधयन् यन्निभृतं प्रवर्तसे ॥ २६ ॥

अनेकेति—अनेकमन्वन्तरदर्शिना बहून् मनुकालान् दृष्टवता स्वायम्भुवस्वारोचिषादेरेकैकस्य मनोः कालः मन्वन्तरम्, "मन्व-

[1] देवास्सुराः अमुरा दैत्याः' इति पाठश्चेत्स्पष्टः. [2] शेषप्रथमपुरुषनिर्देशः—क. ग. अ.

न्तरं तु दिव्यानां युगानामेकसप्ततिः" इति [1]तत्प्रमाणम्, मया कर्त्रा अरामः रामव्यतिरिक्तो भवादृशः भवत्सदृशः न खलु ददृशे न दृष्टः। तथा मयि कमतिशयं पश्यसीत्यत्राह—निजेति। यत् यस्माद्धेतोः निजौजसा स्वबलेन नैर्ऋतयूथघातिनं राक्षससङ्घातानां हन्तारं मां नियोधयन् नियुद्धं बाहुयुद्धं कारयन् निभृतः अव्यग्रः प्रवर्तसे। यत्पदं हेतुपरमव्ययम्। "यच्छब्दस्सर्वनामाख्यः त्रिषु हेतौ यदव्ययम्" इति रत्नमाला ॥ २६ ॥

गुणैरपि प्रत्यवमृश्यते भवान्
दशाननाद्यैर्युधि दृष्टवैभवः।
श्रुतं मया सिद्धजनादिह स्वयं
गुहाशयः प्राप्स्यति ते गुहामिति ॥ २७ ॥

**गुणैरिति**—किञ्च गुणैः सौन्दर्यादिभिरपि भवान् दशाननाद्यैः रावणप्रभृतिभिः युधि युद्धे दृष्टवैभवः दृष्टबलमहिमा रामचन्द्रः प्रत्यवमृश्यते प्रत्यभिज्ञायते। अपि च सिद्धजनात् [2]योगसिद्धान्मुनिजनात् गुहाशयः प्राणिनां हृदय[3]गुहासु शयानः सर्वान्तर्यामी परमेश्वरः स्वयं ते गुहां प्राप्स्यतीति इह अत्रैव मया श्रुतम् ॥ २७ ॥

वनं तदेतन्महितं तपोवनं
गिरिं च वेद्मि त्रिदिवेश्वरालयम्।
पचेलिमं किन्नु[4] तपो बिलस्य मे
प्रसाधितं यत्तव पादपांसुभिः ॥ २८ ॥

**वनमिति**—तत् तथाभूतं त्वदवलोकनपवित्रमेतद्वनं महितं लोकपूजितं तपोवनं वेद्मि। गिरिं अमुं पर्वतं त्रिदिवेश्वरालयं सुराणामालयं

---

[1] 'तर्क्यमाणं' इति—क. घ. कोशयोरशुद्धः पाठः. [2] योगिजनात्—घ.
[3] गुहासुशयनः—क. गुहासुशयः—घ. [5] तपोबलस्य—क.

मेरुं च वेद्मि जानामि । मे विलस्य गुहायाः किन्तु किं वा तपः पुण्य-कर्म पचेलिमं परिपक्वमासीत् । 'केलिमर उपसङ्ख्यानम्' (वा. १९.१९) इति पचिधातोः केलिमर्प्रत्ययः । यत्तव पादपांसुभिः प्रसाधितं अलङ्कृतम् । वनस्य गिरेश्च अवलोकनमात्रेण पवित्रता, बिलस्य तु पदाम्बुजविन्यसनेनापीति विशेष इति भावः ॥ २८ ॥

**स्वनाभितस्सप्तमजन्मभागिनो**
**विजृम्भमाणस्य विधेर्यदृच्छया ।**
**त्वमेव मां वेदमधुव्रताश्रिता-**
**न्मुखाब्जतः स्वानुचरं व्यजीजनः ॥ २९ ॥**

एवं परमेश्वरत्वनिश्चयमुक्त्वा स्तोतुमारभते — **स्वनाभित इति**—स्वनाभेस्सप्तमजन्मभागिनः षड्जन्मानि त्वत्तः प्राप्य सप्तमं जन्म प्राप्तवतः, भागिन इति 'संपृच्' — आदिसूत्रेण (पा. सू. ३-२-१४२) घिनुण्प्रत्ययः । यदृच्छया स्वेच्छया, न तु [1]मत्सिसृक्षया, विजृम्भमाणस्य जृम्भां कुर्वतः विधेः ब्रह्मणः वेदमधुव्रता-श्रितात् वेदा मधुव्रता इव, वेदा एव मधुव्रता वा, तैराश्रितात् मुखाब्जतः मुखकमलात्, पूर्ववत्समासविकल्पः, अन्यतरसाधकबाधकाभा-वात्, त्वमेव स्वानुचरं त्वद्भृत्यं मां व्यजीजनः उत्पादितवानसि, विश्वजनयितृत्वादिति भावः । जनेः ण्यन्ताल्लुङ् । भगवन्नाभिपद्माच्चतु-र्मुखस्य जन्म सप्तममित्यस्मिन्नर्थे महाभारते तस्यैव वचनम्—

त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं [2]च द्वितीयं मे जन्म [3]आसीत्पुरातनम् ।
[4]तव प्रसादान्मे जन्म तृतीयं वाचिकं महत् ।

[1] 'मद्दिदृक्षया–क. ग. घ. [2] चाक्षुषं वै–भा. [3] जन्म चा–भा.
[4] त्वत्प्रसादात्तु मे–भा.

त्वत्तः [1]श्रवणजन्मापि चतुर्थं जन्म मे विभो ।
[2]नासिक्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
[3]अङ्गजं चापि मे जन्म त्वत्तष्षष्ठं विनिर्मितम् ॥
इदं तु सप्तमं जन्म [4]पद्मजं चेति मे विभो ॥

(भा. शान्ति. ३५७, ४०–४३)

इति ॥

**त्रिभिः क्रमैर्दीव्यति दिव्यवामने**
**स्वमायया मोहितदानवे त्वयि ।**
**जगन्ति विश्वानि मितानि विष्णुने-**
**त्यघोषयं द्रागिव जैत्रघोषणाम् ॥ ३० ॥**

**त्रिभिरिति**—दिव्यवामने अप्राकृतवामनरूपे स्वमायया मोहितदानवे मोहितमहाबल्यसुरे त्वयि त्रिभिः क्रमैः पादविक्षेपैः दीव्यति क्रीडति विश्वानि समस्तानि जगन्ति विष्णुना मितानि [5]पदद्वयेन परिच्छिन्नानीति जैत्रघोषणां जैत्रस्य नायकस्य जयप्रख्यापकप्रबन्ध-विशेषरूपां घोषणां द्राक् झडिति अघोषयं घोषितवानस्मीत्यर्थः । यद्वा जैत्रघोषणा वाद्यविशेषः, 'निस्साणो जैत्र[6]घोषणा' इति यादवः । तां अघोषयं अध्वनयम् । [7]'घुषिर् (भ्वादि ६५३) शब्दार्थे' इति धातुः । द्रागिवेति इवशब्दो वाक्यालङ्कारे ॥ ३० ॥

---

[1] श्रवणजं चापि–**भा.** [2] नासत्यं–**भा.** नीलकण्ठीयव्याख्यायां 'नासत्यं' इति पाठः, 'अश्विदैवत्यघ्राणजं' इति तद्विवरणं च दृश्यते. [3] अण्डजं–**भा.** श्रीनीलकण्ठीयटीकायां 'अण्डं ब्रह्माण्डम्' इति विवृतम्. [4] पद्मजन्मेति वै प्रभो–**भा.** [5] पदत्रयेण–**ग.** [6] घोषणं–**क. घ.** [7] अत एव सिद्धान्तकौमुद्यां "घुषिर् अविशब्दने, विशब्दनं प्रतिज्ञानं, ततोऽन्यस्मिन्नर्थे इत्येके, 'शब्दे' इत्यन्ये पेठुः" इत्युक्तम्.

जिघांसिते देव दशानने त्वया
हतारिसङ्घैर्हरियूथपैर्वृतः ।
अवर्तयत्सूर्यसुतस्य सन्निधा-
वयं जनः किङ्करवृत्तिमाहवे ॥ ३१ ॥

जिघांसित इति—देव दशानने त्वया जिघांसिते हन्तुमिष्टे सति हतारिसङ्घैः हतरिपुकुलैः हरियूथपैः वानरयूथपतिभिः वृतः परिवृतः अयं जनः स्वयमिति भावः, आहवे युद्धे सूर्यसुतस्य सुग्रीवस्य सन्निधौ किङ्करवृत्तिं तद्भृत्यवृत्तिं अवर्तयत् अकरोत् ॥ ३१ ॥

गतेषु सुग्रीवमुखेषु तावकं
पदं तदप्राप्यमहं त्विह स्थितः ।
त्वदीक्षणात्प्राप्तफलोऽस्मि साम्प्रतं
जरन् पुनर्यौवनमाप्तवानिव ॥ ३२ ॥

गतेष्विति—सुग्रीवमुखेषु सुग्रीवप्रमुखेषु अप्राप्यं अलभ्यं तत् प्रसिद्धं तावकं पदं दिव्यस्थानं गतेषु सत्सु, अहं तु इह स्थितः अत्रैव स्थितवानस्मि । साम्प्रतं इदानीं त्वदीक्षणात् तव दर्शनात् जरन् जीर्णोऽपि हर्षवशात् पुनः यौवनमाप्तवानिव स्थितः प्राप्तफलोऽस्मि, [1]सुग्रीवादिभिः सहकर्मकरत्वादिहावस्थितोऽपि फलं लब्धवानस्मि । जरन्निति 'जीर्यतेरतृन्' (पा. सू. ३-२-१०४) इति सूत्रेण भूतार्थे अतृन्प्रत्ययः ॥ ३२ ॥

---

[1] सुग्रीवादिभिस्समत्वादिहावस्थानस्य फलं—अ. सुग्रीवादिभिस्सहकर्मत्वादिहावस्थितोऽपि—क. ग.

न तादृशास्सम्प्रति सन्ति भूतले
ऋते [1]भवन्तं प्रतिसन्धिभावनैः ।
हनूमतैकेन विभीषणेन वा
मयाऽपि [2]वा सोऽयमिति त्वमूह्यसे ॥ ३३ ॥

**न तादृशा इति**—सम्प्रति भूतले ऋते भवन्तं त्वदृते प्रतिसन्धिभावनैः रघुनाथ एवायमिति प्रत्यभिज्ञोत्पादकैर्गुणैः तादृशाः रघुनाथप्रकारापन्ना न सन्ति । हनूमतैकेन विभीषणेन वा मयाऽपि वा सोऽयं रघुनाथ एवायमिति त्वं ऊह्यसे वितर्क्यसे । उभयत्र वाकारस्समुच्चये । हनूमानेको विभीषणोऽहमिति च त्रय एवेत्थं प्रत्यभिज्ञातुं क्षमाः, नान्ये तत्कालीना वृद्धास्सन्तीत्यर्थः । भूतले ऋत इत्यत्र "संहितायाम्" (पा. सू. ६-१-७२) इत्यधिकारेण सन्धेरैच्छिकत्वात्सन्धिकार्यं न कृतम् । न च तथाऽपि विसन्धित्वं काव्यदोष-[3]स्स्यादिति वाच्यम् । तस्य हि न तावदत्र कविशक्त्यभावोन्नायकतया दोषत्वं, शक्तस्यापि क्वचित्संहितायामैच्छिकत्वव्युत्पादनाय तथा प्रयोगसम्भवात् । नापि बन्धपारुष्यहेतुतया । "सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा" (वाल्मीकिरामायणे—संक्षेपसर्गे ४२ श्लो.) इत्यादावकारादिसन्ध्यभाव इव ऋकारसन्ध्यभावे तन्नास्तीति हृदयसाक्षिकत्वात् । [4]तत्र तद्भवस्य ऋकारस्य सन्धिरेफाक्षररेफतादृश्यात् । तस्मात् यथा—

"हरेर्लङ्घितघर्मांशुर्व्योम्नि दीर्घेण रंहसा ।
बलिबन्धनघोरोऽङ्घ्रिरंहस्संघं निहन्तु वः" ॥

---

[1] भवतः—ङ. ग्र. दे. मु. [2] वाह्योऽयमिति त्वमुह्यसे—ङ. [3] अलङ्कारदोष—क. ग. अ. [4] 'अत्र तदभावश्च संध्यक्षरस्य ऋकारस्य रेफसादृश्यात्, इत्ययमत्र पाठस्समुचित इति भाति । ततश्चात्र ऋकाररेफयोस्सादृश्यादनुप्रासोऽस्तीति स बन्धपारुष्यदोषं निरुणद्धीत्याशयः स्यात् । अत एवायमर्थ उत्तरत्र "तथा" इत्यादिना स्फुटीकृतः.

इति श्लोके—

"एकत्वं बुद्धिभेदेऽपि तत्त्वेऽप्येकत्वनिह्नवः ।

यस्य वर्णस्य तं प्राहुरनुप्रासस्य जीवितम्" ॥

इत्युक्तलक्षणनागरानुप्रासरूपतया हकारघकारयोः सादृश्यस्य गुणत्वं, तथाऽत्रापि रेफऋकारयोः सादृश्यस्य सन्ध्यभावकृतबन्धपारुष्यनिवारकतया दोषापवादत्वं स्यादिति नात्र कश्चिद्दोषः ॥ ३३ ॥

**रसावहैरेकधियां रसायनैश्शुभै-**
**श्श्रुतिश्रेणिशिरोविभूषणैः ।**
**अपेतभारामतिदेवमानुषै-**
**र्विहारभेदैरवनीं[1] विधास्यसि ॥ ३४ ॥**

रसावहैरिति—एकधियां त्वदेकचित्तानां रसस्यावहैः रसायनैः माधुर्यवद्भिः जरामरणादिहरौषधैः, [2]ध्यानपराणां संसारनिवर्तकैरिति यावत्, शुभैः श्रुतिश्रेणिशिरोविभूषणैः मनोज्ञैः निगमश्रेणीनां शेखरैः उपनिषत्प्रतिपाद्यैरिति यावत्, अतिदेवमानुषैः देवांश्च मनुष्यांश्च अतिक्रान्तैः विहारभेदैः क्रीडाभेदैः [1]अवनीं अपेतभारां विधास्यसि इतः परमपि बहूनि देवकार्याणि करिष्यसीत्यर्थः ॥ ३४ ॥

**विशुद्धमिश्रैश्चतुरश्रवृत्तकै-**
**रगाधतुङ्गैः प्रमितामितक्रमैः ।**
**अनन्यभावाननुकम्पते भवा-**
**नचिन्त्याचिन्त्यैरवतारनाटकैः ॥ ३५ ॥**

विशुद्धेति—विशुद्धैः केवलं मनुष्याद्याकारै रघुनाथादिरूपैः मिश्रैः नरसिंहादिरूपैः चतुरश्राणि लक्षणया मनोहराणि वृत्तानि येषां तैः अगाधैः गम्भीरैरनन्यवेद्यप्रकृतिभिः तुङ्गैः उन्नतैस्सर्वोच्चैः प्रमिताः

[1] अवनि—ग. म्र. दे. मु [2] ध्यानपरायणानां—ग.

'विष्णोर्नुकं वीर्याणि प्रवोचं' (तै. सं. १-२-१३) इत्यादिश्रुतिभिः सम्यगवगताः बहवः-क्रमाः शक्तयो येषां तैः, 'क्रमश्शक्तौ परीपाट्यां' इति विश्वः, अचिन्त्यैः अद्भुतचरितशालितया अतर्कणीयैः चिन्त्यैः मुमुक्षुभिर्ध्येयैश्च अवतारैरेव नाटकैः अनन्यभावान् अन्यनिरपेक्षहृदयान् प्रह्लादविभीषणादीन् भवान् अनुकम्पते दयते, रक्षतीत्यर्थः। यद्वा अवताररहस्यचिन्तनैकपरान् संसारान्मोचयतीत्यर्थः।

नाटकपक्षे—शुद्धमिश्रविष्कम्भादियुक्ततया विशुद्धमिश्रैः मनोहरश्लोकशालिभिः मध्वा? निमित्तगाम्भीर्ययुक्तैः, नाटकेषु [1]प्रथममासूत्रविधानस्यार्थस्यानन्तरं प्रपञ्चनीयतया कचिन्मितप्रकारैः कचिदमितप्रकारैः अतिदुष्करत्वात् अन्यैस्तथाकर्तव्यमिति चिन्तयितुमप्यशक्यैः झडित्यभिप्रायस्फुरणासम्भवात् चिन्तनीयैश्चेति विशेषणयोजना। तथा च तथाभूतैः नाटकप्रबन्धैः [2]तदाप्रवृत्तानिवावतारैर्भक्ताननुकम्पत इति तात्पर्यार्थः। भवच्छब्दयोगेन युष्मदुपपदाभावात् प्रथमपुरुषः। विशुद्धमिश्रैरित्यादिविशेषणद्वयस्य समासः तत्तद्विशेषणद्वयकृतविरोधाभासद्योतनार्थः। चतस्रः अश्रयः कोटयो यस्येति विग्रहे 'सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्र' (पा. सू. ५-४-१२०) इत्यादिसूत्रेण चतुरश्रशब्दो निपातितः ॥ ३५ ॥

**न वर्धसे कर्मभिरीश साधुभिः**
**न हीयसे च त्वमसाधुभिः कृतैः।**
**जगत्परित्राणपरेण केवलं**
**विधिर्निषेधश्च न लङ्घ्यते त्वया ॥ ३६ ॥**

न वर्धस इति—हे ईश! साधुभिः कर्मभिः त्वं न वर्धसे। असाधुभिः कृतैः कर्मभिश्च न हीयसे। कृतैरिति भावे निष्ठा। अथा

[1] 'प्रथममासूचितस्यार्थस्य' इति पाठः स्यात्. [2] 'तद्रसास्वादैकप्रवणानिव' इति पाठः स्यात्.

केवलं जगत्परित्राणपरेण शिष्टाचारप्रमाणकस्य लोकस्य रक्षणमात्रे तत्परेण त्वया विधिर्निषेधश्च न लङ्घ्यते ॥ ३६ ॥

गुणोदधिस्त्वं गुणकर्बुरात्मना
तिरस्करिण्या पिहितात्मदृष्टिभिः ।
न दृश्यसे देव सदा सहैव सन्
दिदृक्षमाणैरपि देवदानवैः ॥ ३७ ॥

गुणेति—हे देव! गुणोदधिः सद्गुणसागरः त्वं गुणकर्बुरात्मना सत्वादिगुणत्रयशबलमूर्त्या तिरस्करिण्या मायया पिहितात्मदृष्टिभिः तिरोहितात्मबोधैः दिदृक्षमाणैः त्वां द्रष्टुमिच्छद्भिः देवदानवैः देवैरसुरैरपि, मनुष्यादिभिस्तु किमु वक्तव्यमिति भावः, सदा सहैव सन् द्वासुपर्णेत्यादिश्रुत्या सदा हृदयेषु सहैव विद्यमानोऽपि न दृश्यसे ॥३७॥

जगत्तवान्तर्बहिरप्यमुष्य च
त्वमेवमेवंविधचित्रवैभवः ।
समाधिदृष्ट्या मुनिभिस्समीक्ष्यसे
सनातनो नूतनभूमिकाश्रितः ॥ ३८ ॥

जगदिति—जगत् तव अन्तः उदरे बहिः ततो बहिःप्रदेशेऽपि, अमुष्य जगतश्च त्वमेवं अन्तर्बहिरपि, एवंविधचित्रवैभवः यस्यान्तर्बहिरपि यद्वर्तते सोऽपि तस्यान्तर्बहिरपि वर्तत इत्ये[1]कमिदं चित्रं, एवंप्रकारं अन्यदपि चित्रं वैभवं यस्य स तथोक्तः सनातनः नित्यः त्वं नूतनभूमिकाश्रितः तत्तद्ध्यानानुसारिणं [2]तदात्मकमूर्तिभेदमाश्रितस्सन् मुनिभिः समाधिदृष्ट्या योगदृष्ट्या समीक्ष्यसे, न तु पररूपेणेति भावः ॥ ३८ ॥

[1] इत्येतावदर्थ–घ. [2] 'तादात्विक' इति मूलानुरोधी सुस्पष्टः पाठः.

तवैव सङ्कल्पकलांशतः क्वचित्
समर्थवादाः परमेष्ठिनामपि ।
त्वयि प्रतिद्वन्द्विनि कस्य किं बलं
क एव जेता न भवेत्त्वयेक्षितः[1] ॥ ३९ ॥

**तवेति**—तव सङ्कल्पकलांशतः अयमित्थं भवत्विति सङ्कल्प एव कला शिल्पविद्या तल्लेशादेव परमेष्ठिनां प्रतिकल्पं भिन्नानां ब्रह्मणामपि क्वचित् सृष्ट्यादिविषये समर्थवादाः समर्था इति लोकवादाः । त्वयि प्रतिद्वन्द्विनि परिपन्थिनि सति कस्य किं बलं कस्यापि बलं न सम्भवति । त्वयेक्षितः त्वया कटाक्षितः क एव जेता न भवेत्, सर्व एव जेता भवेत् ॥ ३९ ॥

असह्यमेतन्मधुकैटभादिभिः
स्वतल्पसारोल्बणबाहुना त्वया ।
निपीडनं यन्निबिडं विषह्यते
मयाऽल्पसत्त्वेन तवैव तद्बलम् ॥ ४० ॥

**असह्यमिति**—मधुकैटभादिभिः महासुरैः असह्यं सोढुमशक्यं एतत् मदनुभूतं निबिडं दृढं स्वतल्पसारोल्बणबाहुना स्वस्य तल्पसारः तल्पश्रेष्ठः शेषः स इव उल्बणः उत्कटमहाबलशाली बाहुर्यस्य तेन त्वया निपीडनं अल्पसत्वेन मया विषह्यत इति यत् तत्तवैव बलं, त्वत्तेजोऽनुप्रवेशं विना मयैव केवलमिदं सोढुं न शक्यत इत्यर्थः । त्वया निपीडनमिति 'अन्तर्धौ येनादर्शनम्' (पा. सू. १-४-२८) इति सौत्रनिर्देशदर्शनात् कृद्योगेऽपि तृतीया साधुः । त्वया कृतमिति कृत-शब्दो वा अध्याहार्यः । तत्र निष्ठायोगे [2] षष्ठीनिषेधात् तृतीयोपपद्यते ॥ ४० ॥

---

[1] भवेत्त्वदीक्षितः—ग्र. दे. मु. [2] षष्ठीनिषेधादिति । 'न लोकाव्यय-निष्ठाखलर्थतृनाम्' (पा. सू. २-३-६९) इति सूत्रेणेति भावः.

त्वया जितोऽहं क इवाजितः परो
[1]न रुध्यसे नाथ मया न किं परैः ।
दयालुनाऽपास्यत दर्प एव मे
भुजाहवे च व्युदपादि भूष्णुता ॥ ४१ ॥

त्वयेति—अहं त्वया जितः । परः मद्व्यतिरिक्तः क इव अजितः । इवशब्दो [2]वाक्यालङ्कारे । त्वया सह कृतयुद्धस्सर्वोऽपि त्वया जित एवेत्यर्थः । हे नाथ मया न रुद्धयस इति न, मया एकेनैव न रुध्यस इति न भवति । परैः मद्व्यतिरिक्तैः कैरपि निरुध्यसे किम् । तव निरोधे प्रवृत्ताः केऽपि त्वां निरोद्धुं न प्रभवन्तीत्यर्थः । अयं तु विशेषः—दयालुना कृपावता त्वया मे दर्प एव अपास्यत अपास्तः, न तु मधुकैटभादीनामिव प्राण इति भावः । अयं तु ममापरोऽनुग्रहः—भुजाहवे बाहुयुद्धे भूष्णुता समर्थता च व्युदपादि व्युत्पादिता, त्वया बाहुयुद्धप्रकारप्रदर्शनेन सम्यग्ग्राहितेत्यर्थः ॥ ४१ ॥

[3]न नीतिवर्तन्यतिलङ्घिता मया
न च त्वदादेशविपर्यये स्थितः ।
तथाऽपि सर्वाधिकसत्क्रियोचिते
विरुद्धचेष्टा विदधे विमोहितः ॥ ४२ ॥

न नीतीति—मया नीतिवर्तनी नीतिपद्धतिः ‘‘ सरणिः पद्धतिः

[1] निरुध्यसे- घ. [2] वाक्यालंकार इति । विकल्पार्थकत्वेऽपि वाशब्दस्य अजितसादृश्याभिमानवान्वा क इति काकुप्रश्नेनाजितनिषेधः कैमुत्यनीतिसिद्ध इत्याशयः स्यात्. [3] अत्र एकस्मिन् कोशे द्वितीयपादान्ते स्थितामिति पाठाभिप्रायेण निविष्टमिति व्याख्याग्रन्थदर्शनात् प्रथमद्वितीयार्धान्तयोः स्थितं विमोहितः इति पाठस्य. चेष्टापदस्य एकवचनान्ततायाः, विदध इत्यस्य कर्मणि लट् प्रथमपुरुषैकवचनान्तत्वस्य चाभ्युपगमे आद्यपादान्तस्थस्य मयेत्यस्य विभक्तिविपरिणाममन्तरैव अनुषङ्गेणार्थवर्णनं सुशकमिति बोध्यम्.

पद्या वर्तन्येकपदीति च" इत्यमरः नातिलङ्घिता नातिक्रान्ता। त्वदादेश-विपर्यये त्वदाज्ञाविपरीते शास्त्रनिषिद्धे मार्गे च न स्थितः न बुद्धिपूर्वं निविष्टः। तथाऽपि विमोहितः दैवेन मोहं प्रापितस्सन् सर्वाधिकसत्क्रियोचिते सर्वोत्तरपूजार्हे त्वयि विरुद्धचेष्टाः प्रतीपवृत्तीः विदधे विहितवानस्मीत्युत्तमपुरुषः ॥ ४२ ॥

जगत्पते! जाम्बवतीमिहार्हणां
गृहाण पत्नीं गृहमागतस्स्वयम्।
मणिं च दिव्यं द्युमणेः स्यमन्तकं
युतं धनैर्यौतकमर्पयामि ते ॥ ४३ ॥

जगदिति—जगत्पते! गृहमागतः स्वयं मद्गृहं प्राप्तः त्वं इह मद्गृह एव जाम्बवतीमर्हणां जाम्बवतीनामकन्यारूपां मम पूजां पत्नीं गृहाण पत्नीत्वेन गृहाण, उद्वहेत्यर्थः। धनैर्युतं द्युमणेः आदित्यस्य स्यमन्तकाख्यं दिव्यं दिवि भवं मणिं च ते तुभ्यं यौतकमर्पयामि युवयोर्वधूवरयोः विवाहकाले देयधनत्वेन प्रयच्छामि ॥ ४३ ॥

ममात्मजाऽपि श्रियमेवमप्सरः-
प्रसूतिरेषा [1]वहती श्रिया समाम्।
[2]त्वदर्हशीलादिगुणप्रसाधिता
स्वयं वृणीतेऽद्य भवन्तमेकधीः ॥ ४४ ॥

ममेति—अप्सरःप्रसूतिः अप्सरःप्रभवा एषा ममात्मजाऽपि एवं परिदृश्यमानप्रकारेण श्रिया लक्ष्म्या समां श्रियं कान्तिं लक्ष्मीकान्तितुल्यां कान्तिं [3]वहती त्वदर्हशीलादिगुणप्रसाधिता शीलं सद्वृत्तं,

[1] वहति—म्र. दे. मु. [2] यदर्ह—म्र. मु. एतत्पाठपरिशीलनायां 'यत् यस्मात् अर्हशीलादिगुणप्रसाधिता एकधीः अद्य भवन्तं स्वयं वृणीते, तस्मात् अप्सरःप्रसूतिरेषा ममात्मजाऽपि एवं श्रिया समां श्रियं वहति' इत्यन्वयः प्रतिभाति. [3] वहति—म्र.

आदिशब्देन विनयादिपरिग्रहः, त्वदुचितैः शीलादिगुणैरलंकृता एषा एकधीः अनन्यचित्ता [1]सती अद्य भवन्तं स्वयं वृणीते ॥ ४४ ॥

त्वदागमादृक्षबिलं परं पदं
त्वदीक्षणात्सूरिगणा इमे वयम् ।
त्वदाश्रयात्सिन्धुसुतेव[2] मत्सुता
त्वया धृतोऽसौ मणिरस्तु कौस्तुभः ॥ ४५ ॥

त्वदागमादिति—तवागमाद्धेतोः ऋक्षबिलं भल्लूकानां गुहा परं पदं, त्वदीक्षणात् तवालोकनात् इमे परिदृश्यमानाः वयं सूरिगणाः परमपदवासिनो नित्यसूरिगणाः । "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" (तै. सं. १-३-६) इति श्रुतिप्रसिद्धाः परमपदवासिनो नित्य-मुक्ताः सूरय उच्यन्ते । त्वदाश्रयात् तवाश्रयणात् मत्सुता जाम्बवती सिन्धुसुता लक्ष्मीरिव । असौ मणिः स्यमन्तकः त्वया धृतस्सन् [3]कौस्तु-भोऽस्तु । कौस्तुभवत् त्वया धारणेनानुग्राह्य इति प्रार्थना ॥ ४५ ॥

[4]त्वदाहितस्वातिशयैस्स्वयोगतः
परत्र साध्योऽतिशयस्स्थिरत्रसैः ।
अनन्यसाध्यातिशयस्य तस्य ते
[5]स्वशेषताऽसौ न विघातमर्हति ॥ ४६ ॥

त्वदाहितेति—स्थिरत्रसैः स्थावरजङ्गमरूपैः वस्तुभिः "चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम्" इत्यमरः, त्वदाहितस्वातिशयैः

[1]सती स्वयं अद्य भवन्तं--घ. [2]सुतेव—ग्र. दे. मु. [3]कौस्तुभोऽस्तु भवतु, स्वया धारणेन तवानुग्राह्य-क. [4]त्वयाऽऽहितस्वातिशयैः ग्र. [5]स्वशेषिता—ग्र. दे. मु.

त्वत्संपादितस्वस्वोत्कर्षैः सद्भिः परत्र वस्त्वन्तरे स्वयोगतः स्वसम्पर्कात् अतिशयस्साध्यः, तद्यथा "येन सूर्यस्तपति तेजसेद्धः" (तै.ब्रा. ३-२-९) इति मन्त्रवर्णात्, भगवत्तेजोंशानुप्रवेशात् लब्धप्रकाशातिशयेनैव सूर्येण घटादौ स्वसम्पर्कात् प्रकाशनलक्षणातिशयस्साध्यते, तस्य तथाभूतस्य अनन्यसाध्यातिशयस्य नित्यसिद्धविभूतिमत्तया अन्यैरसाधनीयोत्कर्षस्य ते तव असौ स्वशेषता स्वेषां जाम्बवत्यादीनां त्वां प्रति शेषता विघातं प्रतिबन्धं नार्हति, अनुमन्तव्येत्यर्थः। एवमुक्तं भवति---जाम्बवत्याः पत्नीत्वेन, स्यमन्तकस्याभरणत्वेन, मत्कुलस्य कन्यादातृकुलत्वेन, त्वां प्रति शेषता न कस्मैचित्तवातिशयाय, किंतु त्वद्योगात् स्वस्वातिशयायैव। अतस्त्वदुद्देश्यफलाभावेऽपि तत्तदनुग्रहार्थं [1]जाम्बवतीपरिणयनादि-प्रार्थना अङ्गीकर्तव्येति ॥ ४६ ॥

स्वयोगभूम्ना चुलुकीकृताखिलैः
मुकुन्द देवैरपि किं न मुह्यते।
विवेकवैराग्यविदेशवर्तिना
वनौकसा मांसदृशा मया न किम् ॥ ४७ ॥

**स्वयोगेति**—हे मुकुन्द! स्वयोगभूम्ना स्वकीययोगप्रभावेन चुलुकीकृताखिलैः चुलुकवत् स्फुटाध्यक्षीकृतनिखिलवृत्तान्तैः देवैरपि किं न मुह्यते, तैरपि क्वचिद्विषये मुह्यत एव। विवेकवैराग्यविदेशवर्तिना विवेकस्य शास्त्रजन्यज्ञानस्य वैराग्यस्य च विभिन्नदेशे वर्तमानेन तदुभयदेश[2]रहितेन मांसदृशा मांसमात्ररूपदृष्टिना प्रज्ञादृग्विधुरेण वनौकसा वनं ओको यस्य तेन वनचरेण मया न किं मुह्यते। तेषामपि यत्र मोहः, तत्र मम मोहे किं वक्तव्यमित्यर्थः ॥ ४७ ॥

---

[1] जाम्बवती परिणेयेति प्रार्थना—घ. [2] लेश—ग.

अभार्गवो नापनयेत न क्वचित्
न वक्त्यसाधून्यबृहस्पतिर्न च ।
अवासवो न च्यवते [1]न चाहवा-
दते च ते तद्वदहं तु किं पुनः ॥ ४८ ॥

**अभार्गवेति**—अभार्गवः शुक्रव्यतिरिक्तः क्वचिन्नापनयेतेति न अपनयेतैव । शुक्र एको नियमेन नीतिवित्; तद्व्यतिरिक्तः सर्वोऽपि क्वचिद्विषये अनीतिं प्राप्नुयादेवेत्यर्थः । "न कश्चिन्नापनयते पुमानन्यत्र भार्गवात्" इति हि नीतिशास्त्रविदो वदन्ति । निश्चये नञ्द्वय-प्रयोगः "स्मृतिनिश्चयसर्वार्थेषु नञ्द्वयम्" इत्यलङ्कारसूत्रात् । एवमुत्त-रत्रापि । उक्तसमुच्चयार्थश्चकारः । ते तव अते च अभार्गवादिव्यतिरिक्ताः भार्गवादयस्त्रयोऽपि तद्वत् अभार्गवादिवत्, तव पुरतो भार्गवादयोऽपि अभार्गवादिवदेव अनीत्यादिभाजो भवन्तीत्यर्थः । अहं तु किं पुनः, अहं तव पुरतः अपनये, असाधूनि वच्मि, आहवात् च्यवे चेति किं चित्रमित्यर्थः । अतः त्वय्यागते पूजास्तुत्यादिकमकुर्वतो मे मोहात् नीत्युल्लङ्घनं अनुचितभाषणं च सोढव्यम् । त्वत्तः पराजयेन च [2]मम शोको नास्तीत्यर्थः ॥ ४८ ॥

भवार्णवे कर्मविपाकवात्यया
भवद्भिरावर्तगणैः परिभ्रमन् ।
[3]कृतोपरोधः कृपया त्वदीयया
भवत्पदं कूलमिव प्रपद्यते ॥ ४९ ॥

**भवार्णव इति**—भवार्णवे [4]संसारसागरे कर्मविपाकवात्यया कर्मणां फलौन्मुख्येनैव मण्डलवातेन भवद्भिः उत्पद्यमानैः आवर्तगणैः

1 'न चाहवाद्ते' इति घ कोशेऽपपाठः 'अते'। इति पदच्छेदेन नञ्-तत्पदयोस्समासेन तद्भिन्ना अभार्गवादिभिन्ना भार्गवादय इति तदर्थो बोध्यः.
2 ममायासो नास्तीत्यर्थः–घ.　3 कृतापराधः–प्र. मु.　4 संसार एव सागरे–ग.

जलभ्रमनिकरैः "स्यादावर्तोऽम्भसां भ्रमः" इत्यमरः, पुनःपुनर्जननमरणान्येव आवर्तगणत्वेनाध्यवसितानि, तैर्हेतुभिः परिभ्रमन् जन्तुः त्वदीयया कृपया तत्पुण्यविशेषोद्दीपितया कृतोपरोधः यथा पुनरावर्तगणेषु न पतति तथा कृतनिरोधस्सन् कूलं तीरमिव भवत्पदं त्वच्चरणं प्रपद्यते [1]शरणीकरोति। कूलपक्षे प्रपत्तिः प्राप्तिः ॥ ४९ ॥

**अविन्दतस्त्वाममितामृतोदधिं**
**विगाढतृष्णाविवशान्तरात्मनः ।**
**विगाहनीयाः प्रतिभान्ति वीचिका**
**मरीचिकानामिव भोगसम्पदाम् ॥ ५० ॥**

**अविन्दत इति**—अमितामृतोदधिं अपरिमितानन्दरूपममृतसागरं त्वां अविन्दतः अलभमानस्य त्वदानन्दानुभवरहितस्य विगाढतृष्णाविवशान्तरात्मनः अत्यर्थभोगेच्छापरवशमनसः जन्तोः मरीचिकानां मृगतृष्णानामिव भोगसम्पदां विषयसमृद्धीनां वीचिकाः पङ्क्तयः विगाहनीयाः प्रवेष्टव्याः प्रतिभान्ति। यथा अत्यन्तपिपासितस्य सन्निहितमेवामृतोदधिमपश्यतो मरीचिकानां [2]वीचिका मरुमरीचिकारोपितजलतरङ्गा विगाहनीयाः प्रतिभान्ति, तद्वदित्यर्थः। [3]'तृष्णापिपासे' इत्यमरः। '[4]वीचिः पङ्क्तिममीलेशेषु इति यादवः ॥ ५० ॥

**गुणोदधिं यः प्रमितप्रमाणया**
**गिरा त्वदीयं परिमातुमिच्छति ।**
**स पातुमीहेत समग्रचापलः**
**[5]सरोजनालेन पयः[6]पयोनिधिम् ॥ ५१ ॥**

**गुणोदधिमिति**—त्वदीयं गुणोदधिं प्रमितप्रमाणया पञ्चाशद्वर्णरूपतया परिमितपरिमाणया गिरा वाचा यः परिमातुं परिच्छेत्तुं

[1] शरणं करोति–घ. [2] 'वीचिकाः' इति क घ कोशयोर्नदृश्यते।
[3] 'तृष्णा स्पृहापिपासे' इत्यमरकोशे. [4] 'वीचिः पङ्क्त्यूर्मिलेशेषु' इति शुद्धपाठः.
[5] पयोजनालेन–दे. मु. [6] पयोनिधेः–घ.

इच्छति, समग्रं चापलमविमृश्यकारित्वं यस्य तथाभूतस्सः सरोजनालेन पयःपयोनिधिं क्षीराब्धिं पातुमीहते, तादृशोऽविमृश्यकारी तदपीच्छेदित्यर्थः । सम्भावनायां लिङ् । निदर्शनालङ्कारेण गिरा त्वद्गुणौघं परिच्छेत्तुमिच्छा कमलनालेन क्षीराब्धिं पातुमिच्छया तुल्येत्यौपम्यं गम्यते । गुणौघस्य स्वादनीयत्वव्यञ्जनाय पयःपयोनिधिमिति पयोग्रहणम् ॥ ५१ ॥

अकर्मतन्त्रस्य जगन्ति कर्मभि-
निबध्यमानानि विमुञ्चतस्तव ।
अलीकलेशैरनुपप्लुता स्तुतिः
[1]तथाऽप्यकल्येयमयावदुक्तितः ॥ ५२ ॥

अकर्मेति—अकर्मतन्त्रस्य अकर्मवश्यस्य कर्मभिः निबध्यमानानि जगन्ति विमुञ्चतः तव [2]'धेनुं मुमोच' इतिवत् विमुञ्चत इति प्रयोगः, स्तुतिः मया कृता अलीकलेशैरनुपप्लुता अनृतलवैरप्युपद्रुता न भवति, तथाऽपि इयं अकल्या अचतुरा, कुतः? अयावदुक्तितः साकल्येन त्वन्महिमोक्त्यभावात् । 'कल्यो नीरोगदक्षयोः' इति भावप्रकाशः ॥५२॥

[3]अजानत त्वन्महिमानमद्भुतं
विमोहितं देव तवैव मायया ।
कृतापराधं कृपया वशीकृतः
क्षमस्व मामित्यपतत् क्षमातले ॥ ५३ ॥

अजानतेति—[4]हे अजानत ब्रह्मवन्दित ! अद्भुतं महिमानं, प्रतीति शेषः, त्वन्महिम्नि विषये तवैव च मायया मानुष्यकञ्चुकरूपया

[1] तथाऽप्यकल्यैवमयावदुक्तितः-ग्र. मु. [2] 'यशोधनो धेनुमृषेर्मुमोच' इति रघुवंशे (२-१) [3] अजानता—ङ्ग. ग्र. दे. मु. [4] यद्वाऽत्र 'अजानतः' इति मूले षष्ठ्यन्तं स्यात् । तत्र च "षष्ठी चानादरे" (२-३-३८) इति षष्ठी । तथाच त्वन्महिमानमजानन्तमनादृत्येत्यर्थः । ततश्च प्रतीति पूरणक्लेशो नास्तीति भाति.

विमोहितं अत एव कृतापराधं मां कृपया वशीकृतस्सन् क्षमस्व इति ब्रुवाणः क्षमातले भूतले अपतत्, नमस्कृतवानित्यर्थः। ब्रुवाण इत्यस्य गम्यमानार्थत्वादप्रयोगः ॥ ५३ ॥

विलूनमूलद्रुमसन्निभं स तं
विलक्षमुत्थाप्य विहारयादवः।
[1] प्रियाङ्गरागव्यतिहारगन्धिना
भुजान्तरेणोपजुगूह सादरम् ॥ ५४ ॥

विलूनेति—विहारयादवः क्रीडायादवः सः देवः विलूनमूलद्रुमसन्निभं छिन्नमूलवृक्षसदृशं तद्वत्पातितं विलक्षं स्वकृतापराधेन विलक्षितम् [2]—

आत्मनः स्खलिते सम्यग् ज्ञातेऽन्यैर्यस्य जायते।
अपत्रपाऽतिमहती स विलक्ष इति स्मृतः॥

इत्याहुः, तं जाम्बवन्तमुत्थाप्य प्रियाङ्गरागव्यतिहारगन्धिना प्रियाया रुक्मिण्या अङ्गरागस्य व्यतिहारेण आश्लेषकृतेन विनिमयेन सौरभवता भुजान्तरेण वक्षसा सादरं उपजुगूह आलिलिङ्ग ॥ ५४ ॥

स कन्यकारत्नमचिन्त्यवैभवं
वदान्यरत्नं च समं समर्पयन्।
सरस्वतीवल्लभवक्त्रसम्भवो
महामनाः पूर्णमनोरथोऽभवत् ॥ ५५ ॥

स इति—महामनाः उदारः सरस्वतीवल्लभवक्त्रसम्भवः चतुर्मुखमुखप्रभवः सः जाम्बवान् अचिन्त्यवैभवं अचिन्तनीयसौन्दर्यसमृद्धिकं कन्यकाश्रेष्ठं 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः, वदान्यरत्नं प्रतिदिनं

[1] प्रियाङ्गरागाश्रितरागगन्धिना—ग्र. मु. [2] "लज्जितं" इति सुस्पष्टः पाठः। "लक्षितं" इति क ग कोशयोः पाठः.

धनाष्टभारप्रभवतया बहुप्रदं रत्नं स्यमन्तकं च समं समर्पयन् युगपत्प्र-
यच्छन् पूर्णमनोरथः कृतार्थोऽभवत् ॥ ५५ ॥

वनौकसां पत्युरहीन्द्रशोभिना
विमथ्यमानादचलेन बाहुना ।
ननन्द लब्ध्वा हृदयङ्गमां प्रियां
मणिं च [1] दिव्यां मधुकैटभान्तकः ॥ ५६ ॥

वनौकसामिति—मधुकैटभान्तकः मधुकैटभयोर्हन्ता कृष्णः अहीन्द्रशोभिना अहीन्द्रवच्छोभमानेन अचलेन स्थिरेण बाहुना विमथ्यमानात् युद्धेनोपमृद्यमानात् वनौकसां वनचराणां भल्लूकानां वानराणां वा पत्युः जाम्बवतः 'प्लवङ्गभल्लूकगणैरनुप्लवैः (यादवा. सर्ग १४-६२) इति वानराणामपि जाम्बवदनुचरत्वं वक्ष्यति 'मर्कटो वानरः कीशो वनौकाः' इत्यमरः, हृदयङ्गमां मनोज्ञां प्रियां [1] दिव्यां मणिं च लब्ध्वा ननन्द । यथा अहीन्द्रेण वासुकिना शोभमानेन अचलेन पर्वतेन विमथ्यमानात् वनौकसां जलौकसां यादसां पत्युः समुद्रात् हृदयङ्गमां वक्षोगतां लक्ष्मीं कौस्तुभं च लब्ध्वा ननन्द, तद्वदिति गम्यते । अहीन्द्रशोभिनेत्यत्र प्रकृतार्थे 'कर्तर्युपमाने' (पा. सू. ३-२-७९) इति णिनिः । अर्थान्तरे 'सुप्यजातौ' (पा. सू. ३-२-७८) इति णिनिः ॥ ५६ ॥

स्तनापदेशस्तबकावभासिनी
विलासभेदैरभिनीतपल्लवा[2] ।
रमापतौ गारुडभूधरद्युतौ
रसाधिका रत्नलतेव सा बभौ ॥ ५७ ॥

स्तनेति—स्तनापदेशस्तबकावभासिनी स्तन इत्यपदेशो व्याजो ययोस्ताभ्यां स्तबकाभ्यामभीक्ष्णमवभासमाना "बहुलमाभीक्ष्ण्ये"

[1] दिव्यं–घ. म्र. दे. मु. [2] भेदैर्विलीनपल्लवा–म्र. मु.

(पा. सू. ३-२-८१) इति णिनिः, विलासभेदैः विभ्रमविशेषैः अभिनीतपल्लवा अनुकृतकिसलया रसाधिका रागोत्तरा, लतापक्षे रसो माधुर्यं, सा जाम्बवती गारुडभूधरच्युतौ गारुडरत्नपर्वतच्युतौ रमापतौ कृष्णे रत्नलतेव बभौ ॥ ५७ ॥

**सविस्मया पूर्वमथ प्रमोदिनी**
**ततो मदारम्भमिवाभिजग्मुषी ॥**
**तदन्यसंस्कारनिरोधतः क्रमात्**
**तदीक्षणे तन्मयतामवाप सा ॥ ५८ ॥**

सविस्मयेति—पूर्वं कृष्णस्य प्रथमदर्शने सविस्मया कोऽयमत्यद्भुतरूप इत्याश्चर्यवती, अथ तत्परिणयनप्रसङ्गे प्रमोदिनी सन्तोषवती, ततः स्वस्यास्तस्मिन् समर्पणानन्तरं मदारम्भं मदोदयं अभिजग्मुषी प्राप्तवतीव स्थिता किञ्चिद्रागपारवश्यं प्राप्ता सा जाम्बवती क्रमात् तत्परिचयक्रमेण तदन्यसंस्कारनिरोधतः मातापित्रादिविषयान्तरवासनाप्रतिबन्धात् तदीक्षणे तस्य दर्शने तन्मयतां तदात्मतां अवाप, अतिनिरूढरागा जातेत्यर्थः ॥ ५८ ॥

**स पर्यणैषीत्रिदशैरुपस्थितो**
**विधिर्यदाज्ञा विधिजन्मनस्सुताम् ।**
**बिले तदीये विबुधालयोपमे**
**विकल्प्यमानाकृतिमप्सरोगणैः ॥ ५९ ॥**

स इति—विधिः "भार्यामुपयच्छेत्" इत्यादि विधानं यदाज्ञा यस्याज्ञा सः स्वयमकर्मवश्यः कृष्णः अप्सरोगणैस्सह विकल्प्यमानाकृतिं व्रीहियववत् विकल्प्यमानसौन्दर्यां, तुल्यरूपामिति यावत, विधिजन्मनः विधेः चतुर्मुखात् जन्म यस्येत [1] जन्मोत्तरपदत्वाद्व्यधिकरणबहुव्रीहिः,

[1] 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' (वा. का. सू. ५-२-१९) इत्यलंकारसूत्रकृता भट्टवामनेन जन्मोत्तरपदकव्यधिकरणबहुव्रीहिरभ्यनुज्ञानादिति भावः.

तस्य जाम्बवतः सुतां विबुधालयोपमे स्वर्गसदृशे तदीये जाम्बवत्सम्बन्धिनि बिले त्रिदशैः उत्सवार्थं चिन्तितागतैः उपस्थितः उपस्थितस्सन् पर्यणैषीत् परिणयति स्म। "उपसर्गादसमासेऽपि" (पा. सू. ८-४-१४) इति णत्वम् ॥ ५९ ॥

**अवाप्य जामातरमादिपूरुषं**
**जगत्प्रतीक्ष्यत्वमवाप जाम्बवान् ।**
**विदर्भराजेन विदेहभूभृता**
**समक्रमं दुग्धपयोधिना च सः ॥ ६० ॥**

अवाप्येति---जाम्बवान् आदिपूरुषं भगवन्तं जामातरं दुहितुः पतिं अवाप्य विदर्भराजेन भीष्मकेन, विदेहभूभृता जनकेन, दुग्धपयोधिना च, समक्रमं तुल्यरीतिकं जगत्प्रतीक्ष्यत्वं लोकपूज्यत्वं अवाप । चतुर्णामपि भगवच्छ्वशुरत्वाविशेषादिति भावः ॥ ६० ॥

**मनुष्यभावाभिनयव्यवस्थितां**
**कुशीलवार्हां कुहनां वहन् [1] प्रभुः ।**
**पुनस्तु ऋक्षेन्द्रपदानुभूतये**
**परं च भोक्तुं पदमन्वमन्यत ॥ ६१ ॥**

मनुष्येति—[2]मनुष्यभावाभिनये व्यवस्थितां नियतां यदायदा मनुजभावोऽभिनीयते तदा नियमेनाङ्गीक्रियमाणां कुशीलवार्हां नटोचितां "कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि" इति विश्वः, कुहनां परिणयादिविधिपरतन्त्रत्वकपटं वहन् विभुः तं जाम्बवन्तं पुनरपि ऋक्षेन्द्रपदानुभूतये भल्लूकाधिपत्यस्थानमनुभवितुं देहान्ते परं पदं भोक्तुं च अन्वमन्यत अनुमेने ॥ ६१ ॥

[1] विना विभुः-म्र. मु. [2] मनुष्यभावाभिनयव्यवस्थितां नियतां यदायदा-घ.

प्रहृष्यता जाम्बवता निवेदितां
प्रवालजाम्बूनदरत्नसंहतिम् ।
प्लवङ्गभल्लूकगणैरनुप्लवै-
रविप्लवां द्वारवतीमजीगमत् ॥ ६२ ॥

प्रहृष्यतेति—प्रहृष्यता सन्तुष्यता जाम्बवता निवेदितां समर्पितां प्रवालजाम्बूनदरत्नसंहतिं विद्रुमसुवर्णमणिनिकरं अनुप्लवैः जाम्बवदनुचरैः प्लवङ्गभल्लूकगणैः वानराणां ऋक्षाणां च सङ्घैः अविप्लवां अनुपद्रवां द्वारवतीं अजीगमत् गमयति स्म । गमेर्ण्यन्ताल्लुङ् । [1]गत्यादिसूत्रेण द्विकर्मकता ॥ ६२ ॥

ततस्तमामन्त्र्य चतुर्मुखात्मजं
प्रतिप्रयातस्स्वपुरीं प्रियासखः ।
स्यमन्तकं संसदि दानवान्तकः
स्वतोऽनघस्स्वामिवशे न्यवीविशत् ॥ ६३ ॥

तत इति—ततः अनन्तरं चतुर्मुखात्मजं जाम्बवन्तं आमन्त्र्य प्रियासखः जाम्बवत्यास्सखा तत्साहितस्सन् स्वपुरीं प्रति प्रयातः, स्वतोऽनघः मूढैः दोषस्यारोपणेऽपि स्वतश्शुद्धः दानवान्तकः कृष्णः संसदि यदुसभायां स्यमन्तकं स्वामिवशे तत्स्वामिनः सत्राजितस्य आयत्तत्वे न्यवीविशत् निवेशयति स्म । निपूर्वात् विशेः ण्यन्ताल्लुङ् । 'वश आयत्ततायां स्यात्' इति विश्वः ॥ ६३ ॥

---

[1] 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ' (१-४-५२) इति सूत्रेणेत्यर्थः.

जगत्पतिं जाम्बवतीसखं तदा
नियुद्धचिह्नैः परिकर्मिताकृतिम् ।
निरीक्ष्य तं द्वारवतीनिवासिनो
ननन्दुरानन्दजलाविलेक्षणाः ॥ ६४ ॥

जगत्पतिमिति—तदा द्वारवतीनिवासिनः जनाः नियुद्धचिह्नैः बाहुयुद्धलाञ्छनैः परिकर्मिताकृतिं सञ्जातप्रसाधनशरीरं जाम्बवतीसखं जगत्पतिं तं कृष्णं निरीक्ष्य आनन्दजलाविलेक्षणास्सन्तः ननन्दुः । नियुद्धचिह्नानां जाम्बवत्याश्च दर्शनेन आहितविश्वासतया अभिशस्तिमुत्तीर्णवानिति, महन्नियुद्धं कृत्वा जयेनागत इति च [1]आनन्दबाष्पोद्गममतुष्यन्नित्यर्थः ॥ ६४ ॥

अपेतसम्मोहमिवात्मवेदिनं
दिवाकरं राहुमुखादिवोद्गतम् ।
अमंस्त नागेन्द्रमिवास्तशृङ्खलं
प्रशान्तवाच्यं प्रकृतिर्यदूद्वहम् ॥ ६५ ॥

अपेतेति—प्रकृतिः पौरजनः अमात्यादिवर्गो वा [2]'पौरजनामात्याद्याः लिङ्गेषु स्वभावे प्रकृतिर्भगे' इति व्यासासिः? । प्रशान्तवाच्यं प्रशान्तपरिवादं यदूद्वहं यदुश्रेष्ठं कृष्णं अपेतसम्मोहं आत्मवेदिनं ब्रह्मविदमिव, राहुमुखादुद्गतं दिवाकरमिव, अस्तशृङ्खलं क्षिप्तशृङ्खलाबन्धनं नागेन्द्रमिव च, अमंस्त मन्यते स्म ॥ ६५ ॥

---

[1] आनन्दबाष्पाणामुद्गमो यस्मिन् कर्मणि तद्यथा भवति तथेत्यर्थः. 'आनन्दबाष्पोद्गममपुष्यन्' इति वाऽत्र पाठः स्यात्. [2] अत्र 'पौरामात्यादिलिङ्गेषु' इति पाठः स्यात्.

जिताहितो जाम्बवतीनिषेवित-
स्स तत्र सत्राजितसात्कृते मणौ ।
स्वचौर्यदुर्वादममार्जयत्स्वयं
न विद्यते यस्य न किञ्चिदण्वपि ॥ ६६ ॥

जिताहित इति—जिताहितः निर्जितप्रतिभटः जाम्बवत्या निषेवितः सः कृष्णः तत्र द्वारकायां मणौ स्यमन्तके सत्राजितसात्कृते सत्राजिताधीने कृते सति, 'तदधीनवचने' (पा. सू. ५-४-५४) इति सातिप्रत्ययः, स्वचौर्यदुर्वादं स्वस्य चौर्यविषयं परिवादं स्वयं अमार्जयत् जाम्बवज्जयादिभिः स्वयमेव जनविश्वासमाधाय मार्जयति स्म । 'मृजू शौचालङ्कारयोः' (चुरादि. १८४९) इति चौरादिकः स्वार्थण्यन्तो धातुः । कथमवद्यलेशरहितस्यापि परिवादः प्राप्तः, तत्राह—न विद्यत इति । न विद्यते तादृशः पुमान् नास्ति, यस्य किञ्चित् अण्वपि दूषणं नास्ति, सर्वस्याप्यारोपमात्रसिद्धं वा स्वल्पमपि दूषणं भवत्येवेत्यर्थः ॥ ६६ ॥

स्यमन्तकस्य द्युमणेरिव त्विषा[1]
निमेषमापुः कुमदाकरा इव ।
ह्रिया च मिथ्यापरिवादिनस्तदा
परे च पद्मा इव तद्विपर्ययम् ॥ ६७ ॥

स्यमन्तकस्येति—तदा मिथ्यापरिवादिनश्च द्युमणेः सूर्यस्येव स्यमन्तकस्य त्विषा कुमदाकरा इव ह्रिया लज्जया निमेषं मुखसङ्कोचमापुः । परे तद्व्यतिरिक्ताश्च पद्मा इव तद्विपर्ययं मुदा मुखविकासमापुः । [2]अर्धर्चादिगणे पाठात्पद्मशब्दः पुंस्यपि ॥ ६७ ॥

---

[1] द्युमणेरिवोदये–ग्र, मु. [2] 'अर्धर्चाः पुंसि च' (पा. सू. २-४-३१) इति सूत्रेणेति भावः । अत एव 'वा पुंसि पद्मं नलिनं' इत्यमरः.

**स्वगोचरानेवमगोचरो गिरां**
**बलानुजो बालधियामपाहरत् ।**
**रहस्सु रथ्यासु च लब्धसम्भवा-**
**नवर्णवादाननघो गुणार्णवः ॥ ६८ ॥**

**स्वगोचरानिति**—गिरामगोचरः वाचामविषयः वाग्भिरियत्तया परिच्छेत्तुमशक्यः गुणार्णवः सद्गुणानामर्णव इव विपुलाधारः अनघः अनवद्यः बलानुजः कृष्णः रहस्सु रथ्यासु च लब्धसम्भवान् प्रथमं रहस्सु, अनन्तरं वीथीषु च लब्धोत्पत्तिकान् स्वगोचरान् स्वविषयान् बालधियां अल्पबुद्धीनां अवर्णवादान् अपवादान् एवं उक्तप्रकारेण अपाहरत् अपहृतवान् । "अवर्णवादो निर्वादोप्यपवादो निरीक्षणम्[1]" इति यादवः ॥ ६८ ॥

**अकीर्तिरारोप्यत कीर्तिरागता**
**यदप्रियं प्रोचुरिदं प्रियाप्तये ।**
**न कर्मतन्त्रेषु मतेरमोहता**
**न च स्वतन्त्रे स्युरनिष्टहेतवः ॥ ६९ ॥**

**अकीर्तिरिति**— अकीर्तिरारोप्यत प्रथमं कृष्णे जनैरयश आरोपितम् । कीर्तिरागता तन्मूलैव जाम्बवज्जयादिकीर्तिः तं प्राप्ता । यदप्रियं अनिष्टवचनं प्रोचुः जनाः इदं प्रियाप्तये उत्तमाङ्गनारूपस्य प्रियस्याप्तये जातम् । बहूनां जनानां एकस्मिन् कथं भ्रमः, कथं च[2] . . . . . . प्रमाणस्यादूरं गतं रत्नं कृष्णः प्रत्याहृत्य जनापवादं मार्जितवान्, तत्राह—न कर्मेति । कर्मतन्त्रेषु कर्माधीनेषु मतेः अमोहता नास्ति । मोह एव तस्याः स्वभाव इत्यर्थः । विमोह एकमतेरिव अनेकमतीनामपि क्वचिदर्थे संवादी भवेदिति भावः ।

1 'विरूक्षणम्' इति मुद्रिते यादवकोशे. 2 'सत्राजितप्रसेनादिप्रणाख्या दूरं' इति पाठोऽत्र स्यात् .

स्वतन्त्रे स्वाधीने अकर्मतन्त्रे च अनिष्टहेतवो न स्युः, कारणाभावात्। तथा च तस्मिन् लोके मर्यादातीतया [1]स्वेच्छयैव ये प्रसञ्जितास्तेऽयथैव झडिति निवर्त्यन्त इति भावः। ६९॥

प्रशान्तखेदः प्रतिलभ्य सन्मणिं
जगद्विनेतुर्वसुदेवजन्मनः।
ददौ धरित्रीमिव सद्गुणाधिकां
स सत्यभामां तनयां नयाम्बुधिः॥ ७०॥

प्रशान्तखेद इति—सन्मणिं उत्तमरत्नं प्रतिलभ्य पुनर्लब्ध्वा तदनन्तरं [2]प्रशान्तखेदः नयाम्बुधिः नयस्य नीतेरम्बुधिः [3]निधिः निधानभूतः सः सत्राजितः धरित्रीं भूमिमिव सद्गुणाधिकां [4]उत्तमगुणप्रचुरां तदवताररूपत्वात् सत्यभामां सत्यभामाख्यां तनयां सुतां जगद्विनेतुः जगतां प्रशासितुः वसुदेवजन्मनः कृष्णस्य ददौ। [5]सम्बन्धसामान्यविवक्षायां षष्ठी। अपवादारोपेण कृतापराधः स्वयं सोऽपराधः क्षालनीय इति नीतिमनुसरन् कृष्णाय स्वतनयां ददावित्यर्थः। [6]प्रतिभ्यताविति समानकर्तृकया॥ ७०॥

यथा गिरीशो गिरिराजसम्भवां
पुलोमकन्यां च दिवौकसां पतिः।
स्वयं च दुग्धोदसुतां सुधासखीं
तथा सँ रेमे सदृशीमवाप्य ताम्॥ ७१॥

यथेति—यथा गिरीशः शङ्करः[7] गिरिराजसम्भवां पार्वतीं, यथा च दिवौकसां पतिः देवेन्द्रः पुलोमकन्यकां शचीं, यथा च

[1] स्वेच्छयैव प्रसञ्जितं स्तेयं झडिति निवर्त्यत इति भावः—घ. [2] प्रशान्तभेदः—घ. [3] अत्र 'नीतिचयनिधानभूतः' इति पाठस्स्यात्. [4] उत्तमरत्नप्रचुरां—क. [5] 'संबन्ध' इत्यारभ्य 'समानकर्तृकता' इत्यन्तं क,-पुस्तके न दृश्यते. [6] अत्र 'प्रतिलभ्य ददाविति समानकर्तृकता' इति पाठः स्यात्. [7] शिवः—ग.

स्वयं सुधायास्सखीं तदेकप्रभवां दुग्धोदसुतां लक्ष्मीं, तथा सः कृष्णः सदृशीं स्वानुरूपां तामवाप्य रेमे रमते स्म ॥ ७१ ॥

**अनुव्रता कामकलास्वधीतिनी**
**विचित्रशस्त्रास्त्रविहारवेदिनी ।**
**बहुप्रियस्यापि हरेरतीव सा**
**बभूव देवी बहुमान[1]गोचरा ॥ ७२ ॥**

**अनुव्रतेति**—अनुव्रता [2]पतिचित्तानुसारिणी कामकलास्वधीतिनी कामशास्त्राध्ययनवती अधीतशब्दाद्भावार्थक्तान्तात् 'इष्टादिभ्यश्च' (पा. सू. ५-२-८८) इति इनिप्रत्ययः, क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् (वा. १४८५) इति तत्कर्मणि सप्तमी, विचित्रशस्त्रास्त्रविहारवेदिनी विचित्रं अद्भुतं विविधं वा शस्त्रैरायुधैः अस्त्रैरैन्द्रवारुणादिभिश्च विहारं क्रीडां सम्यक् जानती सा देवी, सत्यभामा बहुप्रियस्य बहुरमणीकस्यापि हरेः कृष्णस्य अतीव अत्यर्थं बहुमानगोचरा बहुमानपात्रं बभूव ॥ ७२ ॥

**यथा न खेदाय गतः क्षणो भवेत्**
**यथा च तन्वीत न भीतिमायतिः ।**
**अनन्तनिष्कम्पगुणामनुक्षणं**
**प्रियः प्रियां प्रीतिमलम्भयत्तथा ॥ ७३ ॥**

**यथेति**—गतः अतीतः क्षणो यथा खेदाय न भवेत्, यथा च आयतिः उत्तरकालः भीतिं न तन्वीत न कुर्यात्, तथा अनन्तनिष्कम्पगुणां अनवधिकस्थिरसद्गुणां प्रियां सत्यभामां अनुक्षणं क्षणे क्षणे प्रीतिं अलम्भयत् अगमयत्। लभेर्गत्यर्थाश्रयणेन द्विकर्मकता। यदि नायकः [3]प्रथमं स्नेहं कृत्वा क्रमेण मन्दीभवत्स्नेहो वा भवेत् तदा

[1] गोचरः—ञ. [2] पतिचित्तानुसरणवती—क. [3] प्रथममतिस्नेहं—घ.

नायिकाया दयिते भृशं स्नेहकालः चिन्त्यमानः खेदाय भवति, उत्तरोत्तरं क्षयिष्णुस्नेहोऽयमग्रे इतोऽपि क्षीणस्नेहः स्यादिति शङ्कया आगामिकालश्च भीतिं तनुते, तदुभयं यथा न भवति तथा प्रीतिमलम्भयदित्युक्त्या प्रतिकलोपचीयमानस्नेह उत्तारोत्तरमधिकमधिकं बहुमानमकरोदित्युक्तं भवति ॥ ७३ ॥

स वल्लभाभिस्तिसृभिः प्रकाशयन्
परत्वमाद्यं प्रतिपन्नषड्गुणः ।
नयो महीयानिव शक्तिभिस्समं
समेतसिद्धिः[1] प्रचिकाय सम्पदम् ॥ ७४ ॥

स इति—तिसृभिः वल्लभाभिः रुक्मिणीजाम्बवतीसत्यभामाभिः उपलक्षितः प्रतिपन्नषड्गुणः प्राप्तसन्धिविग्रहादिनीतिशास्त्रोक्तगुणषट्कः अत एव आद्यं परत्वं प्रकाशयन् "परात्परं पुरुषमुपैति दिव्यम्" (मुण्डक. ३-२-८) इति श्रुतिसिद्धं प्राथमिकं परभावं प्रकाशयन्, परात्परः पुरुषः परिपूर्णज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपगुणषट्कशाली तिसृभिः श्रीभूमीनीलाभिर्वल्लभाभिस्सहितश्च भवतीति भावः, एवंभूतः सः कृष्णः महीयान् महत्तरो [2]नयसमेतासिद्धिः प्राप्तमनोरथस्सन् सम्पदः प्रचिकाय संवर्धयामास । प्रपूर्वाच्चिनोतेः लिट् 'विभाषा चेः' (पा. सू. ७-३-५८) इति कुत्वम् । नयोऽपि उत्साह[3]प्रभुशक्तित्रयफलभूतोत्साहप्रभुमन्त्रसिद्धित्रयस्सन् सम्पदं प्रचिनोतीति भावः । सममित्यस्य उपमेयार्थे कर्तृसाहित्यं उपमानार्थे कर्मसाहित्यमर्थ इति विशेषः । षड्गुण

---

[1] प्रजिगाय—ग्र. मु. [2] 'नय इव समेत' इत्यत्र पाठः स्यात्. [3] 'प्रभु मन्त्रशक्ति' इत्यत्र पाठः' स्यात्.

इत्यत्र षडवयवो गुण इति मध्यमपदलोपी समासः । गुणशब्दस्य गुणसमुदाये लक्षणा चेति द्रष्टव्यम् ॥ ७४ ॥

**स्वदिव्यदेहप्रकृतीरिवापराः**
**पराश्च देवीरवृणीत पञ्च सः ।**
**यथार्हसेवावसरे प्रमाद्यतां**
**यदन्वितस्सन्नभिगम्यतां ययौ ॥ ७५ ॥**

**स्वेति**—सः कृष्णः अपराः प्रसिद्धेतराः स्वदिव्यदेहप्रकृतीः [1]स्वक्रियाप्राकृतशरीरस्य सम्बन्धिनीः पञ्च प्रकृतीरिव स्थिताः पराः रुक्मिण्यादिव्यतिरिक्ताश्च कालिन्दी यमुना सत्या कैकेयी लक्ष्मणा चेति पञ्च देवीः महिषीः अवृणीत वृतवान् । यदन्वितः पुरुषकाररूपलक्ष्य-सकलरूपाभिः सहितस्सन् यथार्हसेवावसरे यथोचितसेवासमये प्रमाद्यतां अनवधानानां उचितसमये समागत्य असेवनेनापराधिनामपि अभिगम्यतां उपसर्पणीयतां ययौ । परमेष्ठिपुरुषविश्वनिवृत्तिसर्वसंज्ञकपञ्चशक्तिमय-विग्रहो भगवानिति भगवच्छास्त्रेषु प्रसिद्धम् । यथाऽऽहुः—

पञ्चशक्तिमयो देवः परमात्मा जगत्प्रभुः ।
पराभिश्शक्तिभिस्तस्य विग्रहः परमात्मनः ॥

इत्यादिकाश्शक्तयः शुद्धसत्त्वमयाप्राकृतबन्धतन्मात्रादिरूपा[2] इह प्रकृति-शब्देनोच्यन्ते । ताभिरन्वितश्च भगवान् उचितोपासनासमयेष्वपि निराकारे मनोवधानमप्यलभमानानामधिगम्यतां ध्येयतां याति । विग्रहविशिष्टे ध्यानसौकर्यात् ॥ ७५ ॥

---

1 'स्वकीयाप्राकृत' इत्यत्र पाठः स्यात्. 2 'प्राकृतपञ्चतन्मात्रादिरूपाः' इति पाठोऽत्र स्यात्. प्राकृताब्बान्ध-अ.

अखण्डिताशोक्तिभिरेकवृत्तित:
स तामिरन्योन्यसमन्वितात्मभिः ।
विभूषयामास विभूतिवैभवं
दिशाभिरष्टाभिरिवात्मनः पदम् ॥७६॥

अखण्डितेति—सः कृष्णः एकवृत्तितः एकस्य सकललोकमुख्यस्य स्वस्य वरणात्परिग्रहाद्धेतोः "एके मुख्यान्यकेवलाः" इत्यमरः। [1]'वृञ् वरणे' इति धातोः वृत्तिशब्दः वरणवाची, अखण्डिताशोक्तिभिः यद्यदभिलषितं पृच्छन्ति तत्सर्वं लोकान्तरादपि स्वयमानीय प्रयच्छतीत्यप्रतिहताभिलाषवचनाभिः अन्योन्यसमन्वितात्मभिः परस्परस्निग्धहृदयाभिः अष्टाभिस्ताभिर्महिषीभिः विभूतिवैभवं निजसम्पदुत्कर्षं विभूषयामास। कथमिव? अष्टाभिः दिशाभिः आत्मनः स्वस्य पदं आकाशमिव। दिशापक्षे—एकवृत्तितः अवयवशक्तिवैधुर्यादेकया वृत्त्या समुदायमात्रगतया शक्त्या अखण्डिताशोक्तिभिः अवयवविभागरहिताशाभिरन्योन्यसंयुक्तरूपाभिश्चेति विशेषणयोजना ॥ ७६ ॥

अवाप्य देव्यः पतिमग्र्यनायकं
महौजसं मन्मथसूत्रसंयताः।
उदग्रसद्वंशभुवो मिथस्समाः
सुवृत्त[2]मुक्ताफलसौम्यतां ययुः ॥७७॥

अवाप्येति—महौजसं महाबलं अग्र्यनायकं धीरोदात्तरूपमुत्तमनायकं कृष्णं पतिमवाप्य मन्मथसूत्रसंयताः मन्मथसंबन्धिन्या व्यव-

[1] वृञ् वरण इत्यादि। एतद्व्याख्याग्रन्थपरिशीलनायां वृञ् धातुनिष्पन्नोऽत्र वृत्तिशब्द इति प्रतीयते। स च वृञ्धातोः क्तिनि एकतकारघटितः, न द्वितकारघटितः प्रसिद्धः। अतोऽत्र औणादिकद्वितकाराघटितप्रत्ययोऽन्वेष्टव्यः, लेखकप्रमादो वा, स्यात्। किञ्चात्र प्रसिद्धवर्तनार्थकवृत्तिशब्देनाप्यर्थवर्णनं सुशकमिति भाति.

[2] मुक्तावलि—ग.

स्थया बद्धाः, तद्वशवर्तिन्य इति यावत् "सूत्रं तन्तुव्यवस्थयोः" इति विश्वः, उदग्रसद्वंशभुवः समृद्धमहाकुलप्रभवाः मिथस्समाः अन्योन्योपमेया देव्यः सुवृत्तमुक्ताफलसौम्यतां ययुः सम्यग्वर्तुलानां मुक्ताफलानां[1] मनोज्ञतां प्रापुः । यथा उन्नतोत्तमवेणुप्रभवा मुक्ता महाद्युतिं नायकरत्नमवाप्य कचित्सूत्रे स्यूता हाररूपेण मनोज्ञतां यान्ति तद्वदित्यर्थः ॥ ७७ ॥

आदौ लक्ष्मीरभजत हरिं रुक्मिणीरूपदृश्या
प्रापुस्तस्याः प्रतिनिधिपदं तत्प्रियास्सप्त देव्यः ।
सिद्धीरष्टौ दधदिव तदा सेवितस्ताभिरेकः
क्रीडायोगी निरवधिमसौ निर्वृतिं निर्विवेश ॥ ७८ ॥

आदाविति—आदौ प्रथमं रुक्मिणीरूपदृश्या रुक्मिण्यात्मना लक्ष्या लक्ष्मीः हरिमभजत । ततः [2]तस्मात् प्रियं तस्य दयिताः सप्तदेव्यः जाम्बवत्याद्याः [3]तल्लक्ष्म्याः प्रतिनिधिपदं प्रतिनिधिस्थानं [4]अभजन् प्रेमास्पदतया लक्ष्मीसाम्यं प्रापुः । तदा ताभिः अष्टाभिरेकस्सेवितः अत एव अष्टौ सिद्धीः अणिममहिमाद्या दधदिव स्थितः क्रीडायोगी क्रीडासक्तवान् असौ कृष्णः निरवधिं निर्वृतिं सौख्यं निर्विवेश बुभुजे, यथा योगी योगाभ्यासरतः योगसिद्धाभिरणिमादिसिद्धिभिः निर्वृणोति तद्वदित्यर्थः । [5]मन्दाक्रान्तावृत्तम् । "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्" (वृत्तरत्नाकरे ३-९७) इति लक्षणात् ॥ ७८ ॥

---

1 उत्तममुक्ताफलानां—घ. 2 'तत्प्रिया' इति पाठेनात्र भाव्यम्. 3 अत्र 'तस्या लक्ष्म्या' इति पाठेन भाव्यम्. 4 'अभजन्' इतीदमत्राधिकमिति भाति. 5 'मन्दाक्रान्ता' इत्यारभ्य 'लक्षणात्' इत्यन्तं ग-कोशे न दृश्यते.

प्राचीनासु प्रकृतिषु यथा प्रादुरासन् प्रजौघाः
तद्वज्जातास्सममिव जगन्नेतुरष्टासु तासु ।
पश्चात्प्राप्तप्रणयिनि [1]तथा षोडशस्त्रीसहस्रे
तेषामेकः किमयमथवा तत्समानो बभूव ॥ ७९ ॥

प्राचीनास्विति—प्राचीनासु प्राक्तनीषु मूलप्रकृतिमहदहङ्कार-पञ्चतन्मात्रारूपासु अष्टासु प्रकृतिषु यथा प्रजौघाः जनौघाः प्रादुरासन्, तद्वदष्टासु तासु रुक्मिण्याद्यासु जगतां नेतुः तस्य प्रजौघाः अपत्यौघाः समं युगपदिव अवकर्षेण जाताः प्रादुरासन् । “ प्रजा तु जनपुत्रयोः ” इति यादवः । इवशब्दो [2]वाक्यालङ्कारे ‘ इवैवखल्वादयो वाक्य-पूरणार्थाः ’ इति शृङ्गारप्रकाशिकोक्तेः । पश्चात्प्राप्तप्रणयिनि नरक-जयानन्तरं प्राप्ते प्रेमवति षोडशस्त्रीसहस्रे षोडशगुणिते स्त्रीणां सहस्रे च तथेत्यतिदेशः । तत्रापि सममिव प्रजौघा आसन्नित्यर्थः । अयं कृष्णः तेषां प्रजौघानां मध्ये एकः अन्यतमः किमथवा तत्समानो बभूवेति कवेस्सन्देहः । तेन पुत्राणां भगवता अतिसादृश्यमिति द्योत्यते । मन्दाक्रान्तावृत्तम् ॥ ७९ ॥

शमितनिगमखेदैः साधुभिः श्लाघनीयं
चरितमिदमुदारं तस्य चाणूरहन्तुः ।
श्रुतमनुकथितं वा शुद्धिमग्र्यां दधानं
समतनुत पृथिव्यां शाश्वतं धर्मसेतुम् ॥ ८० ॥

शमितेति—शमितः निगमानां वेदानां खेदः अन्यथा-व्याख्यानक्लेशो यैस्तैः वेदार्थतत्त्वोपदेशपरैः साधुभिः श्लाघनीयं

---

[1] तदा–घ. [2] सत्यपि पूर्वोत्तरभावे सूक्ष्मकालिकत्वाद्दुर्विज्ञेयतया युगपदि-वेत्यर्थोऽप्यत्र स्यात्.

श्रुतमनुकथितं वा अग्र्यां उत्कृष्टां शुद्धिं दधानं कुर्वाणं [1]उदारं चाणूरहन्तुः इदं वक्ष्यमाणरूपं चरितं पृथिव्यां शाश्वतं नित्यसिद्धं धर्मसेतुं धर्ममर्यादां समतनुत तनुते स्म, विस्तारयामासेत्यर्थः । मालिनीवृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ८० ॥

इति श्रीमद्भरद्वाजकुलतिलकविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना
अप्पय्यदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने
चतुर्दशः सर्गः ॥

---

[1] 'उदारं तस्य चाणूरहन्तुः' इत्यत्र पाठः स्यात्.

# पञ्चदशस्सर्गः

अथ पद्मभुवः पितुस्सकाशा-
दभिगच्छन् यदुपुङ्गवं दिदृक्षुः ।
मुनिरध्वनि वल्लकीसहायः
प्रजगौ लास्यतरङ्गितप्रचारः ॥ १ ॥

अथ शिशुपालवधोपोद्घातं नारदागमनं प्रस्तौति—

**अथेति**—अथ कृष्णमहिषीणामुद्वाहाद्यनन्तरं पितुः स्वजनकस्य पद्मभुवः चतुर्मुखस्य सकाशात् यदुपुङ्गवं यदुश्रेष्ठं कृष्णं दिदृक्षुः द्रष्टुमिच्छुः अभिगच्छन् वल्लकीसहायः वीणासहायः मुनिः नारदः अध्वनि गगनमार्गे [1]लास्येन हर्षनृत्तेन [2]तरङ्गितः सञ्जाततरङ्गः प्रचारः गमनं यस्य तथाभूतस्सन् प्रजगौ प्रगायति स्म । 'वृषश्रेष्ठौ तु पुङ्गवौ' इति रत्नमाला । औपच्छन्दसिकं सर्गवृत्तम् ॥

[3]'पर्यन्ते यौं तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्' (वृत्तरत्नाकरे २-१३) इति लक्षणात् ॥ १ ॥

तस्य गानमष्टभिः श्लोकैराह—

अहमस्मि पितामहस्य सूनुः
स विभोरात्मभुवस्सरोजनाभेः ।
भजते भुवि साम्प्रतं स देवः
स्वयमेवानकदुन्दुभेस्सुतत्वम् ॥ २ ॥

**अहमिति**—अहं पितामहस्य ब्रह्मणः सूनुरस्मि । सः ब्रह्मा विभोः सर्वलोकाधिपतेः आत्मभुवः [4]जनकराहितस्य सरोजनाभेः पद्म-

---

[1]लास्येन नृत्येन सह–ख. ग. [2]'तदस्य संजातं तारकादिभ्य इतच्' (पा. सू. ५-२-३६) इति तरङ्गशब्दात् अस्य संजातमित्यर्थे इतच्प्रत्ययो बोध्यः. [3]इदं लक्षणवाक्यं ख. ग.–कोशयोर्नास्ति. [4]जन्मरहितस्य–ख.

नाभस्य सूनुरित्यनुषङ्गः । स देवः साम्प्रतं इदानीं भुवि स्वयमेव स्वात्मनैव[1] आनकदुन्दुभेः वसुदेवस्य सुतत्वं भजते । सरोजनाभेरित्यत्र समासान्तविधेरनित्यत्वात् [2]योगविभाग[3]सिद्धेरप्रत्ययो न कृतः । तथा माघकाव्ये प्रयोगश्च 'प्रजा इवाङ्गादरविन्दनाभेः' (शिशुपालवधे-३-६५) इति ॥ २ ॥

**अवरोपितगोपसूनुभाव-**
**स्स नटस्सम्प्रति देवकीसुतस्सन् ।**
**परितोषितभावुकस्स्ववृत्त्या**
**श्रुतिलक्ष्यां[4] महतीं प्रियामविन्दत् ॥ ३ ॥**

**अवरोपितेति**—सम्प्रति इदानीं अवरोपितो गोपसूनुभावो येन तथोक्तः देवकीसुतस्सन् स्ववृत्त्या स्वचरित्रेण परितोषितभावुकः सन्तोषितनिजोपासकः स नटः नर्तकः, भिन्नभिन्नरूपपरिग्रहात् कृष्णो नर्तकत्वेनाध्यवसितः, श्रुतिलक्ष्यां वेदैर्लक्षणीयां महतीं पूजितां प्रियां रुक्मिणीरूपां लक्ष्मीं अविन्दत् अलभत । श्रुतयस्सङ्गीतशास्त्रोक्ताः

[1] स्वेच्छयैव—ख. ग. [2] योगविभागेत्यादि—यथा अच्प्रत्यन्ववपूर्वात्सामलोम्नः (पा. सू. ५-४-७५) इत्यत्र अजिति योगविभागं कृत्वा पद्मनाभादिशब्दाः साधिताः । तद्वत् अत्रापि सरोजनाभिशब्दे समासान्तोऽच्प्रत्ययस्स्यादिति चेत् सुपथी नगरी इत्यादौ 'इनः स्त्रियाम्' (पा. सू. ५-४-१५२) इति समासान्तकप्वारणाय 'समासान्तविधिरनित्यः' (परि ८५) इति परिभाषायाः 'प्रतेरंश्वादयस्तत्पुरुषे' (पा. सू. ६-२-१९३) इत्यत्रांश्वादिगणे राजन्शब्दपाठेन ज्ञापितायाः अङ्गीकारेण प्रयोगानुरोधात् अत्राप्यनित्यत्वात्समासान्तस्याच्प्रत्ययस्याप्रवृत्त्या सरोजनाभिरिति प्रयोगो निर्वाह्य इति भावः । मुकुन्दस्तु 'योगविभागादिष्टसिद्धिः' (परि १२४) इति परिभाषामभिप्रेत्य नाभ्यन्तस्य सर्वत्र योगविभागसिद्धोऽच्समासान्तो न नियमेन भवतीति 'प्रजा इवाङ्गादरविन्दनाभेः' (शिशु. ३-६५) इति माघपद्यगतमरविन्दनाभिपदं समर्थितवान्. [3] 'सिद्धोऽच्प्रत्ययः' इत्यत्र पाठः स्यात्. [4] प्रतिलक्ष्यां ग्र. मु.

द्वाविंशतिस्वरव्यञ्जकशब्दाविशेषाः, ताभिर्लक्ष्यां प्रियां महतीं वीणामविन्ददिति किमप्यर्थान्तरं प्रतीयते । [1]तेन यथा प्रसिद्धो नटः कश्चित् भूमिकां प्रदर्श्य तामवरोप्य सद्यो भूमिकान्तरप्रदर्शनेन भावुकान्नाट्यरसाभिज्ञान् सामाजिकान् परितोष्य तेभ्यः पारितोषिकं सङ्गीतोपयोगित्वात्स्वाप्रियमुत्तमवीणादिकं लभते तद्वदिति गम्यते । 'भावो विद्वान्' इति नाट्योक्तावमरः । महतीशब्दो नारदवीणामात्रवाची । तेन तद्वदुक्तं वीणासामान्यं लक्ष्यते । महतीप्रियत्वान्नारदस्य तद्वचने [2]तद्वाचिशब्देन वीणान्तरलक्षणा कृता ॥ ३ ॥

**तदहं तमसः स्थितं परस्ता-**
**दनपायद्युति भास्वताऽऽत्मनैव ।**
**कमलोल्लसितेन दर्शनीयं**
**दिनमाद्यन्तविवर्जितं दिदृक्षे ॥ ४ ॥**

**तदिति**—भास्वता दीप्यमानेन आत्मना स्वेनैव न त्वन्यसहकारिबलेन[3] अनपायद्युति स्थिरप्रकाशं, स्वत एव सदा प्रकाशमानमिति यावत्, तमसः परस्तात् प्रकृतिमण्डलातीते परमपदे स्थितं कमलोल्लसितेन लक्ष्मीविलासेन दर्शनीयं मनोहरं आद्यन्तविवर्जितं [4]अनाद्यन्तं दिनं भगवन्तं दिदृक्षे द्रष्टुमिच्छामि "ज्ञाश्रुस्मृदृशां सनः" (पा. सू. १-३-५७) इत्यात्मनेपदम् । प्रसिद्ध[5]दिनमपि भास्वता हेतुना अनपायद्युति अन्धकारमतीत्य स्थितं पद्मविकासेन दर्शनीयं चेति श्लिष्टविशेषणसाम्यात् भगवतो दिनत्वाध्यवसायः । आद्यन्तविवर्जितमिति प्रसिद्धदिनाद्व्यतिरेकश्च ॥ ४ ॥

---

[1] 'तेन' इति ख. ग.–कोशयोर्न दृश्यते [2] तद्वाचिशब्दो न वीणान्तरलक्षणकृतः–ग. घ. [3] कारबलेन–ख. ग. [4] अनाद्यनन्तम्–ख. ग. [5] दिनं तु–घ. दिनं हि–ग.

गुणसिन्धुरसौ गुणातिवर्ती
गतिरन्तस्स्थितिरागमैकगम्यः[1] ।
दयितासहितो [2]दयैकसङ्गी
गुरुराद्यो मयि गौरवं विधाता ॥ ५ ॥

गुणसिन्धुरिति—दयावात्सल्यादिगुणानां सिन्धुः निधानभूतः गुणातिवर्ती सत्त्वरजस्तमो[3]रूपान्मायागुणानतिक्रान्तः, [4]अतद्वश्य इति यावत्, गतिः शरण्यः अन्तःस्थितिः अन्तर्यामी आगमैकगम्यः वेदैकबोध्यः दयिताः रुक्मिण्यादयः तत्सहितः, दयैकसङ्गी दयया सह एकः मुख्यः सङ्गोऽस्यास्तीति तथोक्तः 'कर्मधारयान्मत्वर्थीयस्सर्वधनाद्यर्थः' इति कर्मधारयादिनिप्रत्ययः, आद्यो गुरुः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वेताश्व ६-१८) इति श्रुतेः ब्रह्मणोऽप्यध्यापयितेति सर्वेषामाद्यो गुरुः, असौ कृष्णः मयि गौरवं बहुमानं विधाता कर्ता । विपूर्वात् [5]धाञो लुट्, तृन्प्रत्ययो वा । विरोधाभासोऽलङ्कारः, गुणी निर्गुणश्चेति गतिस्स्थितिक्रियाद्वयरूपो गन्तव्यरूपश्चेति, रुक्मिण्यादिसहितो दयया एकयैव सहितश्चेति, स्वयमाद्यो गुरुः मां [6]गुरूकरोतीति च सर्वत्र [7]विरोधस्याभासनात् ॥ ५ ॥

जगदेकहितेन जन्मनाऽसौ
दनुजैराक्रमणं भुवो निरुन्धन् ।
कलहप्रिय[8]मद्वचोऽनुरोधात्
न कथं विग्रहमारभेत नाथः[9] ॥ ६ ॥

जगदिति—जगतामेकहितेन परमहितेन जन्मना अवतारेण

---

1 आगमैरगम्यः—ग्र. मु. 2 दयैकनिघ्नः—ग्र. मु. 3 रूपमाया—घ. 4 अनवद्यः—ख. ग. घ. 5 धाधातोर्लुट्. 6 गुरुं करोति—ख. ग. 7 विरोधाभासता—ख. ग. 8 'मद्वचोऽनुसारात्'—ग्र. मु. अयमेव ख. ग. ञ.—कोशद्वयमानव्याख्यासंमतः पाठः. 9 धीरः—ग्र. मु.

भुवः दनुजैराक्रमणं निरुन्धन् असौ नाथः कलहप्रियस्य [1] मम वचसोऽनुरोधात् विग्रहं कलहं कथं नारभेत आरभेतैव, मयि गौरव[2]बुद्धिमत्त्वादिति भावः । [3] उभयप्राप्तौ कर्मणि षष्ठी[4]नियमात् दनुजैरिति कर्तरि तृतीया ॥ ६ ॥

स्वस्य कलहप्रियत्वदोषं परिहरति—

**अधिकारविलम्बितापवर्ग-**
**स्थिरसङ्गादपकौतुकस्त्रिवर्गे ।**
**विधिना नियतेन धर्मगुप्तौ**
**विनियुक्तोऽस्मि विरोधनेन दीव्यन् ॥ ७ ॥**

**अधिकारेति**—अधिकारविलम्बितापवर्गस्थिरसङ्गात् "याव-दधिकारमवस्थितिराधिकारिकाणाम्" (शा. सू. ३-३-३१) इति शारीरकसूत्रोक्तन्यायात् अधिकारेण देवर्षिपदावस्थानरूपेण विलम्बिते अधिकारनिवृत्त्यनन्तरभाविनि अपवर्गे दृढाभिलाषात् त्रिवर्गे त्रयाणां धर्मार्थकामानां वर्गे अपकौतुकः अनभिलाषः "कौतुकं त्वभिलाषे स्यात्" इति विश्वः, अहमिति शेषः, [5] विशेषणेन स्वार्थं विरोधनं न करोमीति दर्शितम्, धर्मगुप्तौ धर्मसंरक्षणे नियतेन निरतेन विधिना ब्रह्मणा विनियुक्तः दुष्टनिग्रहोपयोगि देवासुरादीनां विरोधनं कुर्विति नियुक्तस्सन् विरोधनेन विरोधकरणेन दीव्यन् क्रीडन् अस्मि वर्ते । विरोधनशब्दे ण्यन्ताद्रुधिधातोः ल्युट्प्रत्ययः ॥ ७ ॥

---

[1] मद्वचसोऽनुसारात् अनुरोधात्—ख. ग. ङ. [2] बुद्धित्वादिति—ख. ग. घ. [3] उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठीत्यर्थकेन 'उभयप्राप्तौ कर्मणि' (पा. सू. २-३-६६) इति सूत्रेणेत्यर्थः. [4] नियमनात्—ग. ङ. [5] विशेषणविशेषेण—ख.

विदधे विनिवेदितं मयाऽसौ
विविधं विश्वहितं विधास्यते च ।
स्वजनत्वधिया सुरासुराणां
बहुमानैकपदं यतोऽहमासम् ॥ ८ ॥

**विदध इति**—असौ कृष्णः मया विनिवेदितं विज्ञापितं विविधं बहुविधं विश्वहितं विदधे प्रागपि कृतवान् । विधास्यते च इतः परमपि करिष्यति । नन्वसुरेष्वप्यन्तरङ्गतया वर्तमानस्य तव वचनं कथं [1]बहुमन्येतेत्यत्राह—स्वजनत्वेति । यतः यस्मात्कारणात् सुरासुराणां स्वजनत्वधिया अहं बहुमानैकपदं बहुमानस्य मुख्यास्पदं आसम् । असुराणां प्रलोभनेन स्वकीयत्वभ्रान्तिमुत्पादयतोऽपि वस्तुतस्सुरकार्य[2] पक्षपातित्वं जानात्येव भगवानिति भावः ॥ ८ ॥

विनिवेदयता रिपोरुदन्तं
दिविषद्वैभवदावचित्रभानुम् ।
अजितस्य जिगीषतो मयाऽसौ
विजयारम्भमहोत्सवो विधेयः ॥ ९ ॥

**विनिवेदयतेति**—दिविषद्वैभवदावचित्रभानुं देवानामैश्वर्यस्य दावानलं रिपोः शिशुपालस्य उदन्तं वृत्तान्तं विनिवेदयता मया जिगीषतः स्वत एव जेतुमिच्छतः अजितस्य कृष्णस्य असौ मद्वचनानन्तरमेव भावी विजयारम्भ एव महोत्सवः विधेयः सम्पादनीयः । [3]' विष्णावप्यजिताव्यक्तौ ' इत्यमरः ॥ ९ ॥

---

[1] बहुमतमित्यत्राह—ख. [2] पक्षपात्यहमिति जानात्येव—ग. पक्षपात्ययमिति—घ. [3] जिष्णावप्यजिताव्यक्तौ—ख. ग.

इति भव्यमनोरथो [1] महीयान्
प्रभुमासीनमुपह्वरेऽभियातः ।
विदिताखिलवेदितव्यमित्थं
मुदितः प्राह जगद्धितं मुनीन्द्रः ॥ १० ॥

**इतीति**—इति उक्तप्रकारेण भव्यमनोरथः शुभाभिलाषः, लोकहितं चिन्तयन्निति यावत्, महीयान् महत्तरः उपह्वरे रहसि आसीनं प्रभुं कृष्णं अभियातः प्राप्तः मुनीन्द्रः नारदः मुदितः सन्तुष्टस्सन् विदिताखिलवेदितव्यं स्वयमेव विदितनिखिलवेद्यं जगद्धितं कृष्णं इत्थं वक्ष्यमाणप्रकारेण प्राह उवाच । [2] आहेत्युवाचार्थेन निपातेन प्रादिसमासः ॥ १० ॥

जय देव जगत्त्रयान्तरात्मन्
[3] न नियन्ता न च ते समस्त्वदन्यः ।
भवभीतिनिशीथिनीविभातं
परमं ब्रह्म भवन्तमामनन्ति ॥ ११ ॥

**जय देवेति**—हे देव जगत्त्रयान्तरात्मन् लोकत्रयस्यान्तर्यामिन् जय सर्वोत्कर्षेण वर्तस्व । 'जि जये' (भ्वादि ५६१.) इति धातुरुत्कर्षप्राप्त्यर्थोऽकर्मकः । ते तव न नियन्ता न कश्चिन्नियन्ताऽस्ति । त्वदन्यः त्वद्व्यतिरिक्तः समः त्वत्तुल्यश्च नास्ति । "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वेताश्व. ६-८.) इति[4] श्रुतेः । भवन्तं भवभीतिनिशीथिनीविभातं

---

[1] महात्मा—घ. [2] आहेत्युवाचार्थेनेत्यादि ॥ यद्यपि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' (पा. सू. ३-४-८४) इति सूत्रेण प्रोपसृष्टस्य ब्रूञ आहादेशेन प्राहेति रूपं सिध्यति, तथापि तस्य आहादेशस्य लट्लकार एव विधानात् प्रकृते नारदोक्तेर्भूतकालिकतया लिड्लकारस्यैव प्रयुयुक्षितत्वेन तत्र च ब्रूञ आहादेशस्याप्रवृत्त्या उवाचेत्यर्थकेन आहेति निपातेन 'कुगतिप्रादयः' (पा. सू. २-२-१८) इति सूत्रेण प्रादिसमास इति भावः. [3] न नियन्ता खलु ते—म्र. मु. [4] श्रुतिः—ख.

संसारभीतिरेव रात्रिः तस्याः प्रभातं [1] प्रातःकालं परमं ब्रह्म आमनन्ति वेदविदोऽधीयते ॥ ११ ॥

**उदितः प्रणवाङ्कुरात्मना त्व-**

**द्विविधस्कन्धविभक्तरूढशाखः ।**

**त्वदनुग्रहपुष्पितः प्रजानां**

**फलमिष्टं निगमद्रुमः प्रसूते ॥ १२ ॥**

**उदित इति**—त्वत् भवतः प्रणव एवाङ्कुरः तदात्मना तद्रूपेण उदितः विविधस्कन्धविभक्तरूढशाखः बहुविधेषु ऋग्वेदादिरूपेषु व्यूहेषु विभक्ताः व्यस्ताः रूढाः शाखिविशेषेषु व्यवस्थिताः शाखाः तत्तद्व्यूहावान्तरभेदा यस्य स तथोक्तः, द्रुमपक्षे विविधाः स्कन्धे प्रकाण्डे विभक्तं यथा तथा प्ररूढा विटपा यस्येत्यर्थः, त्वदनुग्रहपुष्पितः वेदोक्तकर्मज्ञानाराधितस्य तव प्रसादेन सञ्जातकुसुमः, प्रकृत्यादि-तृतीयायाः [2] बहुलग्रहणात्समासः, अनुग्रहस्यैव पुष्पत्वरूपणेन करणे तृतीयानवकाशात् निगमः वेद एव द्रुमः प्रजानां [3] इष्टं फलं स्वर्गापवर्गादिकं प्रसूते ॥ १२ ॥

**विषमं निजकर्मभेदयोगात्**

**बहुमानास्पदबन्ध[4]मोक्षलीलः ।**

**जनितं भवतैव पुत्रनीत्या**

**जगदेतत्स्वयमेव रक्षसि त्वम् ॥ १३ ॥**

**विषममिति**—बहुमानास्पदबन्धमोक्षलीलः मुनिजनादिश्लाघन-गोचरभूता[5] अनेकप्रमाणविषयभूता वा प्राणिनां बन्धमोक्षरूपा लीला

---

[1] प्रभातं उपरतिकारणं–ङ. [2] बहुलग्रहणादिति.—'कर्तृकरणे कृता बहुलम्' (पा. सू. २-१-३२) इत्यत्र बहुलग्रहणात्कर्तृकरणेतरार्थकतृतीयान्तस्यापि समास इति भावः. [3] इष्टं स्वर्गादिकं–ख. [4] मोक्षलीलम्। जनितं भवतैव रक्षसि त्वं जगदेतत्स्वयमेव पुत्रनीत्या–ग्र. मु. [5] भूता मुनीनां प्रमाण–ख.

[1]यस्य सः त्वं निजकर्मभेदयोगात् स्वस्वकर्मविशेषसम्पर्कात् विषमं निम्नोन्नतं भवतैव जनितमेतज्जगत् स्वयमेव पुत्रनीत्या [2]पुत्रस्य यो रक्षणप्रकारः तेन अतिवात्सल्येन रक्षसि। तथाभगवद्वात्सल्य-विषयत्वे कथमित्थं तारतम्यमित्याशङ्क्योक्तं विषमं निजकर्मभेदयो-गादिति ॥ १३ ॥

ननु भगवद्दयाविषये जगति कर्मभेदप्रयुक्तं वा वैषम्यं कुतस्स्या-दित्याशङ्क्य कर्मसामर्थ्यं दर्शयति—

गुणचित्रितजन्तुदन्तुरेऽस्मिन्
जगति त्वद्विहिते हितेतरेभ्यः।
अपि विश्वसृजां समाहिताना-
मयथाचिन्तितमापतन्त्यवस्थाः[3] ॥ १४ ॥

**गुणेति**—सत्त्वरजस्तमोभिश्चित्रितैः भिन्न[4]प्रकृतिकृतैः [5]जन्तुभिः दन्तुरे विषमे त्वद्विहिते त्वया सृष्टे अस्मिन् जगति, हितेतरेभ्यः [6]अहितेभ्यो दुरितेभ्यः, पञ्चमीबहुवचनमेतत्, समाहितानां समाहित-चित्तानां विश्वसृजां प्रजापतीनां वेधोदक्षमन्वादीनामपि अयथाचिन्तितं चिन्तिताननुसारि यथा तथा अवस्थाः आपतन्ति। अन्येषां किमु वक्तव्यमिति भावः। न चैवं कर्मणैव जगद्वैचित्र्ये भगवतः स्वातन्त्र्य-विरोध इति वाच्यम्, तत्तत्कर्मानुगुण्येनभगवानेवेदं जगत् सृजती-त्युपगमात्, पुत्रेष्वपि तत्तद्वृत्तानुगुण्येन पितुः कोपप्रसाददर्शनाच्चेति भावः ॥ १४ ॥

---

1 यस्य त्वं—ख. ग. 2 पुत्रस्य यथा रक्षण—ख. पुत्रस्य नीती रक्षण—ग. 3 मापदं निरास्थः—प्र. मु. 4 निम्नोन्नतीकृतैः—ख. 5 जन्तुभिः प्राणिभिरेव—घ. 6 'अहितेभ्यो दुरितेभ्यः' इति ख. ग. घ. कोशेषु नास्ति.

एवमभिष्टुत्य प्रस्तुतं विज्ञापयति—

सुकृतोपचयेन जातसिद्धि-
स्त्वदसौ कश्चिदुपस्थितापराधः ।
[1]अनुभूय हिरण्यरावणत्वे
भजते सम्प्रति चेदिराजभावम् ॥ १५ ॥

सुकृतेति—सुकृतस्योपचयेन समृद्ध्या त्वत् भवतः सकाशादेव जातसिद्धिः जातैश्वर्यः उपस्थितापराधः तदनन्तरं प्राप्तापराधः असौ बुद्धिसन्निहितः कश्चित् हिरण्यरावणत्वे द्वन्द्वान्तस्थस्य त्वप्रत्यस्य प्रत्येकसम्बन्धः, हिरण्यत्वं रावणत्वं चानुभूय सम्प्रति चेदिराजभावं शिशुपालत्वं भजते ॥ १५ ॥

त्रिषु जन्मसु ते [2]विहारदक्षं
विधिना सिंहगजक्रमेण सृष्टः ।
सहजः किल रुक्मिणीनिमित्ते
स रिपुस्सम्प्रति कृत्रिमश्च जातः ॥ १६ ॥

त्रिष्विति—त्रिषु जन्मसु हिरण्यरावणशिशुपालजन्मसु ते तव विहारदक्षं युद्धविहारचतुरं यथा तथा विधिना दैवेन सिंहगजक्रमेण सिंहगजरीत्या नैसर्गिकविरोधितया सृष्टः अत एव तव सहजो रिपुः शिशुपालः सम्प्रति इदानीं [3]रुक्मिणीरूपनिमित्ते कृत्रिमः करणेन निर्वृत्तः रिपुश्च जातः किल । ततश्च [4]कृत्रिमरिपोः प्रबलत्वात् नासौ क्षणमप्युपेक्षणीय इति भावः । रुक्मिणीनिमित्त इत्यत्र 'निमित्त-कारणहेतुषु सर्वासां प्रायोदर्शनम्' (वा. १४७३) इति सप्तमी ॥ १६ ॥

---

[1] अनुमेयहिरण्यरावणत्वो–घ्र. मु. [2] विहारशिक्षाविधिना–घ्र. दे. मु. [3] रुक्मिणीनिमित्ते–घ्र. [4] अत्र 'अरिर्मित्रमुदासीनः' (याज्ञ. १–३४५) इति याज्ञवल्क्यस्मृतिश्लोकव्याख्यायां विज्ञानेश्वरीयायां—'कृत्रिमोऽरिः यस्यापकृतं येन चापकृतम्' इत्युक्तं द्रष्टव्यम्.

**विपथेन [1]सदैष विप्रधावन्**
**विबुधग्रामविपन्निदानभूतः ।**
**भवतो भजतामनन्यसाध्यं**
**विनिपातं [2]प्रणिपातवृत्त्यनर्हः ॥ १७ ॥**

**विपथेनेति**—विपथेन दुर्मार्गेण विप्रधावन् निरर्गलं चरन् विबुधग्रामविपन्निदानभूतः देवसङ्घस्य विपदां मूलकारणत्वं प्राप्तः प्रणिपातवृत्त्यनर्हः प्रणिपातरूपाया वृत्तेरयोग्यः, अत्युग्रत्वात् प्रणिपातेनापि देवैः प्रसादयितुमसाध्य इति यावत्, एषः शिशुपालः भवतः त्वत्सकाशात् अनन्यसाध्यं अन्यैस्साधयितुमशक्यं विनिपातं निधनं भजताम् । प्रार्थनायां लोट् ॥ १७ ॥

**दमनं दमघोषसम्भवस्य**
**प्रबलस्यापि यदर्थ्यते तदेतत् ।**
**मधुकैटभमेरुमर्दिनस्ते**
**मशकामर्शनमात्रमित्यवैमि ॥ १८ ॥**

**दमनमिति**—प्रबलस्य प्रकृष्टबलस्यापि दमघोषस्सम्भवो जनको यस्य तस्य शिशुपालस्य यद्दमनं प्रमथनमर्थ्यते तदेतन्मधुकैटभमेरुमर्दिनः मधुकैटभौ मेरू इव तौ मर्दितवतः ते तव मशकामर्शनमात्रं मशकपेषणमित्यवैमि ॥ १८ ॥

वस्तुतस्तु मधुकैटभार्दनमपि अत्यल्पमेवेत्याह—

**अथवा जगदेतदोदनं ते [3]**
**तदुपघ्नमुपसेचनं च मृत्युः ।**
**महदादि विलापयन्महिम्ना**
**दमनैराद्रियसे न दानवानाम् ॥ १९ ॥**

**अथवेति**—अथवेति पक्षान्तरे, ते तव एतत् परिदृश्यमानं जगत्

---

[1] सदैव विप्र–घ, [2] प्रणिपातगत्यनर्हः—**प्र. दे. मु.** [3] ओदनस्ते—**प्र. दे. मु.**

ओदनं ओदनस्थानीयं, तत् जगत् [1]उपन्निन् नाशयन् मृत्युः उपसिच्यते अनेन ओदन इत्युपसेचनं दध्यादि, तत्स्थानीयम्।

'यस्य ब्रह्म च क्षत्रं च उभौ भवतओदनः।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' (कठ. २-२५)

इति कठवल्लीषु मन्त्रः। तत्र ब्रह्मक्षत्रशब्दाभ्यां चराचरात्मकस्सर्वः प्रपञ्चो लक्ष्यत इति समृत्युकसर्वप्रपञ्चसंहर्तृत्वं मन्त्रार्थ इति [2]निर्णीतं "अत्ता चराचरग्रहणात्" (शा. सू. १-२-९) इति शारीरकाधिकरणे। एवं महदादि महदहङ्कारादि सर्वं जगत् महिम्ना शारीरयत्नं विना प्रभावमात्रेण विलापयन् नाशयन् त्वं दानवानां दमनैः नाद्रियसे न श्लाघ्यसे। एवंभूतस्य तव दानवदमनं कियदित्यर्थः॥ १९॥

ननु [3]देवदानवसामान्यदैवतस्य मम दैवपक्षपातेन दानवदमनमयुक्तमित्याशङ्क्याह—

**सुहृदोऽपि सदा सुरासुराणां**
**प्रणतानुग्रहभावितात्मनस्ते।**
**क्वचिदापतितोऽपि पक्षपातः**
**समतामेव समर्थयेत सत्याम्॥ २०॥**

**सुहृद** इति—सदा सुरासुराणां सुहृदोऽपि प्रणतानुग्रहभावितात्मनः प्रणतरक्षणेन ख्यापितस्वरूपस्य ते तव क्वचित् प्रणतविषये आपादितोऽपि पक्षपातः समतामेव सत्यां [4]अबाधितां समर्थयेत साधयेत्। प्रणतरक्षणव्रतिनः प्रणतेष्वभिमानः स्वतस्समतां न व्याहन्तीति भावः॥ २०॥

---

[1] उपघ्नन् मृत्युः—ख. [2] निर्णीतं, नराचर—ख. [3] देवदानवेत्यादि—'देवानां दानवानां च सामान्यमधिदैवतम्' इति जितन्तेस्तोत्रे पाञ्चरात्रान्तर्गते दृश्यते. [4] अबाध्यतां—घ.

एवं प्रस्तुतं विज्ञाप्य तद्दृढं स्वीकारयितुं पुनरपि स्तौति—

प्रथमा चरमा च देवता त्वं
वरणीया वरदा च विश्ववन्द्या ।
निगमेषु [1]सती पुरेषु चैका
जनयित्री जनपङ्क्तिहारिणी च ॥ २१ ॥

**प्रथमेति**—प्रथमा देवता विष्णुः चरमा च देवता अग्निः "अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः" (ऐ. ब्रा. १-१-१) इति [2]श्रुतिसिद्धः तयोः प्रथमचरमभावः, वरणीया वरेण्या भजनीया, तत्र निमित्तं वरदा अभीष्टप्रदा, विश्ववन्द्या विश्वेषां त्रैवर्णिकानां नित्यवदुपास्या च देवता "तत्सवितुर्वरेण्यम्" "आयातु वरदा देवी" इति मन्त्रप्रसिद्धा गायत्री निगमेषु सती ऋग्यजुस्सामवेदेषु विद्यमाना देवता "ओमिति ब्रह्म" (तै. उ. १-८) [3]इति श्रुता प्रणवरूपा, "अग्निमीळे" (ऋक्सं. १-१-१) इति ऋग्वेदादिरकारः "योनिस्समुद्रो बन्धुः" (तै. सं. ७-५-२५) इति यजुर्वेदमध्यगत उकारः "समानं परम्" (सामसंहिता) इति सामवेदान्तो मकारश्च प्रणवशरीरमिति सम्प्रदायः, पुरेषु शरीरेषु एका देवता "एको देवस्सर्वभूतेषु गूढः" (श्वेता. ६-११) इति श्रुतिसिद्धा अन्तर्यामिरूपा, "पुरं पुरि शरीरे च" इति विश्वः, जनयित्री देवता चतुर्मुखः, जनपङ्क्तिहारिणी देवता रुद्रः, एषा सर्वाऽपि देवता त्वमेवेति सर्वात्मत्वेन स्तुतिः । यद्यप्यन्तर्यामित्वोक्त्यैव सर्वात्मत्वं लब्धं, तथापि आदरातिशयात्प्रथमा चरमेत्यादि विशिष्यापि वर्णितम् ॥ २१ ॥

---

[1] सती वरेषु चैवं–म्र. मु. [2] श्रुतिप्रसिद्धः–ख. ग. [3] श्रुतौ–ख.

[1] घटकैरिव कर्मपाशनद्धैः
स्थिरकालात्मकचक्रयन्त्रनिघ्नैः ।
विहरस्यधरोत्तर[2] क्रमेषु
स्ववशैरेव सुरासुरैस्स्वतन्त्रः ॥ २२ ॥

**घटकैरिति**—स्वतन्त्रः कर्माण्येव पाशाः तैः नद्धैः बद्धैः स्थिरं कालात्मकं चक्रयंत्रं चक्राकारं कूपेभ्यो जलाहरणस्योपयोगि घटीयन्त्रं तस्मिन् निघ्नैः तदधीनैः अधरोत्तरक्रमेषु कदाचित्केषांचिदधरत्वं अन्येषामुत्तरत्वं अन्यदा तद्वैपरीत्यं [2]इत्येवं क्रमेषु स्ववशैरेव त्वदायत्तैरेव स्थितैः सुरासुरैः घटकैरिव घटीयन्त्रबद्धैः क्षुद्रघटैरिव त्वं विहरसि क्रीडासि ॥ २२ ॥

सवने भवमुक्तिसन्धिरूपे
विधिना [3] विश्वपते ! विचित्रहेतिम् ।
हृदि शान्तधियस्समिन्धते त्वा-
मनघात्मक्रतुहव्यवाहमाद्यम् ॥ २३ ॥

**सवन इति**—हे विश्वपते भवमुक्तिसन्धिरूपे संसारमुक्तिसन्ध्यात्मके सवने सूयतेऽस्मिन्निति सवनं सोमाभिषवयुक्तं सौम्यं कर्म तस्मिन् विचित्रहेतिं विचित्रशङ्खचक्राद्यायुधम्, हेतिग्रहणं भूषणादीनामप्युपलक्षणं, अस्त्रभूषणादियुक्तस्यैव भगवतो ध्यानविधानात्, अनघात्मक्रतुहव्यवाहं अनघस्य प्रसिद्धक्रतुवत् दीक्षानियमादिक्लेशरहितस्य आत्मक्रतोः प्रपदनाख्यस्य परमात्मनि जीवात्महविस्समर्पणरूपस्य वह्निं आद्यं जगदादिभूतं त्वां शान्तधियः उपशान्तचित्ता मुमुक्षवः हृदि हृदये विधिना प्रपदनविध्युक्तप्रकारेण समिन्धते दीपयन्ति भावयन्तीति यावत्। इन्धीधातोः दीप्त्यर्थकस्याकर्मकत्वेऽपि

---

[1] कलशैरिव—ग्र. दे. मु. [2] क्रमेण—घ. [3] विश्वहिते—ग्र. मु.

अन्तर्भावितण्यन्ततया सकर्मकप्रयोगः । अन्यत्राप्यग्निमिन्ध आग्नीध्र इत्यादौ प्रसिद्धोऽस्य सकर्मकप्रयोगः। यथा यज्वानः प्रसिद्धक्रतुमध्यगते सवने विचित्रज्वालं कृत्वग्निमुत्तरवेद्यां विधिना [1]सामिधेनीवचनविध्युक्तप्रकारेण समिन्धते, तद्वदित्युपमा गम्यते। यद्यप्यैष्टिकमग्निसमिन्धनं सोमयागरूपस्य सवनस्य नास्ति, तथापि प्रातस्सवनमध्ये क्रियमाणस्य सवनीयपशोः इष्टिविकारत्वात् तत्रातिदेशिकमग्निसमिन्धनं सवनमध्यपाति भवतीति सवनमित्युक्तम्। भगवन्तं प्रपद्यमानानां नेदीयसी मुक्तिरिति भवमुक्तिसन्धिरूप इत्यनेन दर्शितम्॥ २३॥

**अणिमादिभिरेक एव भिन्नः**
**परविद्यामणिदर्पणेषु भानात्।**
**सुदृशां भजसि त्वमात्मभूतः**
**सुखसन्दर्शनयोग्यमाभिमुख्यम्॥ २४॥**

अणिमादिभिरिति—एक एव सन् परविद्यामणिदर्पणेषु पराः उत्कृष्टाः विद्याः ब्रह्मविद्या एव मणिमुकुराः तेषु भानात् स्फुरणाद्धेतोः अणिमादिभिः अणिममहिमप्रभृतिभिः भेदकैः भिन्नः, शाण्डिल्यविद्यायां 'एष आत्मा अन्तर्हृदयेऽणीयान्' (छा. ३-१४-३) इत्यणिमा श्रूयते, कठवल्लीषु 'अङ्गुष्ठमात्रः पुरुषः' (कठ. २-१२) इत्यङ्गुष्ठपरिमाणत्वं श्रूयते, वैश्वानरविद्यायां 'तस्य ह वा एतस्य आत्मनो वैश्वानरस्य मूर्धैव सुतेजाः' (छा. ५-१८-२) इत्यारभ्य 'पृथिव्येव पादौ' इत्यन्तेन त्रैलोक्यशरीरत्वं श्रूयते, एवमेकोऽपि विद्याविशेषेषु व्यवस्थितैर्ध्यातव्यगुणैर्विभिन्न इत्यर्थः, आत्मभूतः आत्मत्वं प्राप्तः, "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" (शा. ४-१-३) इति शारीरकसूत्रे अहंग्रहोपासनासु आत्मत्वेन ध्यानविधानादात्मेति गृहीतः त्वं सुदृशां उत्तमज्ञानानां ब्रह्मविद्यानुष्ठातॄणां [2]"दृक् बुद्धा-

[1] सामिधेनीनिबन्धन—ख. सामिधेनीसमिन्धन—ग. [2]'दृक् ज्ञाने ज्ञातरि त्रिषु' इत्यमरः.

वीक्षणेऽपि च" इति विश्वः, सुखसन्दर्शनयोग्यं सुखस्यानन्दहेतोः सन्दर्शनस्य त्वद्गोचरविशदतरावभासस्योचितं तत्सम्पादनसमर्थं आभिमुख्यं चिरं निरन्तरविद्यानुष्ठानकृतं विद्वद्विषये प्रसादं भजसि। यथा एकोऽपि नानाप्रकृतिकेषु दर्पणेषु स्फुरणादल्पत्वमहत्त्वादितत्तद्दर्पणोपाधिकधर्मभेदैर्भिन्नः स्वरूपभूतो मुखाद्यवयवः सुखेन बिम्बभूतस्वमुखावलोकन इव नयनाधरीकरणादियत्नं विनैव साक्षात्करणस्योचितं अभिमुखत्वं भजति तद्वदित्यर्थः। सुखशब्दस्य [1]सुखहेतुपरत्वपक्षे सुखशब्दात् तत्करोतिण्यन्तात्पचाद्यचि णिलोपो द्रष्टव्यः ॥ २४ ॥

अपि दृष्टमपि श्रुतं प्रभावं
भवदीयं भविनस्तमोभिभूताः।
न विदन्ति यथावदात्मवन्त-
स्त्वनुपश्यन्ति करस्थिताम्बुकल्पम् ॥ २५ ॥

अपीति—तमसा तमोगुणेन अभिभूताः भविनः संसारिणः दृष्टमपि सान्दीपिनिपुत्राहरणादावध्याक्षितमपि वेदान्तादिषु श्रुतमपि भवदीयं प्रभावं यथावत् [2]यथार्हं सम्यक् न विदन्ति न जानन्ति। आत्मवन्तः प्रशस्तात्मानः सत्त्वगुणानुगृहीतचित्तास्तु करस्थिताम्बुकल्पमनुपश्यन्ति [3]तद्वदतिस्फुटं पश्यन्तीत्यर्थः ॥ २५ ॥

एवं स्तुत्वा प्रस्तुतप्रार्थनामुपसंहरति—

सहधर्मचरीं सदाऽनुवृत्तां
स्वयमुद्दीपयता त्वयाऽनुकम्पाम्।
शरणागतरक्षणव्रतस्य
प्रतिलब्धोऽयमिह [4]प्रयोगकालः ॥ २६ ॥

सहेति—सह धर्मं चरतीति सहधर्मचरी तां पत्नीरूपेण स्थितां "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया" (लक्ष्मीतन्त्रं. २८-१४.)

---

[1] हेतुवाचकत्व–ख. [2] यथावत्–ख. [3] तद्वत् स्फुटं–ख. [4] प्रबोधकालः–प्र. मु.

इत्यादौ भगवत्करुणारूपत्वं लक्ष्म्याः प्रसिद्धम्, सदानुवृत्तां सर्वदा-त्वदनुगतां अनुकम्पां स्वयमुद्दीपयता स्वयमेव विजृम्भयता, लोके कृपालवः कृपया प्रवर्तन्ते, अयं तु कृपामपि स्वयं प्रेरयतीति अनन्यसामान्यगुणोत्कर्ष-प्रकटनं कृतम्, एवंभूतेन त्वया शरणागतरक्षणव्रतस्य शरणागतानां रक्षणे गृहीतस्य नियमस्य प्रयोगकालः अनुष्ठानकालः प्राप्तः। सहधर्म-चरीमित्यत्र "भिक्षासेनादायेषु च" (पा. सू. ३-२-१७) इति चकारात् चरेष्टप्रत्यये टित्वात् ङीप्। यद्वा सहधर्मस्य चरीमिति षष्ठीसमासः। [1]पचादिगणे चरडिति पाठात् चरतेः पचाद्यच्। टित्वात् ङीप्॥ २६॥

ननु मुनिवृत्त्या सर्वसमस्य तव कुतः प्रद्वेष इत्याशङ्कां परि-हरति—

[2]अहितं न विचिन्तितं मयैतत्
चिरदुष्कर्मकृतोऽपि चेदिभर्तुः।
सह नाकसदामसौ विमानैः
सुकृतित्वं लभतां त्वदस्त्रपूतः॥ २७॥

**अहितमिति**—मया चिरदुष्कर्मकृतोऽपि बहुकालमारभ्य दुष्कर्माणि कृतवतोऽपि चेदिभर्तुः शिशुपालस्य एतत् निपातनं अहितं न विचिन्तितं हितमित्येव चिन्तितमित्यर्थः। तदेवोपपादयति—सहेति। असौ शिशुपालः त्वदस्त्रपूतः त्वदायुधेन चक्रेण पापेभ्य उत्तारितस्सन् नाकसदां देवानां विमानैस्सह सुकृतित्वं लभताम्। विमानानां दिवि निर्भरसञ्चार एव सुकृतमित्यवसीयते॥ २७॥

---

[1] पचादिगण इति.—'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः-(पा. सू. ३-१-१३४) इत्यत्रत्यपचादिगणे इत्यर्थः. [2] अहितं हि न चिन्तितं— ग्र. मु.

नन्वेवं पापीयसः चक्रेण [1]संशोध्य किं पुण्यसम्पादनेनेत्याशङ्क्य तस्य योग्यतामाह—

**स्वपतः किल जाग्रतश्च तस्य**
**त्वयि वैरेण विदीप्तचित्तवृत्तेः ।**
**त्वदनुस्मरणप्रभावयुक्ता**
**नियतिस्त्वन्मयतामिवातनोति ॥ २८ ॥**

**स्वपत इति**—त्वयि वैरेण विदीप्तचित्तवृत्तेः प्रज्वलितमनोवृत्तेः तस्य शिशुपालस्य स्वपतः जाग्रतश्च सतः त्वदनुस्मरणप्रभावयुक्ता त्वदनुस्मरणमहिम्ना सहिता नियतिः, [2]तदीयं भाग्यं त्वन्मयतां त्वद्रूपतां आतनोतीव किल, निरन्तरं स्मृतिसन्तानेन तन्मय इव जातो मुक्तिमेवार्हतीति चक्रेण [3]संशोधने न तस्यायोग्यतेति भावः । यद्यपि भगवत्स्मृतिसन्तानः सर्व[4]पापानां निवर्तकः, तथापि द्वेषप्रभावितः स किञ्चित् पापानुबन्धीति तदर्थं चक्रधारापेक्षेति तात्पर्यम् ॥ २८ ॥

**विनिवेदितविश्वकार्य इत्थं**
**कृतिना तेन कृतार्हणो यथार्हम् ।**
**मुनिरात्ममनीषिकावदातः**
**खलचेतोमलिनं खमुत्पपात ॥ २९ ॥**

**विनिवेदितेति**—इत्थं विनिवेदितविश्वकार्यः कृतिना कुशलेन तेन कृष्णेन यथार्हं कृतार्हणः कृतपूजः आत्ममनीषिकावदातः आत्मनः स्वस्य मनीषा बुद्धिरेव मनीषिका, स्वार्थे कप्रत्ययः, "केऽणः" (पा. सू. ७-४-१३) इति ह्रस्वः, "प्रत्ययस्थात्" (पा. सू. ७-३-४४)

---

[1] संशोध्यकत्वं पुण्यसंपादनं—ख. संशोध्य किं पुण्यसम्पदनेन—ग. [2] तदीयं महाभाग्यम्—ग. [3] संशोधनेन तस्य योग्यतेति—ख. घ. [4] पापनिवर्तकः—ख. घ.

इत्यादिना अकारस्य इकारः, तथा अवदातः शुद्धः मुनिः नारदः खलानां चेत इव मलिनं खं आकाशं प्रति उत्पपात ॥ २९ ॥

**वसुदेवसुतश्च पाण्डवेन**
**क्रतुमारब्धवता कृतोपहूतिः ।**
**समरप्रियया सह ध्वजिन्या**
**सवनं तस्य जगाम सत्प्रतीक्ष्यः ॥ ३० ॥**

**वसुदेवेति**—सत्प्रतीक्ष्यः सतां पूज्यः वसुदेवसुतः कृष्णश्च क्रतुमारब्धवता राजसूयमुपक्रान्तवता पाण्डवेन युधिष्ठिरेण कृतोपहूतिः कृताह्वानस्सन् समरप्रियया ध्वजिन्या सेनया सह तस्य सवनं यज्ञं जगाम ॥ ३० ॥

**यदुभिस्सह यादवेश्वरं तं**
**परिषत्प्राप्तमुपेत्य[1] पञ्च पार्थाः ।**
**विभवोचितमीश्वरानुरूपं**
**सुहृदर्हं च समर्चयांबभूवुः ॥ ३१ ॥**

**यदुभिरिति**—यदुभिः बलदेवादिभिस्सह परिषत्प्राप्तं आस्थानमुपगतं यादवानामीश्वरं कृष्णं पञ्च पार्थाः पृथासुता धर्मपुत्रादयः उपेत्य उद्गम्य विभवोचितं स्वकीयस्य तदीयस्य च विभवस्योचितं महार्घ्यरत्नोपहारादियुक्तं ईश्वरस्यानुरूपं भक्तियुक्तं सुहृदर्हं मित्रोचितं प्रणयनर्मयुक्तं च यथा तथा समर्चयांबभूवुः अर्चयन्ति स्म । यदुवंश्येषु यदुशब्दः कूटस्थवाच्येव लाक्षणिकः । यादवशब्दस्त्वपत्यप्रत्ययान्तः । पार्थशब्दो [2]माद्रीसुतयोरपि [3]यष्टिन्यायेन लक्षणया ग्राहकः ॥ ३१ ॥

---

[1] परिषत्प्राप्यमवेत्य—अ. मु. [2] पृथोपदिष्टमन्त्रोद्भूतत्वाद्वा माद्रीसुतयोरपि पार्थत्वं बोध्यम् । [3] छत्रिन्यायेन—ख.

क्रतुमप्यनघं स धर्मसूनु-
हविषां भोक्तरि दत्तसन्निधाने ।
विधिवत्स्वधिया समर्प्य चक्रे
बहुधानुश्रुततत्प्रभावभूमा ॥ ३२ ॥

क्रतुमिति—बहुधा बहुकृत्वः अनुश्रुततत्प्रभावभूमा आकर्णितकृष्णमहिमबाहुल्यः सः धर्मसूनुः अनघं सकलपापनिवर्तकं क्रतुं राजसूयमपि दत्तसन्निधाने हविषां भोक्तरि कृष्णे स्वधिया समर्प्य आरम्भावस्थायामेव तदाराधनरूपमनुसन्धाय विधिवत् विध्यर्हं यथा तथा विध्युक्तप्रकारेण चक्रे। विधिवदिति 'तदर्हम्' (पा. सू. ५-१-११७) इत्यर्हार्थे वतिप्रत्ययः ॥ ३२ ॥

हरिदश्वसमुद्भवं प्रदाने
धनगुप्तौ च सुयोधनं न्ययुङ्क्त ।
स्वयमेव समाहितेन वव्रे
हरिणा विप्रपदावनेजनांशः ॥ ३३ ॥

हरिदश्वेति—प्रदाने वितरणे हरिदश्वसमुद्भवं सूर्यसुतं कर्णं धनगुप्तौ सामन्ताद्युपह्रियमाणधनसंरक्षणे सुयोधनं च न्ययुङ्क्त । धर्मसूनुः प्रकृतः कर्ता । विप्रपदावनेजनांशः सदस्यागतानां ब्राह्मणानां चरणक्षालनरूपः कृत्यांशः समाहितेन ब्रह्मण्यदेवत्वात् तत्र समाहितचित्तेन हरिणा कृष्णेन स्वयमेव वव्रे स्वेच्छयाऽङ्गीकृतः ॥ ३३ ॥

समये [1] परिषत्सभाजनार्हे
दिविषत्पूज्यपदोऽपि दैत्यहन्ता ।
किमसाविति यादवेषु कश्चि-
न्नृप इत्यैक्षि जनैरलक्ष्यपारः ॥ ३४ ॥

समय इति—परिषत्सभाजनार्हे सभापूजनोचिते समये

[1] परिषद्गतः स्वभासा परितो भास्वरयन् स दैत्यहन्ता—प्र. मु.

अलक्ष्यपारः अलक्षणीयमहिमावधिः दैत्यहन्ता कृष्णः दिविषत्पूज्यपदोऽपि देवपूज्यचरणोऽपि, किमसाविति किं शब्दः क्षेपे, असावितरेभ्य उत्कृष्टो न भवतीति यादवेषु कश्चिन्नृप इति च जनैः प्रेक्षि ईक्षितः, न तु सर्वोत्तरः प्रथमपूजार्ह इत्यवगत इति भावः। "प्रश्ने क्षेपे वितर्के किं" इत्यव्ययप्रकरणे यादवः। अत एव न विशेष्यलिङ्गता ॥ ३४ ॥

**अविशेषितशेष[1]वृत्तिवाचं**
**निजपारम्यनिगूहनाधिगम्यम्।**
**अपृथग्विभवै[2]स्तमासनाद्यै-**
**रुपमृद्नन्त इवासत क्षितीन्द्राः ॥ ३५ ॥**

अविशेषितेति—अविशेषिताः निर्विशेषीकृताः शेषवृत्तयोऽप्रधानवृत्तयः पुमांसो यया, तथाभूता वाग्यस्य स तथोक्तः तं, इतरनिर्विशेषोऽयमिति बुद्धिजननीं सर्वत्र सविनयां वाचं वदन्तमित्यर्थः निजपारम्यनिगूहनाधिगम्यं आत्मीयस्य परब्रह्मभावस्य निगूहनेन सर्वेषां निर्भयमुपसर्पणीयं तं कृष्णं अपृथग्विभवैः अविलक्षणसमृद्धिभिः भगवदासनादितुल्यैरासनाद्यैः उपमृद्नन्त [3]इव सन्निहिताः क्षितीन्द्राः आसत न्यविशन्त। राजानोऽपि तन्महिमानमविज्ञाय तत्तुल्यासनादिभाजः स्वपरिच्छदैः आसनचामरव्यजनादिभिः तस्य सम्मर्दं कुर्वन्त इव अतिसन्निकृष्टाश्च सन्तः स्थिता इत्यर्थः ॥ ३५ ॥

**अथ युक्तविमर्शिभिश्चतुर्भि-**
**र्गुरुभिः पश्चिमपाण्डवो नियुक्तः।**
**प्रविवेश सभामशेषकर्तु-**
**र्यदुवीरस्य विधातुमग्रपूजाम् ॥ ३६ ॥**

अथेति—अथ अनन्तरं युक्तविमर्शिभिः उचितानुचिन्तनशीलैः चतुर्भिः गुरुभिः अग्रजैः नियुक्तः पश्चिमपाण्डवः सर्वावरजः पाण्डुसुतः

[1] वृत्तिभाजं—ग्र. मु. [2] स्तमहिमानं हृदि बध्नन्त—ग्र. मु. [3] इव स्थिताः—ग. ङ.

सहदेवः अशेषकर्तुः विश्वनिर्मातुः यदुवीरस्य यदुश्रेष्ठस्य कृष्णस्य अग्रपूजां प्रथमपूजां कर्तुं सभां प्रविवेश ।

यो भावयति यस्सूते [1]येन विद्योपदिश्यते ।
ज्येष्ठो भ्राता च भर्ता च पञ्चैते गुरवस्स्मृताः ॥

इत्यग्रजोऽपि गुरुस्स्मर्यते ॥ ३६ ॥

**अवदच्च [2]तमेतमग्रगण्यं**
**विबुधानां पितरं पतिं गुरुं च ।**
**हरिमर्चितुमर्च्यमुद्यतास्स्म-**
**स्तदशेषैरनुमन्यतां सुधीभिः ॥ ३७ ॥**

अवददिति—अवदच्च सहदेवः सभ्यान् प्रति किञ्चिदवोचत् । किमिति, तं प्रसिद्धं एतं सन्निहितं विबुधानां देवानां अग्रगण्यं प्रथमपरिगणनीयं पितरं जनकं, पतिं नाथं, गुरुं विद्योपदेष्टारं, चकारादेतत्पर्यन्तं विबुधानामित्यनुषङ्गो लभ्यते । अर्च्यं पूज्यं हरिं कृष्णं अर्चितुं उद्यतास्स्मः उद्युक्ता भवामः । तद्धरेरर्चनमशेषैः सुधीभिः विद्वद्भिः अनुमन्यतां अनुज्ञायताम् ॥ ३७ ॥

**जगदेकपतेरमुष्य पूजां**
**स्थिरधर्मद्रुममूल[3]सेकरूपाम् ।**
**निखिलानुमतां नृपो विधत्ते**
**निरपायप्रियपथ्यभावभव्याम् ॥ ३८ ॥**

जगदिति—स्थिरधर्मद्रुममूलसेकरूपां स्थिरस्य स्थायिफलकस्य धर्मस्यैव द्रुमस्य मूलसेकात्मिकां मुक्त्युपयोगिधर्माभिवृद्धिजननीमिति यावत्, निरपायप्रियपथ्यभावभव्यां ।प्रियं तत्कालहितं पथ्यं परिणामहितं द्वन्द्वान्तस्थो भावशब्दः [4]प्रत्येकं सम्बध्यते, तथा च निरपायेन

[1] येनासावुपदिश्यते—च. [2] तमेवमग्र—ग्र. मु. [3] सेकभूताम्—ग्र. दे. मु. [4] प्रत्येकमपि संबध्यते—ग. च.

अश्रेयोऽनुषङ्गरहितेन प्रियभावेन पथ्यभावेन च शुभामित्यर्थः, जगदेकपतेः जगतां मुख्यस्य पत्युः अमुष्य कृष्णस्य पूजां निखिलानुमतां सर्वैस्सभ्यैरङ्गीकृतां सतीं नृपः धर्मसूनुः विधत्ते विधास्यते । [1]वर्तमानसामीप्ये लट् ॥ ३८ ॥

इति दर्शयतः पदं समाजे
बलिनां मानभृतां महीपतीनाम् ।
महती बहुवारमुत्तमाङ्गे
सहदेवस्य पपात पुष्पवृष्टिः ॥ ३९ ॥

इतीति—इति उक्तप्रकारेण बलिनां बलवतां मानभृतां चित्तोन्नतिमतां महीपतीनां समाजे पदं दर्शयतः कृष्णं अग्रपूजाया विषयं निदर्शयतः सहदेवस्य उत्तमाङ्गे शिरसि बहुवारं बहवो वाराः पर्यायाः यस्मिन् कर्मणि तद्यथा तथा महती पुष्पवृष्टिः तत्त्वनिर्धारणप्रहृष्ट[2]देवमुक्ता पपात ॥ ३९ ॥

हरिमर्चयितुं य ईहते तं
सुरपुष्पैस्स्वयमर्चयन्ति देवाः ।
इति नूनमगापयत् द्विरेफैः
प्रसृतः पाण्डुसुते प्रसूनवर्षः ॥ ४० ॥

हरिमिति--पाण्डुसुते सहदेवे प्रसृतः प्रसूनवर्षः हरिं योऽर्चयितुं ईहते इच्छति तं देवाः सुराणां पुष्पैः कल्पतरुप्रसवैः स्वयमर्चयन्तीति द्विरेफैः नूनमगापयत् गापयति स्म । पुष्पानुगतभ्रमरझङ्कारः कृष्णपूजनेच्छामात्रस्यैव इत्थं सुरार्च्यत्वं फलमिति गानत्वेनोत्प्रेक्ष्यते । अत्र श्लोके अर्चिधातुश्चौरादिकः, 'हरिमर्चितुम्' (३७) इति श्लोके तु भौवादिकः, गानमत्र गुणान् [3]गायतीतिवदर्थ-

---

[1] 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. सू. ३ ३-१३१) इति सूत्रेणेत्यर्थः.
[2] देवदत्ता—ख. [3] गायतीतिवत्सकर्मकम्—ख. ग. घ.

कर्मकं, न तु साम गायतीतिवच्छब्दकर्मकमिति न [1]द्विकर्मकता। वर्षशब्दोऽत्र घञन्तः, न तु 'अज्विधौ भयादीनामुपसङ्ख्यानं' (वा. २१९७) 'नपुंसके क्तादिनिवृत्त्यर्थम्' (वा. २१९८) इत्यजन्त इति पुल्लिङ्गता। अत एवास्य प्रत्ययभेदाभिप्रायेण द्विलिङ्गतामाह [2]यादवप्रकाशः "वर्षोऽस्त्री वर्षणं वृष्टिः" इति। तथा 'वर्षोऽस्त्री भारतादौ च जम्बूद्वीपाब्दवृष्टिषु' इति मेदिनी च ॥ ४० ॥

अवलोक्य तदद्भुतं महीयः
प्रतिपन्नानुमते नरेन्द्रलोके।
निजगाद हसन्नमर्षवेगात्
क्षितिपालान् शिशुपाल [3]उन्मदिष्णुः ॥ ४१ ॥

अवलोक्येति—महीयः महत्तरं तदद्भुतं पुष्पवृष्टिरूपमाश्चर्यं अवलोक्य नरेन्द्रलोके नृपजने प्रतिपन्नानुमते प्राप्तानुज्ञे सति अमर्षवेगात् कोपवेगात् हसन् उन्मदिष्णुः उन्मादशीलः शिशुपालः क्षितिपालान् सभागतान् प्रति निजगाद ॥ ४१ ॥

विदितं भवतामिदं यदेतत्
स्वयमाहूय महीयसः [4]क्षितीन्द्रान्।
अवमन्यत एवमध्वरस्थः
कुटिलो हन्त कुमार एष कुन्त्याः ॥ ४२ ॥

विदितमिति—इदं भवतां विदितं मया वक्ष्यमाणं भवद्भिरपि ज्ञायते। किं तत्? कुटिलः शठः क्रत्वारम्भाविघ्नधिया प्राग्विनीत इव स्थितः एषः कुन्त्याः कुमारः युधिष्ठिरः महीयसः महत्तरान्

---

[1] शब्दकर्मकत्वे च 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ' इत्यनेन ण्यन्ते द्विकर्मकतापत्तिः स्यादिति भावः. [2] 'स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्' इति नानार्थवर्गेऽमरश्च. [3] उत्पतिष्णुः–ग्र. मु. [4] क्षितीशान्–ग्र. दे. मु.

क्षितीन्द्रान् स्वयमाहूय अध्वरस्थस्सन् अध्वरस्थहननिषेधादिदानीं कोऽपि मह्यं न द्रुह्यतीति हृदयेन एवं अन्यत्राग्रपूजाकरणेन अवमन्यत इति यदेतत्। कौटिल्यं प्रागस्माभिर्न ज्ञातमिति विषादे हन्तशब्दः कुन्त्या इति मातृनामग्रहणेन न पाण्डोरौरस इति मर्मोद्धाटयति। विदितं भवतामिति [1]बुद्ध्यर्थत्वात् वर्तमाने क्तः "क्तस्य च वर्तमाने" (पा. सू. २-३-६७) इति तद्योगे षष्ठी ॥ ४२ ॥

अयमश्वि[2]सुतोऽपि तावदास्तां
यदि माद्रीतनयस्स पाण्डुसूनुः।
रभसादवमत्य राजलोकं
यदि जीवेदलमन्ववायवादैः ॥ ४३ ॥

**अयमिति**—अयं सभापूजनार्थमागतः सहदेवः अश्विसुतः, न तु पाण्डुसुत इति भावः। अनेन जारजत्वमुद्धाटितम्। [3]न जारजो न भवतीति आस्तां तावत् अयं प्रसङ्गस्तिष्ठतु तावत्। यदि माद्रीतनयः [4]पाण्डुसूनुः पाण्डोरेव सुतः, तत्पत्न्याः पुत्रः तस्यैव पुत्र इति भावः। अयमपि जारजत्वस्थिरीकरणभङ्गीप्रभेदः। राजलोकं रभसात् हठादवमत्य यदि जीवेत्, [5]अलं एतावदेव, पर्याप्तं जीवितुमेव न शक्नोतीत्यर्थः। अन्ववायवादैरलं अन्ववायप्रसङ्गास्तिष्ठन्तु। अवमानस्य प्रतिक्रियैवास्माभिः कर्तव्या। किमस्माकं तत्कुलदूषणोद्धाटनैरिति भावः[6]। अलमित्यस्य काकाक्षिन्यायेनोभयत्र सम्बन्धः ॥ ४३ ॥

---

1 'मतिबुद्धिपूजार्थेभ्यश्च' (पा. सू. ३-२-१८८) इति सूत्रेणेति भावः. 2 'सुतो हि' इति पाठश्चेत्स्वरसतरः. 3 'स जारजः'—च. घ. 4 'स पाण्डुसूनुः' इति पाठस्स्यात्—ङ. 5 अलं तावदेव 6 अत्र राजलोकमवमत्य पाण्डुसूनुर्यदि जीवेत्, तर्हि तदितरक्षत्रियाणां मानिवीरकुलप्रसूतत्वादिवादैः प्रयोजनं किमपि नास्तीत्यादिभावः स्यात्। अत्र च अलंशब्दस्य उभयत्र संबन्धं विनाप्युपपत्तिः संभवति,

कृपणेन किमत्र साधुना न-
स्सहदेवेन नियोगसाधकेन ।
चतुरः पुनरस्य पूर्वजातान्
मनसा यात शठान् मनुष्यदेवाः ! ॥ ४४ ॥

**कृपणेनेति**—अत्र महदतिक्रमविषये कृपणेन क्षुद्रेण साधुना अकुटिलेन नियोगसाधकेन नियोगस्य निर्वर्तकेन परप्रेष्येण सहदेवेन किम्? अस्मिन् विषये तेन न किमपि कृतमित्यर्थः । चतुरः चतुस्सङ्ख्यान् अस्य सहदेवस्य पूर्वजातान् अग्रजान् शठान् कुटिलान् मनसा यात चिन्तयतेत्यर्थः । मनुष्यदेवा इति राज्ञां सम्बोधनम् ॥ ४४ ॥

द्विरदायुतसत्वशालिनो मे यदि
धर्मध्वज एष धर्मसूनुः ।
मिषतः परिभूय धर्मपालान्
यजते पश्यत पश्चिमेष्टिमस्य ॥ ४५ ॥

**द्विरदेति**—धर्मध्वजः वृत्तये लोकवञ्चनार्थमेव धर्मानुष्ठानपरः एष धर्मसूनुः द्विरदायुतसत्वशालिनः द्विरदानामयुतस्य यत्सत्वं तेन श्लाघनशीलस्य मे मिषतः, अनादरे षष्ठी, पश्यन्तं मामनादृत्य यदि धर्मपालान् धर्मं पालयतो भूपतीन् परिभूय अन्यत्राग्रपूजाकरणेन अवमत्य यजते तदा अस्य पश्चिमेष्टिं अन्त्येष्टिं यजमानमरणादूर्ध्वं कर्तव्यां पश्यत । अन्यत्राग्रपूजने कृते अहमेवैनं हनिष्यामीत्यर्थः ॥ ४५ ॥

अथवा वसुदेवबन्धुदृष्ट्या
वयमासीमहि मन्दहासगर्भम् ।
स्वयमस्य पिता कथं स धर्म-
स्तामिमं धर्मविपर्ययं [1]सहेत ॥ ४६ ॥

**अथवेति**—अथवा एतस्य मरणमकृत्वैव वसुदेवबन्धुदृष्ट्या

[1] क्षमेत—घ.

वसुदेवस्यास्मन्मातुलस्य बन्धुरिति बुद्ध्या मन्दहासगर्भं इदं किञ्चित् कापेयमिति सोपहासमन्दस्मितगर्भं यथा तथा वयमासीमहि उपविशेम, अस्य युधिष्ठिरस्य पिता सः प्रसिद्धो धर्मः स्वयं तमिमं धर्मविपर्ययं अधर्मं कथं सहेत? [1] अस्माकं सहिष्णुता तिष्ठतु, धर्मदेवताऽपि [2] तावदिममन्याय्यं न सहेत इत्यर्थः ॥ ४६ ॥

**अयमस्मदनुज्ञया विजित्य**
**क्षितिमासादित[3]राजसूयधर्मः ।**
**प्रसवोपगमे [4] पतिप्रतीपा**
**वनितेवाद्य बिभर्ति वैपरीत्यम् ॥ ४७ ॥**

**अयमिति**—[5] अस्मदनुज्ञया क्रत्वर्थमयं यतत इति मन्यमानानामस्माकमनुमत्या क्षितिं विजित्य आसादितराजसूयधर्मः प्राप्तराज[6]सूयक्रियापुण्यः अयं धर्मसूनुः प्रसवोपगमे अपत्यलाभे सति पतिप्रतीपा वनितेव वैपरीत्यं प्रातिकूल्यं बिभर्ति ॥ ४७ ॥

**परिपश्यति हन्त राजलोके**
**पशुपालस्य विधीयते सपर्या ।**
**अथ तत्र समर्थतैव तन्त्रं**
**तदसौ वीरवरेण्य [7] एकलव्यः ॥ ४८ ॥**

**परिपश्यतीति**—राजलोके परिपश्यति सति पशुपालस्य सपर्या विधीयते क्रियते । हन्तेत्यनौचित्येन विषादः । अथ तत्र सपर्यायां समर्थता शक्तिमत्त्वैव तन्त्रं, अथेति पक्षान्तरे, समर्थतैव तन्त्रं यदीत्यर्थः, तत् तदा वीरवरेण्यः वीरश्रेष्ठः एकलव्यः वर्तेत इति शेषः । तथा च अस्यैव प्रथमं सपर्या क्रियतामिति भावः । एकलव्य इति अतिशूरः कश्चिन्निषादो भारतप्रसिद्धः ॥ ४८ ॥

---

[1] अस्माकं असहिष्णुता—घ. [2] तावदिदमन्यायम्—घ. [3] राजसूयधर्मा—**ग्र. दे. मु.** [4] पतिव्रता सा वनितेवाद्य—**ग्र. मु.** [5] अस्मदनुग्रहात्, क्रत्वर्थमयं यततामिति—**ख.** [6] सूयक्रतुधर्मपुण्यः—**ख.** सूयक्रतुपुण्यः—**ङ.** [7] एकलक्ष्यः—**ग्र. मु.**

कुरुवृद्धमुपेक्ष्य जाह्नवेयं
जयसम्प्रीणितजामदग्न्यरामम् ।
इतरानपि तादृशानिहैता-
न्न च गोपो न च यादवस्समर्च्यः ॥ ४९ ॥

कुरुवृद्धमिति—कुरूणां कुरुवंश्यानां वृद्धं जयसम्प्रीणितजामदग्न्यरामं जयेन सम्प्रीणितः जमदग्नेरपत्यं रामः येन तं, युद्धे परशुरामं जित्वा स्वशौर्योत्कर्षेण अस्त्रगुरुभूतस्य तस्य प्रीतिं कृतवन्तं जाह्नवेयं जाह्नव्या गङ्गाया अपत्यं भीष्मं इतरान् तद्व्यतिरिक्तानपि तादृशान् तत्सदृशान् एतान् राज्ञ उपेक्ष्य इह सदसि गोपश्च नार्च्यः, यादवश्च नार्च्यः। कृष्णो यदि गोपः यदि वा यादवः उभयथाऽप्येतेषु सत्सु नार्च्यः, गोपत्वे जात्यैव निकर्षात्, यादवत्वेऽपि ययातिशापाद्राजपदवैधुर्येण निकर्षादिति भावः। यदि गोप इत्याद्युक्तिभङ्ग्या जातावपि [1]सन्देहदूषणान्तरं व्यञ्जयति। कुरुवृद्धमित्यनेन भीष्मस्य वयसाऽऽधिक्यं, तत्रापि स्वकुलकूटस्थत्वम्, जयसम्प्रीणितेत्यादिना शौर्योत्कर्षम्, जाह्नवेयमित्यनेन देवताप्रभवत्वं च पूज्यतानिमित्तं ख्यापयति। इदं तत्ख्यापनं भीष्मस्यापि कोपोद्दीपनं भवत्वित्याशयेन। इदमेवाग्रे राजान्तरस्तुतीनामपि फलम्। 'कुरुनादिभ्यो ण्यः' (पा. सू. ४-१-१७२) इति कुरुशब्दादपत्यार्थे तद्राजसंज्ञके ण्यप्रत्यये 'तद्राजस्य बहुषु तेनैवास्त्रियम्' (पा. सू. २-४-६२) इति बहुषु लुकि च सति कुरुशब्दः कुरुवंश्येषु साधुः। जमदग्नेरनन्तरापत्येऽपि गोत्ररूपाध्यारोपेण 'गर्गादिभ्यो यञ्' (पा.सू.४-१-१०५) इति गोत्रप्रत्ययेन जामदग्न्य इति साधुः। अनन्तरापत्यविवक्षायां तु

---

[1] सत्त्वे दूषणा—ख. ग. घ.

[1]ऋष्यणि जामदग्न इत्येव स्यात् । यद्यपि वृत्तिकृता रामो जामदग्न्य इत्यत्र नित्यसमास इत्युक्तम् । तथापि तद्वचनं तेन क्रमेण समासनिषेधपरमिति क्रमान्तरेण समासः कृतः ॥ ४९ ॥

अतिमर्त्यबला विराटशल्य-
द्रुपदाद्या बहवो हि सन्ति वृद्धाः ।
अतिलङ्घन[2]मभ्युपैतु को वा
गुणकर्मश्रुतशालिनाममीषाम् ॥ ५० ॥

**अतिमर्त्येति**—अतिमर्त्यबलाः मर्त्यातिक्रान्तबलाः विराटः शल्यो द्रुपद इत्येवमाद्या बहवो वृद्धाः सन्ति हि । गुणकर्मश्रुतशालिनां गुणाः धार्मिकत्वादयः, कर्माणि दिग्विजयादीनि, श्रुतं शास्त्रं, एतैः श्लाघनशीलानां अमीषामतिलङ्घनं को वा अभ्युपैतु । केनापि नाभ्युपगन्तुं युक्तमित्यर्थः ॥ ५० ॥

[3]नन्वाबाल्यं कृष्णे गोवर्धनधारणाद्यद्भुतचरितं परभावलिङ्गं दृश्यते, अतस्स एवार्च्य इत्याशङ्क्य सर्वं मायिकत्वेनान्यथा करोति—

क्वचिदर्चनमिन्द्रजालतश्चे-
त्कुहकास्सन्ति [4]परश्शताः पृथिव्याम् ।
अथ कश्चन सत्य [5]एष भूमा
क्व गतोऽसौ यवनादिसैन्यगन्धे ॥ ५१ ॥

**क्वचिदिति**—इन्द्रजालतः कृष्णेन कृतं गोवर्धनधारणादि इन्द्रजालं मायामात्रं न तात्विकम् । तावता चेत्पुरुषे अर्चनं तदा पृथिव्यां

---

1 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (पा. सू. ४-१-११४) इति सूत्रेणेति भावः.
2 मभ्युपैति को—म्र. मु. 3 नरस्यासाध्यम्—घ. नन्वसाध्यम्—ख. 4 परश्शतं—म्र. मु. 5 एव भूमा—म्र. मु.

परश्शताः [1]शतात्परे बहुतमाः कुहकमायिकास्सन्ति । तेऽप्यचर्यन्तामिति भावः । एषः गोवर्धनधारणादिः कश्चन सत्यो भूमा तात्विको महिमा, अथशब्दः पक्षान्तरे, तात्विको यदीत्यर्थः । तदा असौ महिमा यवनादिसैन्यगन्धे कालयवनजरासन्धसैन्यागमनप्रसङ्गे सति क गतः? तदानीमपि महिमा स्थितश्चेत्पलायनं न कुर्यादिति भावः । परश्शता इत्यत्र [2]पञ्चमीति योगविभागात्समासः । [3]राजदन्तादित्वाच्छतशब्दस्य परानिपातः । [4]पारस्करादित्वात् सुडागमः ॥ ५१ ॥

**अयमग्रज एष रौहिणेयो**
**बलशाली वपुषा च [5]शुद्धवर्णः ।**
**अनतिक्रमणं तदस्य युक्तं**
**यदि शेषोऽयम[6]विप्लुतः क्रमो वः ॥ ५२ ॥**

**अयमिति**—बलेन शालत इति बलशाली वपुषा च शुद्धवर्णः चकाराच्चरितेनापि शुद्धवर्णः निर्मलकीर्तिः "वर्णो नीलादिविप्राद्योः कीर्तौ गीतिक्रमे स्तुतौ" इति यादवः । अयमेषः पुरस्थितो रौहिणेयः रोहिण्या अपत्यं बलदेवः, अग्रजः कृष्णस्य ज्येष्ठः, . तत्तस्मात् अस्यानतिक्रमणं युक्तम् । अयं यदि शेषः अनुजस्योपसर्जनभूतः तदा वः युष्माकं क्रमः युष्मदभिमतः क्रमः [6]अविप्लुतः, विप्लुतः, शास्त्रविरुद्ध इत्यर्थः । स्वरूपप्रकारपरामर्शितया अयमेष[7] इत्यनयोरपौनरुक्त्यम् ॥ ५२ ॥

---

[1]शतात्परे कुहका वञ्चनपरा ऐन्द्रजालिकास्सन्तीति भावः. [2]'पञ्चमी भयेन' (पा. सू. २-१-३७) इति सूत्रे पञ्चमीति योगविभागादित्यर्थः-**स्व.** [3]'राजदन्तादिषु परम्' (पा. सू. २-२-३१) इत्यनेनेति भावः. [4]'पारस्करप्रभृतीनि च संज्ञायाम्' (पा.सू. ६-१-१५७) इति सूत्रेणेति भावः. [5]शुक्लवर्णः-**प्र. मु.** [6]'अवप्लुतः' इति पाठोऽत्र युक्त इति भाति. [7]इत्यनयोर्न पौनरुक्त्यम्.

ननु शङ्खचक्रादिचिह्नैः कृष्णस्य भगवदवतारत्वं विज्ञायते, अतस्तस्य पूज्यत्वे वयःप्रभृति न प्रयोजकमित्याशङ्क्य तान्यप्यन्यथा करोति—

नटवद्धृतशङ्खचक्रचिह्नाः
कति नामात्र विडम्बयन्ति विष्णुम् ।
अनुकर्तुमयं च तद्वदीशः
[1]कथमीशत्वमनूर्मिषट्कहीने ॥ ५३ ॥

**नटवदिति**—नटवत् नटेन तुल्यं यथा तथा धृतशङ्खचक्रचिह्नाः कति नाम अद्य विष्णुं विडम्बयन्ति अनुकुर्वन्ति? नामेति प्रसिद्धौ । पौण्ड्रकादयस्तथा विदिता एवेति भावः । अयं कृष्णश्च तद्वत् पौण्ड्रकादिवत् अनुकर्तुमीशः समर्थः । न तु वस्तुतो विष्णुः । तथात्वे बाधकमाह—अनूर्मिषट्कहीने काामक्रोधलोभमोहमदमात्सर्य[2]रूपवीचिषट्करहितव्यतिरिक्ते तद्वति कथमीशत्वं, परमेश्वरे रागद्वेषाद्यसम्भवादिति भावः ॥ ५३ ॥

ननु व्यासनारदादिवृद्धवाक्यादस्य परमेश्वरत्वं [3]श्रद्धेयमित्यत्राह—

न च विश्वसिमो न वृद्धवाक्यं
बलवन्मानविलङ्घनं [4]न चेत्स्यात् ।
न वदन्त्यनिदंपरेषु सन्तः
स्तुतिवाक्येषु यथाश्रुतार्थसिद्धिम् ॥ ५४ ॥

**न चेति**—वृद्धानां वाक्यं न न विश्वसिमः, विश्वसिम एव, बलवन्मानविलङ्घनं न चेत् स्यात् प्रबलप्रमाणविरोधो यदि न स्यात्; इह

---

[1] कथमर्च्यस्स भवेन्महीशसङ्घे–ग्र. मु. [2] रूपपीडाषट्क–ङ.
[3] श्रद्धेयं तत्राह–ख. [4] न च स्यात्–घ.

रागद्वेषादिपरमेश्वरत्वबाधकप्रबलप्रमाणविरोधाद्वृद्धवाक्यमपि न विश्वसिम इति भावः। तर्हि किं वृद्धा अनृतमेव वदन्तीत्याशङ्क्य स्तुतिमात्रं तदित्याशयेनाह--न वदन्तीति। अनिदंपरेषु इदं शब्दतः प्रतीयमानं वाच्यं परं मुख्यतात्पर्यास्पदं येषां न भवति तान्यनिदंपराणि तथाभूतेषु स्तुतिवाक्येषु यथाश्रुतार्थसिद्धिं श्रुतं शब्दश्रवणं अनतिक्रम्य शब्दश्रवणमात्रेण [1]प्रतीयमानार्थसिद्धिं सन्तो न वदन्ति। श्रुतिगतेष्वपि विधिशेषेष्वर्थवादेषु 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' इत्यादिषु यथाश्रुतार्थसिद्धिं न्यायविदो न मन्यन्ते, किमुत पौरुषेयवाक्येष्विति भावः। यथाश्रुतेति [2]पदार्थानतिवृत्तावव्ययीभावः। तस्यार्थशब्देन पुनस्सुप्सुपेति समासः॥ ५४॥

इति तत्र मुदा विकत्थमानं
कठिनं कण्ठविलग्नमृत्युपाशम्।
परिदृष्टपरावरस्तमीष-
द्विनयन् विष्णुपदीसुतो बभाषे ॥ ५५॥

इतीति—इति उक्तप्रकारेण तत्र सदसि मुधा विकत्थमानं द्विरदायुतेत्यादिना व्यर्थमेव श्लाघमानं कठिनं निष्ठुरं कण्ठविलग्नमृत्युपाशं भगवन्निन्दया कण्ठविलग्न इव सन्निहितो मृत्युपाशो यस्य तथाभूतं तं शिशुपालं ईषद्विनयन् शिक्षयन् परिदृष्टपरावरः निर्धारितपरावरतत्त्वः विष्णुपदी गङ्गा तत्सुतो भीष्मः बभाषे। "गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा" इत्यमरः॥ ५५॥

---

[1] प्रतीयमानस्यार्थस्य सिद्धिं-ख. [2] 'अव्ययं विभक्ति' (श. पा. सू., २-१-६) इत्यादिसूत्रेणेति भावः.

शृणु तात हितं समाहितस्त्वं
रुशतीं [1]वाचमपास्य रोषजाताम् ।
अविमृश्य विपत्तिमापतन्तीं
न हि तिष्ठन्त्यहितेषु बुद्धिमन्तः ॥ ५६ ॥

शृणु तातेति—तातेति सोपलालनं सम्बोधनम्, अनुकम्पनीयेत्यर्थः "ताऽतेनुकम्प्ये पितरि" इति रत्नमाला, त्वं समाहितः समाहितचित्तस्सन् हितं शृणु। हितमेवाह—रोषजातां रुशतीं अकल्याणीं वाचं अपास्य त्यक्त्वा "[2]रुशती वागकल्याणी" इत्यमरः, बुद्धिमन्तः प्राज्ञाः आपतन्तीं विपत्तिमविमृश्य अहितेषु न हि तिष्ठन्ति न वर्तन्ते । अतस्त्वयाऽपि धीमता विपत्तिपर्यवसायित्वादहिता भगवन्निन्दा त्यक्तव्येत्यर्थान्तरन्यासेनोक्तम् ॥ ५६ ॥

अतिपत्य मुकुन्दमन्तिकस्थं
[3]पथिकानर्चितुमुन्मना भवेद्यः ।
अवधीरितकौस्तुभस्स नूनं
कुरुविन्देषु कुतूहलं विधत्ते ॥ ५७ ॥

अतिपत्येति—अन्तिकस्थं मुकुन्दं अतिपत्य अतिक्रम्य [4]पथिकान् पथिकवदुपेक्षणीयान्, वशिकानिति पाठे तुच्छान् "वाशिकं तुच्छ-

---

[1]वाचमपास्तदोषजाताम् । अपि मृत्युविपत्तिमापतन्तीं न हि मृष्यन्त्यहितेषु—अ. मु. [2]अत्र मुकुटेन 'उषती' इति पाठमभ्युपेत्य 'उष दाहे' इत्यस्माच्छतरि 'संज्ञापूर्वको विधिरनित्यः' 'आगमशास्त्रमनित्यम्' इति परिभाषाभ्यां गुणनुमागमयोरप्रवृत्त्या रूपसिद्धिरित्युक्तम् । अत एव महाभारतेऽपि 'ययाऽस्य वाचा पर उद्विजेत न तां वदेदुषतीं पापलोक्याम्' इत्यत्र उषतीमिति प्रयुक्तं दृश्यते । सुधायां तु रुशतीति पाठाभिप्रायेण हिंसार्थकात्तौदादिकात् रुशतेः शत्रन्तात् 'आच्छीनद्योर्नुम्' इति नुमो वैकल्पिकत्वेन रुशतीति रूपसिद्धिरित्युक्तम्. [3]वशिका—अ. दे. मु. [4]पथिकानिति लोकोक्त्यनुरोधेनेदमुक्तमिति बोध्यम्.

रिक्तके" इत्यमरः । अर्चितुमुत्कण्ठितो भवेत्, सः नूनमवधीरितकौस्तुभः अनादृतकौस्तुभस्सन्, कुरुविन्देषु कुरुविन्दाः कुल्माषाख्याः ईषत्प्रभायुक्तधवळपाषाणखण्डविशेषाः । "कुरुविन्दास्तु कुल्माषाः" इति यादवः । तेषु कुतूहलं विधत्ते, आदरं करोति । कृष्णमतिक्रम्यान्यानर्चितुमिच्छा कौस्तुभमनादृत्य कुरुविन्दान् ग्रहीतुमिच्छया तुल्येति निदर्शनालङ्कारेण निदर्शितम्[1] ॥ ५७ ॥

**स्तुतिभिः कतिचित्त्रिवर्गमृच्छ-**
**न्त्यपवर्गं च यमेकमाश्रिताभिः ।**
**निरये निपतन्ति निन्दयाऽन्ये**
**यदि तद्वेत्थ वदैष यत्क्रियार्हः ॥ ५८ ॥**

**स्तुतिभिरिति**—कतिचित् यमेकमाश्रिताभिः स्तुतिभिः त्रिवर्गं त्रयाणां धर्मार्थकामानां वर्गं अपवर्गं च ऋच्छन्ति प्राप्नुवन्ति । अन्ये निन्दया निरये नरके निपतन्ति । निन्दयेत्यत्रापि यमेकमाश्रितयेति वचनविपरिणामेनानुषज्यते । तत् [2]पुराणादिषु प्रसिद्धं मानं यदि वेत्थ जानासि तदा एषः कृष्णः यत्क्रियार्हो [3]वद यां क्रियमर्हति तां त्वमेव वदेत्यर्थः ॥ ५८ ॥

**सहजं नयनं च यत्तृतीयं**
**भुजयुग्मं च तव स्थितातिरिक्तम् ।**
**सहसा यदुपागमेन नष्टं**
**स्वयमाकारयसि स्वमृत्युमेनम् ॥ ५९ ॥**

**सहजमिति**—तव सहजं सहोत्पन्नं तत् अनुभूतं तृतीयं नयनं स्थितातिरिक्तं स्थिताद्भुजद्वयादधिकं भुजयुग्मं च यदुपागमेन यस्य कृष्णस्य उपागमेन हेतुना सहसा झडिति नष्टं, एनं स्वस्य मृत्युं

---

[1] ध्वनितम्—घ. [2] मनुष्यादिषु—घ. [3] यदीयाम्—ख.

स्वयमाकारयसि त्वमेवाह्वयसि । शिशुपाल उत्पत्तिसमये त्रिलोचनश्चतुर्भुजश्चोत्पन्नः । ततश्चाशरीरिण्या वाचा उक्तं, य एतस्य मृत्युभूतः तत्सन्निधाने तृतीयं नयनं भुजयुग्मं चास्य तिरोधास्यत इति । कृष्णसन्निधाने च तथैव तिरोहितमिति पौराणिकी कथा । अतः कृष्णो मृत्युत्वेन निश्चितः । तमुदासीनं स्वयमेव किमर्थं क्षोभयसीत्यर्थः ॥ ५९ ॥

**नहि सन्ति न निश्चितागमार्था**
**[1]न गतास्सन्निहिताश्च न प्रसुप्ताः ।**
**अपि तु त्रपया नतास्त्वदुक्ती-**
**स्त इमे नन्विह चेतसा हसन्ति ॥ ६० ॥**

**नहीति**—निश्चितागमार्थाः कृष्णः परतत्त्वमिति निश्चितवेदार्थाः नहि न सन्ति सन्त्येव । नहीत्यखण्डं पदं नञर्थे वर्तते । न गताः सन्तोऽपि ते अन्यत्र न गताः, किन्त्वत्रैव सन्निहिताश्च । ते न प्रसुप्ताः किन्तु त्वद्वचनं शृण्वन्त एवासते । तर्हि तेऽपि किमिति न शिक्षयन्तीत्यत आह—अपि त्विति । अपि तु किन्तु त इमे सदस्येव त्रपया नताः [2]अवाच्यवचनश्रवणेन लज्जया अवनतास्सन्तः त्वदुक्तीः चेतसा हसन्ति, अतिमूढवचनमिदमित्यपहसन्ति । नन्वित्यामन्त्रणे । “ प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ” इत्यमरः ॥ ६० ॥

**यदि जीवितुमीहसे चिराय**
**प्रतिपद्यस्व हितं यदस्मदुक्तम् ।**
**अथ न प्रहितो जलाञ्जलिस्ते**
**शृणुतान्ये य इह श्रुतौ निरूढाः ॥ ६१ ॥**

**यदीति**—यदि चिराय जीवितुमीहसे इच्छासि, हितं प्रतिपद्यस्व अङ्गीकुरुष्व । तत् किम्? अस्माभिर्यदुक्तं तदिति पूर्वेण सम्बन्धः ।

---

[1] न हि तेऽसन्निहिता न च प्रसुप्ताः-दे. मु. न हि ते सन्निहितार्न्नन-प्रसुप्ताः-ग्र. मु. [2] अवाच्यवादश्रवणेन—ख.

अथ तन्न प्रतिपद्यसे यदि तदा ते तुभ्यं जलाञ्जलिः प्रहितः निवापसलिलाञ्जलिर्दत्तः । इह सदसि अन्ये ये श्रुतौ ये श्रवणेन्द्रिये निरूढाः प्रसिद्धाः श्रोतुं शक्ता इति यावत् , श्रुतौ वेदे निरूढा वा, ते मद्वचनं आकर्णयत ॥ ६१ ॥

युगकोटिशतायुतानि वेधाः
स्वपदं प्राप यमेकमर्चयित्वा ।
[1]मनुजस्य तदर्चने विगायन्
मतिहीनः पशुरेष मर्षणीयः ॥ ६२ ॥

तान् प्रति तद्वचनप्रकारमाह—

युगेति—युगकोटीनां शतायुतानि शतगुणितानि दशसहस्राणि, अत्यन्तसंयोगे द्वितीया, यमेकमर्चयित्वा वेधाः स्वपदं ब्रह्मपदं प्राप—

युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः ।
पुरा त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥

इति पुराण[2]वचनम् । मनुजस्य तदर्चने तस्य कृष्णस्यार्चने विगायन् विगानं निन्दां कुर्वन् मतिहीनः एष पशुः मर्षणीयः तिर्यग्जातीय इति सोढव्यः । तदर्चन इति शेषषष्ठीसमासः । कर्मणि षष्ठ्यङ्गीकारे कर्तृकर्मोभयप्राप्तिसत्त्वेन [3]कर्तरि षष्ठ्याः कर्मषष्ठीसमासस्य चानुपपत्तेः ॥ ६२ ॥

---

[1] मनुजस्स तदर्चने—अ. दे. मु. [2] वचनमनुसन्धेयम्—ख. [3] कर्तरि षष्ठ्या इत्यादि—'कर्मण्येव षष्ठीति' उभयप्राप्तौ (पा. सू. २-३-६६) इति नियमेन मनुजशब्दात्कर्तृषष्ठ्या वारणेन तृतीयाया दुर्निवारतया मनुजस्येत्यत्र कर्तृषष्ठ्या अनुपपत्तिः, तदर्चन इत्यत्र 'उभयप्राप्तौ' (पा. सू. २-३-६६) इति कर्मषष्ठ्यङ्गीकारे 'कर्मणि च' (पा. सू. २-२-१४) इति समासनिषेधात् षष्ठीसमासस्य चानुपपत्तिरित्यर्थः.

**विधिहस्तधृताद्यदङ्घ्रिपद्मा-**
**च्च्यवमाना पवमानवेगहीना ।**
**विपुनाति जगन्ति दिव्यसिन्धुः**
**[1]क्रमते हन्त तदर्चने विवादः ॥ ६३ ॥**

**विधिहस्तेति**—विधिहस्तधृतात् त्रैविक्रमावतारे चतुर्मुखहस्तेन क्षालनार्थं धृतात् यदङ्घ्रिपद्मात् यस्याङ्घ्रिकमलात् पवमानवेगो हीनो न्यूनो यस्याः तथा भूता सती च्यवमाना पतन्ती दिव्या दिवि भवा सिन्धुः गङ्गा जगन्ति द्युपातालभूलोकान् विपुनाति पवित्रयति ।

क्षितौ तारयते मर्त्यान् नागांस्तारयतेऽप्यधः ।
दिवि [2]तारयते देवान् तेन त्रिपथगा स्मृता ॥

इति भारतवचनम् । तस्य कृष्णस्य अर्चने विवादः क्रमते [3]विसंवादः प्रवर्तनेन प्रतिहत इत्यर्थः । 'वृत्तिसर्गतायनेषु क्रमः' (पा. सू. १-३-३८) इत्यात्मनेपदम् । तत्र वृत्तिरप्रतिबन्धः । हन्तेत्यत्यन्तानौचित्येन विषादः ॥ ६३ ॥

**स च कश्चन सर्वमेधयज्वा**
**हविरात्माह्वयमात्मनैव हुत्वा ।**
**यत एव बभूव देवदेवः**
**स किमस्माभिरदैवतैरनर्च्यः ॥ ६४ ॥**

**स चेति**—कश्चन अचिन्त्यमहिमा सः प्रसिद्धः महादेवश्च,

"महादेवस्सर्वमेधे महात्मा त्यक्त्वाऽऽत्मानं देवदेवो बभूव"
(महाभारते शान्ति. २०–१२)

इति पुराणवचनात् सर्वमेधयज्वा सर्वमेधाख्य[4]यज्ञकृत् सन्, आत्माह्वयं आत्मनामकं हविः आत्मना स्वयमेव हुत्वा, आत्मनेति प्रकृत्यादि-

[1] क्रमते तं कथमेष दोषवादः–ग्र. मु. [2] दिवि धारयते–क. [3] 'विसंवादः प्रवर्तते न प्रतिहन्यत इत्यर्थः' इति शुद्धपाठेनात्र भाव्यमिति भाति
[4] यागकृत्–क.

तृतीया, यतः येनैव कृष्णेन हेतुना देवदेवः देवानामपि देवो बभूव। सः कृष्णः अदैवतैरस्माभिः अनर्च्यः किम्! क्षेपे किंशब्दः। अनर्च्य इत्यत्यन्तायुक्तमित्यर्थः॥ ६४॥

य इहाद्य भजन्ति यज्ञभागान्
कृतिनः कार्तयुगेन कर्मणा ते।
अयजन्त पुरा यमेकमाद्यं
वरिवस्यामिह तस्य वारयेत्कः॥ ६५॥

य इहेति—अद्य इदानीं इह अस्मिन् कल्पे ये इन्द्रादयः यज्ञभागान् यज्ञेषु हविर्भागान् भजन्ति, कृतिनः सुकृतिनः ते कार्तयुगेन कर्मणा,

"[1]ध्यायन् कृते यजन् यज्ञैः त्रेतायां द्वापरेऽर्चयन्" (व्यासस्मृतिः, वि. पु. ६-२-१७) इति स्मृतेः कृतयुगसम्बन्धिना ध्यानयज्ञेन आद्यं जगतामादिभवं यमेकं पूर्वकल्पे अयजन्त, पूर्वकल्पे यमिष्ट्वा इदानीमिन्द्रादिपदं भुञ्जत इत्यर्थः। अत्र "यज्ञेन यज्ञमयजन्त", (पु. सू. १६) इत्यादिमन्त्रवर्णः

"ब्रह्मादयस्सुरास्सर्वे विष्णुमाराध्य ते पुरा।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः"॥

इति पुराणवचनं च। तस्य कृष्णस्य वरिवस्यां पूजां को वारयेत् कोऽपि वारयितुं न शक्नोतीत्यर्थः॥ ६५॥

अथवा विबुधादिपूजनीये
मनुजैरर्चनमत्र मा विधायि।
इति नाम [2]विमन्यतामिदानी-
मपशुत्वाय च कल्पतामयं नः॥ ६६॥

अथवेति—अथवेति पक्षान्तरे, विबुधादिपूजनीये देवादिभिः पूज्ये अत्र अस्मिन् कृष्णे मनुजैरर्चनं मा विधायि मा कारि।

1 'यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्' इत्यस्योत्तरार्धम्.

2 विरम्यता—म. सु.

परब्रह्मणस्तस्य पूजने देवादय इव मनुष्या नाधिकुर्वन्तीति भावः। इतीति[1]— इति अनेन प्रकारेण इदानीं अयं शिशुपालः विमन्यतां विचारयतु। अत एव नः अस्माकं अपशुत्वाय च कल्पतां अपशुरपि भवत्वित्यर्थः। पूर्वं (६२श्लो.) भगवत्पूजानिषेधादयं पशुरित्युक्तम्। इदानीं तन्निषेधस्याभिप्रायान्तरकल्पनेन तस्य पशुत्वं निराक्रियत इत्ययमपि तदुपहासप्रकारभेदः। विधायीति कर्मणि लुङ्। माङ्योगाददडागमाभावः। 'क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या' (वा. १४५९) इत्यपशुत्वायेति चतुर्थी ॥ ६६ ॥

धनबन्धुवयःक्रियादिमात्रै-
रधिकेष्वप्यचमत्क्रिया विहत्यै।
जगदेकपतौ सदोपकर्त-
र्यपकृत्यैष भजेत कामवस्थाम् ॥ ६७ ॥

**धनेति**—धनबन्धुवयःक्रियादिमात्रैः आदिशब्देन विद्याग्रहणं—

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।

एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ (म. स्मृ. २-१३६)

इति स्मरणात्, धनादिभिरेवाधिकेष्वपि पुरुषेषु अचमत्क्रिया अचमत्कारः विहत्यै विनाशाय भवति।

"ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनस्स्थविर आगते'।

(म. स्मृ. २-१२०)

[2]इति स्मरणात्। जगदेकपतौ जगतां मुख्यस्वामिनि सदोपकर्तरि—

"यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः" (विष्णुधर्मे)। इत्यादिदर्शनात् सर्वावस्थास्वप्युपकर्तरि भगवति विषये अपकृत्य द्रोहं कृत्वा कामवस्थां भजेत तस्य कीदृश्यवस्था [3]भवित्रीति वयमपि न विद्म इत्यर्थः ॥ ६७ ॥

---

[1] इतीति—इत्यनेक—घ. ट. [2] इत्यादिस्मरणात्—च. [3] भवतीति—घ. ट.

क्वचिदर्चयति प्रभूतपुण्ये
त्रियुगं तद्वदलब्धभागधेयैः ।
यदि नाम धिया न शोचितव्यं
न कथं [1]दर्शनतोऽपि नन्दनीयम् ॥ ६८ ॥

क्वचिदिति—प्रभूतपुण्ये प्रचुरसुकृते क्वचित् कस्मिंश्चित्पुरुषे त्रियुगं त्रीणि युगानि ज्ञानशक्त्यादिगुणयुगलानि यस्य तं कृष्णं अर्चयति सति तद्वत् तेन पुरुषेण तुल्यं यथा तथा अलब्धभागधेयैः हरिमर्चयितुं अप्राप्तभाग्यैः पुरुषैः यदि नाम धिया न शोचितव्यं [2]तैरस्माकं तादृशं भाग्यं नासीदिति शोचितव्यमेव, नामेत्यभ्युपगम्यवादः, "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः, तथाऽपि दर्शनतोऽपि तादृशस्य हरिपूजनस्य दर्शनादपि कथं न नन्दनीयम्। [3]तदभिनन्दनमप्यकुर्वन् अतिदुर्भग इति भावः ॥ ६८ ॥

यदनुग्रहनिग्रहप्रयुक्ते
सुखदुःखे शृणुमस्स्वयम्भुवोऽपि ।
विमतिं भजतस्तदर्हणायां
[4]न च देयोऽनुनयो न सान्त्वना च ॥ ६९ ॥

यदनुग्रहेति—स्वयम्भुवः चतुर्मुखस्यापि यदनुग्रहनिग्रहप्रयुक्ते यस्यानुग्रहनिग्रहाभ्यां कृते सुखदुःखे शृणुमः पुराणेषु। तदर्हणायां ब्रह्मणोऽपि नियन्तुस्तस्य कृष्णस्य पूजायां विमतिं "क्वचिदर्चनमिन्द्रजालतश्चेत्" इत्यादिहेतुवादमवलम्ब्य विप्रतिपत्तिं भजतश्शिशुपालस्य अनुनयः इदं त्वया सोढव्यमिति प्रार्थनावादश्च न देयः, सान्त्वना केवलसामोक्तिश्च न देयेति लिङ्गविपरिणामेनानुषङ्गः ।

हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ।

इति स्मरणादिति भावः ॥ ६९ ॥

---

[1] दर्शनतोऽपि भावनीयम्—म्र. मु. [2] तैरस्माकमेतादृशं—घ. [3] 'तदभि' इति घ.—कोशे नास्ति. [4] न विधेयोऽनुनयो न सान्त्वना वा—म्र. मु.

न पनायति चेदसौ न जिह्वा
न नमस्यत्यथ नैतदुत्तमाङ्गम् ।
यदि नार्चयतो न तौ च हस्तौ
कृपया कल्पितसन्निधानमेनम् ॥ ७० ॥

न पनायतीति—कृपया कल्पितसन्निधानं कृतसन्निधिं एनं कृष्णं न पनायति चेत् न स्तौति चेत्, असौ अस्तुवन्ती जिह्वा न भवति, न नमस्यत्यथ न नमस्करोति चेत् [1]एनमनमस्कर्तृ उत्तमाङ्गं शिरो न भवति। यदि नार्चयतः नार्चयतश्चेत् तौ अनर्चयन्तौ हस्तौ च न भवतः। भगवत्स्तुत्यादिनैव जिह्वादीनां साफल्यं सम्पादनीयमिति भावः। पनायतीत्यत्र "गुपूधूपविच्छिपणिपनिभ्य आयः" (पा. सू. ३-१-२८) इत्यायप्रत्ययः। नमस्यतीत्यत्र नमश्शब्दात्तत्करोतीत्यर्थे "नमोवरिवश्चित्रङः क्यच्" (पा. सू. १-३-१९) इति क्यच् प्रत्ययः ॥ ७० ॥

निरुपाधिकसर्वबन्धुमेनं
द्विषताऽनेन न भाषणप्रसङ्गः ।
निरयज्वलनेन्धनीभविष्यन्
कृपणः केवलमेष [2] शोचितव्यः ॥ ७१ ॥

निरुपाधिकेति—निरुपाधिकं सर्वेषां बन्धुं स्वत एव सर्वभूतदयालुं एनं कृष्णं द्विषता अनेन शिशुपालेन सह न भाषणप्रसङ्गः भाषणस्य प्रसक्तिर्नास्ति। भगवद्वेषपापादसम्भाष्योऽयमिति भावः। निरयज्वलनेन्धनीभविष्यन् नरक एवाग्निस्तस्य एधीभविष्यन् कृपणः क्षुद्रः एष केवलं शोचनीयः स्वापराधेन हतो जात इति शोच्यः ॥७१॥

---

[1] 'एतत् अनमस्कर्तृ' इत्यत्र पाठः स्यात्. [2] 'आत्मद्रुहममर्यादं मूढमुज्झितसत्पथम्। सुतरामनुकम्प्येत नरकार्चिष्मदिन्धनम् ॥' इति प्रमाणमत्र बोध्यम्. [3] शोचनीयः—अ. दे. मु.

**सहनीयतया प्रतिश्रुतं य-**
**द्वसुदेवस्वसुरच्युतेन पूर्वम् ।**
**अपराधशतं तदद्य पूर्णं**
**भविता चैद्यविपत्तये [1]परं तत् ॥ ७२ ॥**

**सहनीयतयेति**—पूर्वं अच्युतेन कृष्णेन सहनीयतया सोढव्यतया वसुदेवस्य स्वसुः सोदरायाः शिशुपालस्य मातुः प्रतिश्रुतं प्रतिज्ञातं यत् अस्य शिशुपालस्य अपराधशतं तत् अद्य पूर्णम् । यत्परं इतोऽधिकमपराधान्तरं तत् चैद्यविपत्तये भविता शिशुपालस्य वधे भविष्यतीति । भवितेति लुटि रूपम् । विपत्तय इति तादर्थ्ये चतुर्थी । शिशुपालस्य तृतीयनयने भुजयुग्मे च कृष्णसन्निधानेन तिरोहिते सति तन्माता कृष्णं तस्य हन्तारं निश्चित्य तस्य चिरजीवनाकाङ्क्षया तदीयमपराधानां शतं सोढव्यमिति कृष्णं प्रार्थितवतीति पौराणिकी कथा ॥७२॥

**कुरुवृद्धवचस्तदेतदर्थ्यं**
**दमघोषप्रभवो [2]निशम्य दीप्तः ।**
**प्रभयाऽनुकृतप्रवर्ग्यदीप्तिः**
**प्रतिरुन्धानदुरासदो ररास ॥ ७३ ॥**

**कुरुवृद्धेति**—अर्थ्यं [3]अर्थादनपेतं उचितार्थं तदेतत् कुरुवृद्धस्य भीष्मस्य वचो निशम्य दीप्तः तीव्रेण [4] कोपेन प्रज्वलितः प्रभया कोपारुणया अनुकृतप्रवर्ग्यदीप्तिः [5]विडम्बितप्रवर्ग्यमहाज्वालदीप्तिः प्रतिरुन्धानदुरासदः विरोधिनां दुराक्रमः दमघोषप्रभवः शिशुपालः ररास अट्टहासशब्दं चकार ॥ ७३ ॥

---

[1] परं यत्–घ. दे. मु. [2] निशम्य रुष्टः–ग्र. दे. मु. [3] 'धर्मपथ्यर्थन्यायादनपेते' (पा. सू. ४-४-९२) इत्यनेन अर्थशब्दात्तस्मादनपेतमित्यर्थे यत्प्रत्यय इति भावः. [4] 'तीव्रेण' इति ख.–कोशे नास्ति. [5] विडम्बितमखज्वालारुचिः–ख. ग.

निपुणैरतिबालवृद्धवाक्यं
न परिग्राह्यमिति ब्रुवन्ति सन्तः ।
सहदेववदेष इत्यनिन्द्यं
पृथुकत्वेन पितामहं निनिन्द ॥ ७४ ॥

निपुणैरिति—निपुणैः अतिबालवृद्धवाक्यं अतिबालानां अतिवृद्धानां च वाक्यं न परिग्राह्यमिति सन्तो ब्रुवन्ति । अत एषः भीष्मः सहदेववत् सहदेवो यथा [1] अपरिग्राह्यवाक्यः तथाऽयमप्यपरिग्राह्यवाक्यः, अतिवृद्धत्वादिति भावः, इति उक्तप्रकारेण पृथुकत्वेनानिन्द्यं बाल इत्यनिन्द्यं पितामहं कुरुवंशपितामहं निनिन्द ॥ ७४ ॥

अतिवृत्तिमवेक्ष्य तस्य घोरा-
मशनिक्षोभनिभां सभासदस्ते ।
सदसत्प्रतिपत्तिमूढचित्ताः
क्षणमालेख्यसमर्पिता इवासन् ॥ ७५ ॥

अतिवृत्तिमिति—घोरां भयङ्करां अशनिक्षोभनिभां वज्रविजृम्भणतुल्यां तस्य शिशुपालस्य[2]अतिवृत्तिमवेक्ष्य उद्वृत्तवाचं निशम्य सदसत्प्रतिपत्तिमूढचित्ताः [3] भयावेशाद्भीष्मशिशुपालयोर्वचसि सदसद्विवेचनमूढमनसः ते सभासदः सभास्थाः क्षणं आलेख्यसमर्पिताः चित्रलिखिता इवासन् ॥ ७५ ॥

जहसुः कतिचिद्विनिन्द्य चैद्यं
पिदधुः कर्णयुगं परे कराभ्याम् ।
सुरसिन्धुसुतं शशंसुरन्ये
व्यचिकित्सन्त च केचिदल्पसत्त्वाः ॥ ७६ ॥

जहसुरिति—तदनन्तरं केचित् चैद्यं शिशुपालं विनिन्द्य जहसुः उपहसन्ति स्म । परे कर्णयुगं कराभ्यां पिदधुः भगवन्निन्दा न श्रोत-

[1] अपरिग्राह्यो बालत्वात् तथा—घ. [2] अतिवार्त्तां उद्वृत्तमवेक्ष्य—ख.
[3] प्रायशो भीष्मशिशुपालयोर्वाक्यानां सदसद्विवेचन—ख.

ऽयेति छादयामासुः । अन्ये सुरसिन्धुसुतं भीष्मं शशंसुः तुष्टुवुः । अल्पसत्वाः क्षुद्रचित्ता मन्दधियः केचित् "चित्ते [1]प्राणेषु जन्तुषु" इति सत्वनानार्थेषु विश्वः, व्यचिकित्सन्त अनयोर्वचसोः किं युक्तमिति सन्दिहते स्म । 'कित निवासे' (भ्वा. ९९३) इति धातुः 'गुप्तिज्किद्भ्यस्सन्' (पा. सू. ३-१-५) इति सन्नन्तः । स च विपूर्वः सन्देहे वर्तते । पिदधुरिति 'डु धाञ् धारणपोषणयोः' (जु. १०९२) इति धातुः । अपिरुपसर्गः ।

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः"

इति तस्याकारलोपः ॥ ७६ ॥

मुनिभिः पुलकाञ्चिताखिलाङ्गैः
क्षरदानन्दथुबाष्पदिग्धदेहैः ।
अनुमोदनजातमौलिकम्पैः
हरिकीर्तिश्रवणोन्मुखैरभावि ॥ ७७ ॥

मुनिभिरिति—मुनिभिः नारदादिभिः पुलकाञ्चिताखिलाङ्गैः रोमाञ्चव्याप्तसर्वावयवैः क्षरदानन्दथुबाष्पदिग्धदेहैः स्रवदानन्दाश्रुरूषितशरीरैः "स्यादानन्दथुरानन्दः" इत्यमरः 'ट्वितोऽथुच्' (पा. सू. ३-३-८९) इत्यथुच्प्रत्ययः, अनुमोदनजातमौलिकम्पैः भीष्मवचनश्लाघनेन जातशिरःकम्पैश्च सद्भिः हरिकीर्तिश्रवणोन्मुखैः भीष्मेण कीर्त्यमानाया हरिकीर्तेः आकर्णने उत्कण्ठया उन्नमितमुखैः अभावि भूतम् । भावे लुङ् ॥७७॥

स्तुतिनिन्दनयोरभिन्नरूपं
मुखरागं मधुहन्तुरीक्षमाणैः ।
यदुभिः प्रतिरुद्धरोषवेगैः
क्षमया तिर्यगवैक्ष्यत क्षमैव ॥ ७८ ॥

स्तुतीति—मधुहन्तुः कृष्णस्य स्तुतिनिन्दनयोरभिन्नरूपं

---

[1] प्राणिष्विति-ख. ग. 'प्राणेषु' इति मुद्रितविश्वकोशे दर्शनात्स एव पाठ उचित इति बोध्यम्.

भीष्मकृतस्तुतौ शिशुपालकृतनिन्दने च एकरूपं मुखरागं मुखशोभां ईक्षमाणैः अत एव प्रभुचित्तानुरोधेन प्रतिरुद्धरोषवेगैः निरुद्धकोपविजृम्भणैः यदुभिः यादवैः क्षमया क्षान्त्या अन्तर्निरुद्धकोपत्रपासंवलितया क्षमा भूमिरेव तिर्यक् तिरश्चीनं यथा तथा अवैक्ष्यत दृष्टा । "रागोऽनुरागे लाक्षादौ त्विषि" इति वैजयन्ती ॥ ७८ ॥

**मधुजित्परिवादजातरोषं**
**सहसा चेदिपतेर्वधाय सज्जम् ।**
**गदया सह भीममुज्जिहानं**
**शमयन्नित्थमवोचदापगेयः ॥ ७९ ॥**

**मधुजिदिति**—मधुजितः कृष्णस्य परिवादेन निन्दया जातरोषं अत एव सहसा झडिति चेदिपतेः शिशुपालस्य वधाय सज्जं सन्नद्धं "सज्जौ सन्नद्धसम्भ्रान्तौ" इति प्रकाशः, गदया सहोज्जिहानं उद्गच्छन्तं गदां गृहीत्वा उत्पतन्तं भीमं आपगेयः आपगायास्सुतो भीष्मः शमयन् इत्थमवोचत् ॥ ७९ ॥

**बलभीमसुयोधनैरमुष्मिन्**
**परिहीणायुषि न प्रवर्तितव्यम् ।**
**अतिपर्यनुयोगया नियत्या**
**हरिणैवैष भवाब्धिवन्निवर्त्यः ॥ ८० ॥**

**बलेति**—परिहीणायुषि क्षीणायुषि "कृत्यचः" (पा. सू. ८-४-२९) इति णत्वम्, अमुष्मिन् शिशुपाले बलभीमसुयोधनैः न प्रवर्तितव्यं वधाय न विजृम्भणीयम् । कुतः? एषः शिशुपालः अतिपर्यनुयोगया कथमित्थमासीदिति प्रश्नमतिक्रान्तया नियत्या स्वकृतकर्मणा हेतुना हरिणैव भवाब्धिवत् संसाराम्बुधिवत् निवर्त्यः । कृष्ण एवास्य दैवक्लृप्तो मृत्युरिति बलादिभिरत्र न प्रवर्तितव्यमित्यर्थः । भीमे सन्नद्धे

बलदेवोऽपि सन्नद्धोदिति तद्ग्रहणम् । दुर्योधनस्यापि तथोत्साहजननेन भ्रातृणामैकमत्यं [1] सम्पादयानीत्याशयेन अस्यापि ग्रहणम् ।

"अनुयोगश्च पृच्छा च प्रश्नपर्यनुयोगवत्"

इति यादवः ॥ ८० ॥

**त्यज साहसमुज्झ्यताममर्षः**
**समये विक्रमसम्पदाद्रियेत ।**
**सदनागतसूदनापवादो**
**महतां सम्प्रति मा च भूदयं वः ॥ ८१ ॥**

सन्नद्धं भीमसेनं विषयीकृत्याह—

**त्यजेति**—साहसं विमृश्यबलात्कारं त्यज । अमर्षः कोपः उज्झ्यतां त्यज्यताम् । समये उचितकाले विक्रमसम्पत् पराक्रमसमृद्धिः आद्रियेत श्लाघ्येत । इदानीं तु क्रतुमध्ये न तस्यास्समय इति भावः । किञ्च महतां प्रख्यातानां वः सम्प्रति अयं सदनागतसूदनापवादः गृहागतवधेनापवादः मा भूत् । [2] माङ्योगादडागमाभावः ॥ ८१ ॥

**भजतु प्रथमार्हणां यथार्हं**
**भगवानेष भवार्णवैकसेतुः ।**
**प्रकृतस्य विधातुमन्तरायं**
**स्वयमेतस्य शुभस्य न क्षमं वः ॥ ८२ ॥**

**भजत्विति**—भवार्णवैकसेतुः संसारसागरस्यान्यनिरपेक्षस्सेतुरिव तारकः एषः भगवान् यथार्हं यथोचितं प्रथमार्हणां [3]अग्र्यपूजां भजतु । प्रकृतस्य प्रक्रान्तस्य एतस्य यागरूपस्य शुभस्य उत्सवस्य अन्तरायं विघ्नं स्वयं विधातुं स्वयमेव कर्तुं वः युष्माकं न क्षमं न योग्यम् ॥ ८२ ॥

---

[1] सम्पादनीयमित्या—ख. घ. [2] माङ्योगादडागमापवादः—ख. घ. 'न माङ्योगे' (पा. सू. ६-४-७४) इति सूत्रेण माङ्योगे लुङादिष्वडागमनिषेधादिति भावः. [3] अग्रपूजां—ख.

इति शान्तनवे प्रभाषमाणे
निखिलानुश्रवसंशयप्रमोक्ता ।
मुदितो मुनिरब्जयोनिजन्मा
मुहुराधूतकरस्तदभ्यनन्दत् ॥ ८३ ॥

इतीति—इति उक्तप्रकारेण शान्तनवे शन्तनुसुते प्रभाषमाणे सति मुदितः हृष्टः [1] निखिलानुश्रवसंशयप्रमोक्ता सर्ववेदानां अर्थसंदेह-स्यापनेता अब्जयोनिजन्मा चतुर्मुखसम्भवः मुनिः नारदः मुहुः पुनःपुनः आधूतकरः आकम्पितकरस्सन् तत् वचनं अभ्यनन्दत् अश्लाघत ॥ ८३ ॥

क्षितिपालगणोदधिस्तदानीं
विषमारम्भविरोधसेतुभिन्नः ।
स्तिमितक्षुभिताकृतिर्बभासे
गगनाम्भोधरसन्निभो गभीरः ॥ ८४ ॥

क्षितीति—तदानीं विषमारम्भविरोधसेतुभिन्नः विषमो दुरन्त आरम्भो यस्य तथाभूतो विरोध एव सेतुः तेन [2] विभक्तः स्तिमित-क्षुभिताकृतिः यादववर्गे स्तिमिता शिशुपालवर्गे क्षुभिता चाकृतिर्यस्य स तथोक्तः गभीरः अगाधः अमेयपराक्रमः क्षितिपालगण एवोदधिः गगनाम्भोधरसन्निभः स्तिमितक्षुभितस्वभावाभ्यां नभोमेघाभ्यां तुलितस्सन् बभासे । प्रसिद्धोदधिरपि रामसेतुना विभक्तः क्वचित् स्तिमितोऽन्यत्र क्षुभितश्च दृश्यत इति उदधित्वरूपणम् ॥ ८४ ॥

---

[1] निखिलागमसंशयप्रमोक्ता सर्ववेदानां संशयस्यापनेता—ख. [2] विभिन्नः.

ननृते मुदितेन नारदेन
क्षिपता मङ्क्षु मृगत्वगुत्तरीयम् ।
सुरसिन्धुसुतोदितं [1] विपञ्ची-
मसकृद्गापयताऽनुनादवृत्त्या ॥ ८५ ॥

ननृत इति—मुदितेन मङ्क्षु शीघ्रं मृगत्वगुत्तरीयं मृगाजिनसंव्यानं क्षिपता नृत्यसौकर्याय निरस्यता सुरसिन्धुसुतोदितं भीष्मोक्तं शब्दजातं अनुनादवृत्त्या तदनुरणनक्रमेण तदनुरणनवत् अतिसादृश्येन विपञ्चीं [2] वीणां असकृत् गापयता आवादयता नारदेन ननृते नृत्यते स्म । गानस्येह शब्दकर्मकत्वाद्द्विकर्मकता ॥ ८५ ॥

उदगीयत यत्तदा विधिज्ञैः
सममुद्गातृगिरैकताननादैः ।
मधुमर्दन [3] गीतगर्भया त-
द्विशदं नारदवीणयाऽन्ववादि ॥ ८६ ॥

उदगीयतेति—तदा विधिज्ञैः [4] शास्त्रनियमाभिज्ञैः उद्गातृभिः उद्गातृप्रस्तोतृप्रतिहर्तृभिः एकतानः स्वरादिनियमे एकाग्रो नादः कर्णध्वनिः येषां तथाभूतैस्सद्भिः समं एकरूपं यदुदगीयत उच्चैर्गीतं तद्विशदं पुरुषोच्चारणवत् व्यक्तं यथा तथा मधुमर्दनस्य कृष्णस्य गीतं गर्भः अन्तर्गतं यस्याः तथाभूतया नारदवीणया अन्ववादि अनूदितम् । [5] वीणया कृष्णं गायन् नारदः हर्षोत्कर्षात् उद्गातृणां गानमपि तथैव यथावत् अन्वगायादित्यर्थः। उद्गातृशब्देन रूढिपूर्वकलक्षणया प्रस्तोतृप्रतिहर्तारावपि गृह्येते ॥ ८६ ॥

---

[1] विपञ्चीं सकृदावादयताऽनुनादवृत्त्या–झ. ख. घ. [2] वीणां सकृत् गायता–ख. [3] गीतिगर्भया–घ. ग्र. मु. कीर्तिगर्भया–दे. मु. [4] शास्त्रीयधर्माभिज्ञैः–ङ. [5] 'वीणया कृष्णं गायन्' इति ख.–कोशे न दृश्यते.

व्रजयोषिदपाङ्गवेधनीयं
मधुराभाग्यमनन्यभोग्यमीडे ।
वसुदेववधूस्तनन्धयं त-
त्किमपि ब्रह्म किशोरभावदृश्यम् ॥ ८७ ॥

व्रजेति—व्रजयोषितामपाङ्गैर्वेधनीयं शरैरिव वेध्यं मधुरायां भाग्यं निजोत्पत्त्या पुण्यक्षेत्रत्वरूपोत्कर्षापादनेन भागधेयमिव स्थितं अनन्यानामेकान्तभक्तानां भोग्यं परमानन्दरूपतया अनुभाव्यं वसुदेववध्वाः देवक्याः स्तनन्धयं शिशुरूपं किशोरभावेन बालभावेन दृश्यं दर्शनमात्रेण हृदयोल्लासप्रदं अतिरमणीयं किमपि अपरिमितमाहात्म्यं तत् प्रसिद्धं ब्रह्म ईडे स्तुवे। स्तनन्धयमित्यत्र स्तनं धयति पिबतीति विग्रहे 'नासिकास्तनयोर्ध्माधेटोः' (पा. सू. ३-२-२९) इति खश्[1] मुमागमश्च ॥

"तद्दृश्यं दृष्टमात्रं यत्कुर्यादुल्लासिकां नवाम्"

इति वैजयन्ती ॥ ८७ ॥

निकटेषु[2] निशामयाम नित्यं
निगमान्तैरधुनाऽपि मृग्यमाणम् ।
यमलार्जुनदृष्टबालकेलिं
यमुनासाक्षिकयौवनं युवानम् ॥ ८८ ॥

निकटेष्विति—निगमान्तैः उपनिषद्भिः अधुनाऽपि अद्यापि मृग्यमाणं अन्विष्यमाणं, तैरद्यापि कार्त्स्न्येन अपरिच्छेदादेकदेशप्रतिपादनमन्वेषणत्वेनाध्यवसीयते, यमलाभ्यामर्जुनाभ्यां ककुभवृक्षाभ्यां बाल्यलीलाकृतोलूखलाकर्षणभज्यमानाभ्यां दृष्टबालकेलिं अवलोकितबालक्रीडं

---

[1] 'अरुर्द्विषदजन्तस्य मुम्' (पा. सू. ६-३-६७) इति सूत्रेण पूर्वपदस्य मुमागम इति भावः. [2] 'निशामयामि' 'निशामयानि'—इत्यपि मुद्रितकोशयोः पाठान्तरद्वयं दृश्यते.

यमुनासाक्षिकयौवनं यमुना साक्षी यस्य तद्यमुनासाक्षिकं तथाभूतं यौवनं यूनः कर्म यमुनातीरे गोपवनितोपभोगरूपं यस्य तं युवानं निकटेषु समीपेषु नित्यं निशामयाम पश्यामेति प्रार्थनायां लोट्। निपूर्वः 'शम [1] उपशमने' (दिवादि. १२०२) इति धातुर्ण्यन्तः। तस्य 'शमोऽदर्शने' (ग. सू. १९२) इति दर्शनार्थे मित्संज्ञानिषेधात् [2] अमन्तत्वेऽपि [3] न ह्रस्वः। दर्शनार्थे तन्निषेधसामर्थ्यादेव दर्शनार्थलाभोऽपि। न त्वत्र 'शम लक्ष आलोचने' (चुरा. १६९७) इति चौरादिको धातुः। तस्य [4] 'आकुस्मादात्मनेपादिनः' इत्यात्मनेपदित्वात् यमुनासाक्षिकेत्यत्र 'शेषाद्विभाषा' (पा. सू. ५-४-१५४) इति कप्प्रत्ययः। यद्यपि स्त्रीत्वविवक्षायां साक्षिशब्दात् 'ऋन्नेभ्यो ङीप्' (पा. सू. ४-१-५) इति ङीपि सति यमुनासाक्षिणीकेति भाव्यम्। तथाऽपि तत्र स्त्रीत्वं न विवक्षितम्। यद्वा साक्षिशब्दात् स्वार्थे कप्रत्ययं कृत्वा यमुना साक्षिका यस्येति योज्यम्। यौवनमित्यत्र यूनः कर्मेति विग्रहे 'हायनान्तयुवादिभ्योऽण्' (पा. सू. ५-१-१३०) इति अण्प्रत्ययः ॥ ८८ ॥

**पदवीमदवीयसीं विमुक्ते-**
**रटवीसम्पदमम्बुवाहयन्तीम् ।**
**अरुणाधरसाभिलाषवंशां**
**करुणां कारणमानुषीं भजामि ॥ ८९ ॥**

**पदवीमिति**—अदवीयसीं अदूरतरां विमुक्तेः पदवीं सरणिं

---

[1] 'उपशमे' इति धातुपाठेऽर्थो निर्दिष्टः. [2] अमन्तत्वेऽपीत्यादि—'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (ग. सू. १८८) इत्यनेनामन्तानां मित्त्वेऽपि 'शमोऽदर्शने' (ग. सू. १९२) इति दर्शनार्थे मित्त्वनिषेधात् 'मितां ह्रस्वः' (पा. सू. ६-४-९२) इति न ह्रस्व इति भावः. [3] 'न' इति ख.-कोशे गलितम्. [4] चुरादौ 'चित संचेतने' (चुरा. १६७४) इत्यारभ्य कुस्म (१७१२) धातुपर्यन्तसंघातप्रविष्टधातूनामात्मनेपदित्वस्य धातुपाठे 'आकुस्मादात्मनेपादिनः' इत्युक्तत्वादिति भावः.

[1] तादृशसरणिवत्सिद्धोपायतया झटिति विमुक्तिप्रापिकां अटवीसम्पदं काननसमृद्धिं अम्बुवाहयन्तीं निजकान्त्या अम्बुवाहवतीं कुर्वतीं अरुणाधरसाभिलाषवंशां अरुणे अधरे साभिलाषवदासक्तवेणुनालां कारणमानुषीं भूभारहरणलीलारूपेण कारणेन मनुष्यरूपां करुणां निरतिशयकरुणासमृद्धां देवतां भजामि । करुणोत्कर्षद्योतनाय धर्मिणि करुणात्वाध्यवसायः । अदवीयसीमित्यत्र दूरशब्दा[2]दीयसुन्प्रत्ययः । 'स्थूलदूरयुव' (पा. सू. ६-४-१५६) इत्यादिसूत्रेण रेफादिलोपः । [3]तत एव गुणः । 'उगितश्च' (पा. सू. ४-१-६) इति ङीप् । नञ्-समासः । अम्बुवाहयन्तीमित्यत्र अम्बुवाहवच्छब्दात् 'तत्करोति' (ग. सू. २०४) इति णिचि [4]'णाविष्ठवत्प्रातिपदिकस्य' इतीष्ठवद्भावात् 'विन्मतोर्लुक्' इति मतुपो लुक् । मानुषीमित्यत्र 'टिड्ढाणञ्' (पा. सू. ४-१-१५) इत्यादिना ङीप् । "मनोर्जातावञ्यतौ षुक्च" (पा. सू. ४-१-१६१) इति मानुषशब्दस्याञन्तत्वात् ॥ ८९ ॥

**अधराहितचारुवंशनाला**
**मकुटालम्बिमयूरपिञ्छमालाः ।**
**हरिनीलशिलाविभङ्गनीलाः**
**प्रतिभास्सन्तु ममान्तिमप्रयाणे ॥ ९० ॥**

**अधरेति**—ममान्तिमप्रयाणे अन्तिममन्तेभवं प्रयाणमुत्क्रमणं तस्मिन् अधराहितचारुवंशनालाः अधरनिहितमनोज्ञवेणुनालाः मकु-

---

1 'तादृशसरणिवत्' इति ख.–कोशे न दृश्यते. 2 'द्विवचनविभज्योपपदे-तरबीयसुनौ' (पा. सू. ५-३-५७) इति सूत्रेणेयसुन् प्रत्ययः. 3 तत एव–स्थूल-दूरेत्यादिसूत्रेणैवेत्यर्थः. 4 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (ग. सू. २०३) इत्यनेन णिचीष्ठवद्भावातिदेशेन इष्ठनि 'विन्मतोर्लुक्' (पा. सू. ५-३-६५) इति मतुपो लुग्विधानादत्र मतुपो लुगिति भावः.

टालम्बिमयूरपिञ्छमालाः किरीटलम्बमानबर्हिबर्हस्रजः हरिनीलशिलाविभङ्गनीलाः इन्द्रनीलोपलशकलमेचकाः [1]प्रतिभाः सन्तु अन्तकाले उक्तरूपविशिष्टभगवन्मयानि स्फुरणानि भवन्त्विति प्रार्थना ॥ ९० ॥

जयतादिह देवकीसुतोऽसौ
जगतामादिरनाद्यनन्तभूमा ।
अवतारयितुं भरं पृथिव्यां
वसुदेवस्य गृहे कृतावतारः ॥ ९१ ॥

जयतादिति—जगतां आदिः कारणभूतः अनाद्यनन्तभूमा आद्यन्तरहितमहिमा पृथिव्याः भरं भारं अवतारयितुं अवरोपयितुं वसुदेवस्य गृहे कृतावतारः असौ देवकीसुतः इह जगति जयतादित्याशिषि लोट् ॥ ९१ ॥

क्रतुरत्र समर्पितः कृतार्थः
स च धर्मः किमिवाचचार धर्मम् ।
जगदेकपतेरमुष्य पूजां
विदधानेन [2]युधिष्ठिरेण पुत्री ॥ ९२ ॥

क्रतुरिति—अत्र अस्मिन् कृष्णे समर्पितः [3]क्रतुरयं कृतार्थः स्थिरफलत्वात् । किञ्च सः प्रसिद्धः धर्मः [4]किमिव धर्ममाचचार किं वा पुण्यं चकार । कीदृशो धर्मः? जगतामेकस्य मुख्यस्य अद्वितीयस्य वा पत्युः अमुष्य कृष्णस्य पूजां क्रतुरूपां सदस्यग्रपूजां वा विदधानेन कुर्वाणेन युधिष्ठिरेण पुत्री पुत्रवान् । युधिष्ठिरेणेति [5]प्रकृत्यादितृतीया । भगवद्भक्तपुत्रसम्पत्तिर्महाभाग्यफलमित्यर्थः ॥ ९२ ॥

---

[1] प्रतिभाः सन्तु इति भिन्नं पदद्वयमिति भावः. [2] युधिष्ठिरेण होत्रा—प्र. मु. [3] क्रतुरयं समाप्तः कृतार्थः—ख. [4] किं वा धर्म—ख. [5] 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा. १४६६) इति वार्तिकेनाभेदे तृतीयेति भावः.

इह नाकसदो न मानुषास्ते
य इमे कृष्णमिहार्चयन्त्यनन्याः ।
अयमेव महो ममेति गायन्
स तदा मूर्त इवास नाट्यवेदः ॥ ९३ ॥

इहेति—इह जगति ते नाकसदः देवाः न मानुषाः मनुष्या न भवन्ति, इह सभायां य इमे परिदृश्यमाना भीष्मादयः अनन्याः विषयान्तररहितास्सन्तः कृष्णमर्चयन्ति तन्महिमवर्णनतदनुमोदनादिभिः पूजयन्ति, अयमेव मम महः परिदृश्यमानं भगवदर्चनमेव ममोत्सव [1]इति गायन् सः नारदः [2]तदा मूर्तः मूर्तिमान् नाट्यवेदः गान्धर्ववेद इव आस दीप्यते स्म । [3]'अस गतिदीप्त्यादानेषु' (भ्वादि. ८८६) इति धातोर्लिट् । मूर्त इति मूर्तिशब्दा[4]दर्शआद्यच् प्रत्ययः ॥ ९३ ॥

अभिनन्दितवृत्तिरार्यमिश्रै-
रविसंवादिभिरागमोदितेषु ।
विनयादवनम्य [5]विश्वभर्तु-
स्सहदेवस्स्वयमाहरत्सपर्याम् ॥ ९४ ॥

अभिनन्दितेति—आगमोदितेषु वेदोक्तेष्वर्थेषु अविसंवादिभिः [6]अभ्रमवद्भिः सम्यक् प्रमितवेदार्थैः आर्यमिश्रैः सज्जनैः अभिनन्दितवृत्तिः श्लाघितचरितः सहदेवः विनयात् अवनम्य प्रह्वो भूत्वा विश्वभर्तुः लोक[7]नायकस्य कृष्णस्य सपर्यां पूजां स्वयमाहरत् स्वयमेवाकरोत् । "साधुस्सज्जन आर्यस्स्यात्" इति हलायुधः । तदुपरि मिश्रशब्दः पूज्यवाची ॥ ९४ ॥

---

[1] इति भावयन्–घ. [2] तदनु–घ. [3] 'अस भुवि' (अदादि-१०६५) इत्यादादिकात्तु 'अस्तेर्भूः' (पा. सू. २-४-५२) इति लिटि भ्वादेशस्य दुर्निवारत्वादाह—अस गतीत्यादि. [4] 'अर्शआदिभ्योऽच्' (पा. सू. ५-२-१२७) इति सूत्रेणेति भावः. [5] विश्वकर्तुः–घ. [6] असंशयवद्भिः–ख. [7] नाथस्य–घ.

अरजस्तमसां महीपतीना-
मनुमत्या मुनिमुख्यसम्मते च ।
पुरुषस्य परस्य पूर्वपूजां
सहदेवप्रहितां शशंसुरार्याः ॥ ९५ ॥

**अरज इति**—अरजस्तमसां अविद्यमानरजस्तमोगुणानां महीपतीनां राज्ञां अनुमत्या मुनिमुख्यानां नारदादीनां सम्मते अङ्गीकारे च सति सहदेवप्रहितां सहदेवेन कृतां परस्य पुरुषस्य पूर्वपूजां प्रथमपूजां आर्याः साधवः शशंसुः तुष्टुवुः । सम्मत इति भावे क्तः ॥ ९५ ॥

तृणभुक्प्रतिमस्तृणाय मत्वा
स तदा चेदिपतिर्युधिष्ठिरादीन् ।
अजहत्परुषोक्तिहेतिजालो
दरशेषेन्धनवह्निवद्दिदीपे ॥ ९६ ॥

**तृणभुगिति**—तदा तृणभुक्प्रतिमः स्वतः क्रोधनतया अनाधृष्यत्वादग्निकल्पः सः चेदीनां देशविशेषाणां पतिः शिशुपालः युधिष्ठिरादीन् तृणाय मत्वा तृणवदनादृत्य "मन्यकर्मण्यनादरे विभाषाऽप्राणिषु" (पा. सू. २-३-१७) इति चतुर्थी, अजहत्परुषोक्तिहेतिजालः अजहन्ति अत्यजन्ति परुषोक्तीनां हेतीनां ज्वालानामिव जालानि बृन्दानि यमिति प्रासोदकवत् द्वितीयार्थे बहुव्रीहिः, तथा भूतस्सन् दरशेषेन्धनवह्निवत् अल्पावशिष्टेन्धनेन ज्वलनेन सन्निहितविनाशेन तुल्यं यथा तथा दिदीपे दीप्यते स्म । क्रोधेनाति[1]ज्वलितोऽभवदित्यर्थः ॥ ९६ ॥

---

[1] ज्वलितोऽभूदित्यर्थः—ख.

अजुगुप्सत भूभृतस्सहिष्णून्
परिवादैश्च तिरश्चकार[1] पार्थान् ।
अवमत्य मुकुन्दमर्भकोऽसा-
विति धिक्कृत्य पितामहं[2] जगर्हे ॥ ९७ ॥

अजुगुप्सतेति—सहिष्णून् सहनशीलान् कृष्णस्य प्रथमपूजां क्षाम्यतः भूभृतः क्षितिपालान् अजुगुप्सत अनिन्दत् । 'गुप गोपने' (भ्वादि. ९७०) इति धातोः 'गुप्तिज्किद्भ्यस्सन्' (पा. सू. ३-१-५) इति [3] निन्दार्थे सन्प्रत्ययः । पार्थांश्च परिवादैः दूषणवचनैः तिरश्चकार चिक्षेप । मुकुन्दं कृष्णं असौ अज्ञैः कृतामग्रपूजां [4] स्वयं गृहीतवानयं अर्भकः शिशुः इति अवमत्य गर्हणस्य न विषय इत्यनादृत्य पितामहं कुरूणां [5] पितामहं भीष्मं धिक्कृत्य धिगिति कृत्वा जगर्हे धिग्वादपूर्वकं गर्हति स्म । 'गर्ह निन्दने' (चुरा. १८४६) इति चौरादिको धातुः । तस्य 'आधृषाद्वा' (ग. सू. २०२) इति णिज्विकल्पितः । 'गर्ह-कुत्सायाम्' (भ्वादि ६३६) इति भौवादिकस्त्वात्मनेपदी । धिक्कृत्ये-त्यत्र 'अनुकरणं चानितिपरम्' (पा. सू. १-४-६२) इति धिक्श-ब्दस्य गतिसंज्ञया [6] समासे ल्यबादेशः ॥ ९७ ॥

---

[1] निराचकार—ग्र. मु. [2] जगर्हे—ग्र. दे. मु. [3] 'गुपेर्निन्दायां' (वा. १६८७) इति वार्तिकेन निन्दायां सनोऽभ्यनुज्ञानादिति भावः. [4] 'स्वयं' इति घ. ङ.—कोशयोर्नास्ति. [5] पितामहत्वाद्वृद्धं ख. ङ. [6] समास इत्यादि 'कुगतिप्रादयः' (पा. सू. २-२-१८) इति सूत्रेण समासे 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा. सू. ७-१-३७) इत्यनेन क्त्वाप्रत्ययस्य ल्यबादेश इत्यर्थः.

**अनघोऽयमतन्द्रितः क्रियायां**
**गुरुभिश्शिक्षितशुद्धधीरनेकैः ।**
**कुरुवंशपितामहः कुतोऽसौ**
**मतिमोहेन महीयसा गृहीतः ॥ ९८ ॥**

[1] भीष्मनिन्दनप्रकारमाह—**अनघ इति**—अनघः पक्षपातदोषरहितः क्रियायां कर्तव्यकर्मणि अतन्द्रितः असञ्जाततन्द्रः सदैवावहितः अनेकैः गुरुभिः [2] शिक्षितः गृहीतविद्यः, अत एव शुद्धा धीर्यस्य स तथोक्तः असौ कुरुवंशस्य पितामहः भीष्मः कुतः कारणात् महीयसा महत्तरेण मतेर्मोहेन अविवेकेन गृहीतः ग्रस्तः । न काचिदस्य पक्षपातः । न कर्तव्येषु कर्मस्वनवधानम् । न वा [3] शास्त्रपरिज्ञानवैकल्यम् । तथाऽप्यधुना कुतोऽपि कारणान्मौढ्यं प्राप्त इत्थमनुचितं [4] कारितवानिति भावः ॥ ९८ ॥

**अशठैरजडैरनेडमूकै-**
**र्मुनिभिश्चात्र किमङ्ग्यकारि मौनम् ।**
**अथवा किमरातिपक्षसक्तै-**
**रहमस्मीति मुहुर्जहास मूढः ॥ ९९ ॥**

**अशठैरिति**—अशठैः अनलसैः कर्तव्यकर्मविचारेष्ववहितैः 'शठोऽलसे च मूर्खे च' इति विश्वः, अजडैः अमूढैः कृत्याकृत्यविवेककुशलैः अनेडमूकैः श्रवणवचनशक्तिरहिता एडमूकाः "एडमूकस्त्ववाक्श्रुतिः" इति यादवः, तदन्यैः भीष्माद्युक्तं पूज्यस्य पूज्यत्वं श्रोतुं तत्र प्रतिवक्तुं च समर्थैः मुनिभिश्चात्र मौनं किमङ्ग्यकारि किमित्यङ्गीकृतम् । अथवेति पक्षान्तरे । अरातिपक्षसक्तैः शत्रुवर्गानुरक्तैः किं

---

[1] भीष्मगर्हाप्रकार—ख. [2] शिक्षिता ग्राहिता विद्या अत एव—ङ. [3] शासनापरिज्ञान—ख. [4] कारितवानित्यर्थः—घ.

मुनयोऽपि कृष्णपक्षपातिन इति तैः किं साध्यमित्यर्थः । साध्यमित्यस्य गम्यमानत्वादप्रयोगः । तदपेक्षा च सक्तैरिति कर्तरि तृतीया । अवधानादिगुणवन्तोऽपि पक्षपातिनो न यथार्थं वदन्तीति भावः । [1]अहमस्मि अयुक्तकारिणां शंसिता अहं [2]वर्ते इति इत्युक्त्वा मूढः शिशुपालः मुहुर्जहास । उक्त्वेति गम्यमानत्वादप्रयोगः ॥ ९९ ॥

परिवर्तहुताशनप्रदीप्तं
वदनं तस्य रुषा विजृम्भमाणम् ।
फणभृद्बिलभीषणं तदाऽसी-
ज्ज्वलदुल्काशतदुर्निरीक्षनेत्रम् ॥ १०० ॥

**परिवर्तेति**—तदा परिवर्तहुताशनप्रदीप्तं प्रलयाग्निवत् प्रज्वलितं रुषा विजृम्भमाणं जृम्भां कुर्वत् अत एव दृश्यमानरसनतया [3]फणभृद्बिलभीषणं फणभृत्सहितं वल्मीकादिरन्ध्रमिव भयङ्करं तस्य वदनं ज्वलद्भिः उल्कानां उल्मुकानां शतैः दुर्निरीक्षनेत्रमासीत् ॥ १०० ॥

बडबानलधूमराजिरूक्षा
[4]भ्रुकुटी तस्य मुखे परिस्फुरन्ती ।
ददृशे तदसून् प्रसह्य पातुं
शमनेनेव निवेशिता भुजङ्गी ॥ १०१ ॥

**बडबेति**—बडबानलस्य धूमराजिरिव रूक्षा परुषा तस्य मुखे परिस्फुरन्ती भ्रुकुटी भ्रूरचना तदसून् तस्य प्राणान् प्रसह्य हठेन पातुं शमनेन यमेन निवेशिता भुजङ्गीव ददृशे दृष्टा । तत्कोपविकृतेस्तद्वध एव पर्यवसानादित्थमुत्प्रेक्षा । प्रसह्येत्यव्ययं हठार्थकम् । ॥ १०१ ॥

---

[1] अहमस्मीति—ङ. [2] वर्त इत्युक्त्वा—ङ. [3] 'फणशब्दस्य फणा द्वयोः' इति कोशात्पुंलिङ्गता च. [4] भ्रुकुटिः—झ. ञ. मु.

भसितीकृतचन्दनानुलेपः
क्वथितद्रावितहेमपुष्पदामा ।
सहसा हृदि तस्य कोपवह्निः
समदीपि स्फुटितप्रकीर्णहारः ॥ १०२ ॥

भसितीकृतेति—तस्य हृदि कोप एव वह्निः भसितीकृतचन्दनानुलेपः निजोष्मणा भस्मीकृतचन्दनाङ्गरागः क्वथितद्रावितहेमपुष्पदामा निष्पक्वद्रवीकृतकनककुसुममाल्यः स्फुटितप्रकीर्णहारः [1] स्फुटीकृतविक्षिप्तहारश्च सन्, विशेषणत्रयेऽपि बहुव्रीहिः, सहसा शीघ्रं समदीपि सम्यक् दीप्तोऽभूत् । कर्तरि लुङ् । 'दीपजनबुध' (पा. सू. ३-१-६१) इत्यादिना वैकल्पिकश्चिण् । स्फुटिर् विशरणे (भ्वादि. ३२९) इति धातोः इगुपधलक्षणकप्रत्ययेन निष्पन्नात् स्फुटशब्दात् विशीर्णवाचिनः 'तत्करोति' (ग. सू. २०४) इति णिचि क्तप्रत्यये च सति स्फुटितेति रूपम् ॥ १०२ ॥

कठिनौ [2] परिपिंषतः करौ द्वौ
बहुशस्तस्य वरोर्मिका विशीर्णा ।
ध्रुवमप्रशमाय [3] रोषवह्ने-
स्तुषविक्षेपमधत्त रत्नचूर्णैः ॥ १०३ ॥

कठिनाविति—कठिनौ कर्कशौ द्वावपि करौ बहुशः बहुवारं परिपिंषतः कोपवशात् परस्परेणोपमृद्नतः तस्य विशीर्णा वरोर्मिका उत्तममङ्गुलीयकं "अङ्गुलीयकमूर्मिका" इत्यमरः, रत्नचूर्णैः निजरत्नक्षोदैः रोषवह्नेः तदीयकोपाग्नेः अप्रशमाय ध्रुवं नूनं तुषविक्षेपं अधत्त अकरोदित्युत्प्रेक्षा ॥ १०३ ॥

---

[1] 'स्फुटित' इत्यत्र पाठः स्यात्. [2] परिपिष्यतः—म्र. मु. [3] रोषवह्नेर्भुवि निक्षेप—म्र. मु.

स्ववधाहतडिण्डिमस्वनाभा-
नसकृच्चेदिनियन्तुरट्टहासान् ।
अभितो मणिभित्तिभिस्सभा सा
प्रजहासेव विजृम्भितप्रतिश्रुत्॥ १०४ ॥

**स्ववधेति**—चेदीनां नियन्तुः शिशुपालस्य स्ववधाहतडिण्डिमस्वनाभान् स्ववधस्याहतस्य स्ववधज्ञापकतया वादितस्य ढक्कावाद्यस्य स्वनेन सदृशान् "स्याद्यशः पटहो ढक्का डिण्डिमो डिण्डिरित्यपि" इति वैजयन्ती[1]—

आभा प्रख्योपमाऽभिख्या प्रकारस्सन्निभं निभम् ।
नीकाशाद्याश्च साम्यार्थाः समे स्युश्शब्दतः परे ॥

इत्याभादिशब्दानां शब्दान्तरोत्तरतया सदृशवाचित्वमुक्तम्, इह त्वौचित्यादुत्प्रेक्षायां पर्यवसानम्, असकृत् बहुवारं अट्टहासान् अतिशयेन हासान् "अट्टावतिशयक्षौमौ" इति यादवः, विजृम्भितः प्रतिश्रुत् सम्मूर्छितप्रतिध्वनना सा सभा अभितो मणिभित्तिभिः स्फटिकाद्युपलमयकुड्यैः प्रजहासेव उपहसितवतीवेत्युत्प्रेक्षा । हासप्रभासम्पादनाय मणिभित्तिभिरिति मणिविशेषणम् ॥ १०४ ॥

प्रतिपद्य रुषा विवर्णभावं
तमसा [2] बिभ्रदलङ्घ्यमैकराश्यम् ।
उपरक्त इवार्यमाऽस्तमृच्छन्
स भृशं सद्भिरभूददर्शनीयः ॥ १०५ ॥

**प्रतिपद्येति**—अलङ्घ्यं दैवायत्ततया अनतिक्रमणीयं तमसा तमोगुणेन सह ऐकराश्यं एको राशिस्सङ्घो यस्य तस्य भावं [3] एकसङ्घवर्तित्वं बिभ्रत् तमोगुणप्रचुर इति यावत्, अत एव रुषा कोपेन

---

[1] मुद्रितवैजयन्तीकोशे तु 'स्याद्यशः पटहो ढक्का पटहस्त्वानकोऽस्त्रियौ । वाद्यप्रभेदा डमरुमड्डुडिण्डिमजर्झराः' ॥ इति दृश्यते. [2] बिभ्रदथाप्रिमैकराश्यम्—प्र. मु. [3] एकसभावर्तित्वं—ख.

विवर्णभावं मुखवैवर्ण्यं प्रतिपद्य अस्तमृच्छन् विनाशं यास्यन् सः शिशुपालः तमसा राहुणा सह मेषादिराशिमध्ये एकराशिस्थितत्वं बिभ्रत्, राशिभेदे उपरागासम्भवात्, विवर्णभावं उपरागप्रयुक्तं वैवर्ण्यं प्राप्य अस्तं अदर्शनमृच्छन् उपरक्तो राहुग्रस्तः अर्यमा सूर्य इव सद्भिः सदसि विद्यमानैः भृशं अत्यर्थं अदर्शनीयः द्रष्टुमशक्योऽभूत्। ग्रस्तोऽस्तमयदशापन्नः सूर्योऽपि सद्भिः शिष्टैः अदर्शनीयः द्रष्टुमनर्हो भवति।

"नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन।

नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" ॥ (म. स्मृ. ४-३७)

इति अस्तमयोपरागयोः प्रत्येकमपि तद्दर्शननिषेधादिति भावः। अदर्शनीय इत्युपमाने 'अर्हे कृत्यतृचश्च' (पा. सू. ३-३-१६९) इति अर्हार्थे कृत्यप्रत्ययः। उपमेये तु 'शकि लिङ्च' (पा. सू. ३-३-१७२) इति शक्यार्थे। ऋच्छन्नित्युपमेये वर्तमानसामीप्ये गौणवर्तमाने शतृप्रत्ययः, उपमाने तु मुख्यवर्तमाने।

"तमोऽन्धकारे स्वर्भानौ पापे शोके गुणान्तरे।

प्रशस्ते विद्यमाने च सत्याभ्यर्हितसाधुषु" ॥ इति विश्वः ॥

**[1]श्वसितैरविदूरवृत्तिमद्भिः**
**परिवारैरिव तत्यजे त्रसद्भिः।**
**निजमंसमरातिवन्निजघ्ने**
**[2]पविकल्पेन पदेन चास्य भूमिः ॥ १०६ ॥**

**श्वसितैरिति**—अविदूरवृत्तिमद्भिः समीपवर्तिभिः श्वसितैः त्रसद्भिः बिभ्यद्भिः परिवारैः रक्षिजनैरिव तत्यजे त्यक्तः। प्रकृतशिशुपालः कर्म। यथा प्रभुसमीपवर्तिनो भीरुजनाः प्रबलेन युद्धे समुपस्थिते तं त्यक्त्वा गच्छन्ति, एवं बहिः द्वादशाङ्गुलपर्यन्तसञ्चारिणः

---

[1] श्वसितैरतिदूर-ग्र. मु. श्वसितैरपि दूर-दे. मु. [2] सविकम्पेन पदेन चाथ भूमिम्-ग्र. मु. पाठेऽस्मिंस्तुरीयपादे निजघ्न इत्यस्य परस्मैपदविपरिणामेनानुषङ्गो बोध्यः.

श्वासा इति योगशास्त्रेषु प्रतिपादनादविदूरसञ्चारिणः तस्य श्वासमारुताः कोपोल्बणनिश्वसनवेगेन तं त्यक्त्वा गता इत्यर्थः। किञ्च निजमंसं भुजशिखरं अरातिवत् अरातिना तुल्यं यथा तथा निर्दयं निजघ्ने निहतं, शिशुपालेनेत्यौचित्याल्लभ्यते। पविकल्पेन कुलिशतुल्येन अस्य पदेन चरणेन भूमिश्च निजघ्न इत्यनुषङ्गः कर्तव्यः॥ १०६॥

**निभृतैरपि पूर्वमैकमत्या-**
**द्विकृतस्याथ विरुद्धचेष्टितानि।**
**दधिरे दमघोषसम्भवस्य**
**प्रतिबिम्बैरिव तस्य मित्रभूतैः॥ १०७॥**

निभृतैरिति—पूर्वं ऐकमत्यात् साधुजनैरेकमतित्वात् निभृतैः विनीतैरपि अथ शिशुपालकोपानन्तरं विकृतस्य कोपविकारं प्राप्तस्य दमघोषसम्भवस्य शिशुपालस्य प्रतिबिम्बैरिव तस्य शिशुपालस्य मित्रभूतैः मित्रत्वं प्राप्तैः पार्थिवैः विरुद्धचेष्टितानि शिशुपालगतानि प्रतिचेष्टितानि कोपलिङ्गानि दधिरे धृतानि। कर्मणि लिट्। ओदनस्य पूर्णाश्छात्रा विकुर्वत इतिवत् विकारार्थे कृञोऽकर्मकत्वात् 'गत्यर्थाकर्मक' (पा. सू. ३-४-७२) इत्यादिना कर्तरि [1]क्तप्रत्ययेन विकृतशब्दस्साधुः॥ १०७॥

**विकृताकृतिवेषचेष्टिताना-**
**मवलेपग्रहलुप्तमानसानाम्।**
**अवधीरितजाह्नवेयवाचा-**
**मपहासः परमाददे महद्भिः॥ १०८॥**

विकृतेति—विकृतान्याकृतिवेषचेष्टितानि येषां ते तथोक्ताः, तेषां आकृतिररुणनयनत्वादिः, वेषः क्रोधोष्मशोषितगन्धमाल्यादिः, चेष्टा करपेषणादिः, अवलेप एव ग्रहः भूतविशेषः तेन लुप्तमानसानां गर्वग्रहा-[2]वेशहतबोधानां अवधीरितजाह्नवेयवाचां अनादृतभीष्मवचनानां तेषां

---

[1] क्तप्रत्यये विकृत –घ. [2] वेशलोपितबोधानां

अपहासः परं केवलं महाद्भिः आददे जगृहे, न तूपदेशवचनादिकमिति भावः ॥ १०८ ॥

उपहूय रणाय वृष्णिवीरान्
नृपलोकादथ निर्जगाम चैद्यः ।
तममंसत यादवास्तदानी-
मनलस्कन्धविनिस्सृतं स्फुलिङ्गम् ॥ १०९ ॥

उपहूयेति— अथ चैद्यः चेदीनां राजा शिशुपालः रणाय युद्धाय वृष्णिवीरान् वृष्णयो वृष्णिवंश्याः तेषु श्रेष्ठान् रामकृष्णादीन् उपहूय नृपलोकात् निर्जगाम निर्गतः । तदानीं यादवाः तं शिशुपालं अनलस्कन्धात् अग्निसङ्घात् विनिस्सृतं स्फुलिङ्गं अग्निकणं अमंसत मन्यन्ते स्म । [1]व्यर्थयत्नस्य तस्य निर्गमनं लक्षीकृत्य स्थिता इत्यर्थः ॥ १०९ ॥

कतिभिश्चन [2]कामाचारशक्तै-
रुपसञ्जातमदैरुदग्रशृङ्गैः ।
गजयूथपतेरिवाग्रभाजो
गतिरेतस्य गजैरिवानुजग्मे ॥ ११० ॥

कतिभिश्चनेति—कामचारे मर्यादामुल्लङ्घ्य यथेष्टाचरणे शक्तैः उपसञ्जातमदैः उदग्रमुच्छ्रितं शृङ्गं प्रमुत्वं येषां तथाभूतैः [3]कतिभिश्चन राजभिः गजैरिव गजयूथपतेः गजयूथानां पत्युः महागजस्येव अग्रभाजः पुरोदेशं भजमानस्य पुरतः प्रस्थितस्य एतस्य शिशुपालस्य गतिः अनुजग्मे अनुगता । कर्मणि लिट् । अस्य मित्रभूता राजानोऽपि उत्थाय तमन्वयुरित्यर्थः । गजपक्षे शृङ्गं विषाणं, "क्रीडाम्बुयन्त्रे शृङ्गोऽस्त्री पर्वताग्रप्रभुत्वयोः । विषाणे च" इति यादवः ॥ ११० ॥

---

[1] वधाय ततस्तस्य—ख. व्यर्थायततस्तस्य—ङ. [2] कामचारसक्तैः—अ. दे. मु. [3] कतिभिश्चनारातिभिः—ख.

अथताननुमत्य पाण्डवादीन्
समरस्थानमुपागतस्ससैन्यः ।
हरिरप्रतिरोधनीयवृत्तिः
द्विरदाधीशमिव द्विषं रुरोध ॥ १११ ॥

अथेति—अथ शिशुपालपक्षप्रस्थानानन्तरं तान् यज्ञसदसि स्थितान् पाण्डवादीन् अनुमत्य क्रतुं चलयतेत्यनुज्ञाय समरस्थानं युद्धरङ्गं उपागतः अप्रतिरोधनीयवृत्तिः केनापि प्रतिरोद्धुमशक्यचरितः हरिः सिंह इत्युपमानानुरोधात् गम्यते, द्विरदाधीशं गजप्रवरमिव द्विषं रुरोध ॥ १११ ॥

रथहस्तितुरङ्गपत्तिरूपै-
र्युयुजाते पृतने यथार्हमङ्गैः ।
स्थितिकर्मभिराभिमुख्यवद्भि-
र्युधि बिम्बप्रतिबिम्बवद्भवन्त्यौ ॥ ११२ ॥

रथेति—रथाः हस्तिनः तुरङ्गाः पत्तयः रथहस्तितुरङ्गपत्तीति प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः, तद्रूपं स्वरूपं येषां तानि तथोक्तानि तैः आभिमुख्यवद्भिः परस्परसाम्मुख्यवद्भिः स्थितिकर्मभिः अङ्गैः सेनाङ्गैर्हेतुभिः बिम्बप्रतिबिम्बवत् बिम्बप्रतिबिम्बाभ्यां तुल्यं यथा तथा भवन्त्यौ पृतने कृष्णशिशुपालसेने यथार्हं यथोचितं रथो रथेन गजो गजेनेत्यादिक्रमेण युधि युद्धे युयुजाते युक्ते बभूवतुः ॥ ११२ ॥

गरुडा इव पन्नगानुदग्रान्
द्रुमषण्डानिव मारुताः प्रचण्डाः ।
अहितानभिनिघ्नतो निजघ्नु-
र्यदुवीरा मधुवैरिहेतिकल्पाः ॥ ११३ ॥

गरुडा इति—मधुवैरिहेतिकल्पाः मधुवैरिणो हेतितुल्याः, हेतिवत्सहकारिणः, तस्य हेतिश्चक्रं तद्वद्दी[1]प्ता इति वा, यदुवीराः

[1] दीप्ता—ख. ग.

यदुश्रेष्ठाः अभिनिघ्नतः आभिमुख्येन हननं कुर्वतः अहितान् रिपून् उदग्रान् महतः पन्नगान् गरुडा इव, द्रुमषण्डान् द्रुमसमूहान् "उद्भिज्जानां तु षण्डोऽस्त्री" इति षण्डशब्दः पुंस्यपि, प्रचण्डाः अधृष्याः मारुताः महावायव इव, "प्रचण्डः करवीरे ना त्रिष्वधृष्य-प्रगल्भयोः" इति रत्नमाला, निजघ्नुः निघ्नन्ति स्म। उदग्रानित्येतत्का-काक्षिन्यायेन द्रुमषण्डानामपि विशेषणम्, प्रक्रमात् (विशेषणप्रक्रमात्)॥ ॥ ११३ ॥

स्थितमप्रतिमे रथाङ्गपाणिं
गरुडप्रख्यगतागते रथाग्र्ये।
पतनोद्यततारकानुकारी
शलभो वह्निमिवाससाद चैद्यः॥ ११४ ॥

स्थितमिति—गरुडप्रख्यगतागते गरुडशब्देन गरुडस्य गमनागमने लक्ष्येते, तत्सदृशे गमनागमने यस्य स तथोक्तः तस्मिन्, आभाप्रख्यादिशब्दाः शब्दान्तरोत्तरत्वेन सदृशवाचिनः, अप्रतिमे तुल्यरथान्तररहिते, "तुल्यार्थैरतुलोपमाभ्याम्" (पा. सू. २-३-७२) इति पर्युदासादुपमाशब्दस्तुल्यवाच्यपि[1], रथाग्र्ये रथोत्तमे स्थितं रथाङ्गं पाणौ यस्य तं कृष्णं पतनोद्यततारकानुकारी आपन्नपतननक्षत्र-सदृशः चैद्यः चेदिराजः वह्निं शलभः पतङ्ग इव आससाद [2]प्राप। द्वन्द्वयुद्धार्थं कृष्णेन सङ्गत इत्यर्थः॥ ११४ ॥

ज्वलदुज्ज्वलहेतिबृन्दशाली
विपुलस्यन्दनवेदिमध्यदीप्तः।
स्वयमेव बभूव चेदिराजः
स्वविभूतेरभिचारहव्यवाहः॥ ११५ ॥

ज्वलदिति—ज्वलद्भिः दीप्यमानैः उज्ज्वलैः मनोहरैः हेतिबृन्दैः आयुधनिकरैः अभीक्ष्णं शालते श्लाघत इति तथोक्तः

[1] उपमाप्रतिमाशब्दयोः पर्यायत्वमित्याशयेनेदम्. [2] प्रापत्—ख.

'[1]शाडृ श्लाघायाम्' (भ्वादि. २८९) इति धातोराभीक्ष्ण्ये णिनिः, विपुलः विशालः स्यन्दन एव वेदिरुत्तरवेदिः तन्मध्ये दीप्तः चेदिराजः शिशुपालः स्वविभूतेः स्वकीयैश्वर्यस्य अभिचारहव्यवाहः मारणक्रतोराहवनीयाग्निः बभूव । हव्यवाहपक्षे हेतयो ज्वालाः ॥ ११५ ॥

यदुपुङ्गवसूर्यसन्निधाने
शिशुपालः प्रतिसूर्यवत्प्रदीप्तः ।
किमतो भवतीति खिन्नचित्तैः
सखिभिस्स्वर्गिभिरप्यवैक्ष्यतैकः ॥ ११६ ॥

यदुपुङ्गवेति—यदुपुङ्गवः यदुश्रेष्ठ एव सूर्यः तस्य सन्निधाने प्रतिसूर्यवत् प्रतिसूर्येण तुल्यं प्रदीप्तः शिशुपालः, अतः कृष्णेन युद्धात् किं भवति मरणं जीवनं वा किं भविष्यतीति खिन्नचित्तैः सखिभिः सुहृद्भिः स्वर्गिभिः देवैरपि एक एव अवैक्षत दृष्टः । सुहृदां मरणशङ्कया खेदः, देवानां तु जीवनशङ्कया । भवतीति [2]वर्तमानसामीप्ये लट् ॥ ११६ ॥

मदलुप्तधिया तदाऽभियुक्तो
यदुसिंहश्शिशुपालकुञ्जरेण ।
विजहार गुहाशयस्तरस्वी
निखिलारण्यकनिर्विघातवृत्तिः ॥ ११७ ॥

मदेति—तदा मदलुप्तधिया मदवशान्नष्टविवेकेन शिशुपाल एव कुञ्जरस्तेन अभियुक्तः प्रथममाधर्षितः गुहाशयः प्राणिनां हृदयगुहासु शयानः तरस्वी बलवान् निखिलारण्यकनिर्विघातवृत्तिः निखिलेषु [3]अरण्यगेयेषु वेदान्तेषु अखण्डितवृत्तिः सकलवेदान्तप्रतिपाद्यः यदुसिंहः यदुश्रेष्ठः विजहार शिशुपालमर्दयन् विहरति स्म । यथा निखिलेष्वारण्यकेषु वनगजेषु अरण्यसम्भवेषु व्याघ्रादिसर्वसत्त्वेषु वा

[1] लडयोरभेदाभिप्रायेणेदम्. [2] 'वर्तमानसामीप्ये वर्तमानवद्वा' (पा. सू. ३-३-१३१) इति सूत्रेणेति भावः. [3] अरण्यभागेषु—ख.

अप्रतिबद्धवृत्तिः पर्वतगुहायां स्वेच्छया शयानस्सिंहो मदवशादजानता कुञ्जरेणाभियुक्तः तं विदलयन् विहरति तद्वदित्यर्थः । आरण्यकशब्दस्य वेदान्तपरत्वे वनगजपरत्वे च "पथ्यध्यायन्यायविहारमनुष्यहास्तिष्विति वक्तव्यम्" (वा. २८१९) इति वार्तिकाद्वुन्प्रत्ययः । वन्यसत्त्वमात्रपरत्वे शैषिकेऽण्प्रत्यये सति स्वार्थे कः ॥ ११७ ॥

मधुमर्दनकार्मुकप्रणादः
सुमनश्श्रोत्रसुधारसायमानः ।
त्रिजगद्भयशान्तिकप्रयोगो
रणवेदप्रणवो बभूव रम्यः ॥ ११८ ॥

मधुमर्दनेति—सुमनश्श्रोत्रसुधारसायमानः देवानां श्रोत्रस्य सुधारसवदाचरन् त्रिजगद्भयशान्तिकप्रयोगः त्रैलोक्यभयशान्तिप्रयोजनकर्मानुष्ठानरूपः रणं युद्धमेव वेदः तस्य प्रणवः रम्यः मधुमर्दनकार्मुकप्रणादः कृष्णचापध्वनिः बभूव जज़म्भे । प्रणाद इति 'उपसर्गादसमासेऽपि' (पा. सू. ८-४-१४) इति णत्वम् ॥ ११८ ॥

अचिरद्युतिभास्वरोऽथ चैद्यः
पुरुहूतायुधचारुचित्रचापः ।
प्रलयस्तनयित्नुभीमनादः
शरवर्षेण मुकुन्दमभ्यवर्षत् ॥ ११९ ॥

आचिरेति—अथ अचिरद्युति[1]भास्वरः अचिरस्थायिन्या द्युत्या भास्वरः, विद्युद्वर्णो वा, पुरुहूतायुधचारुचित्रचापः इन्द्रधनुरिव मनोज्ञं नानावर्णं चापं यस्य स तथोक्तः प्रलयस्तनयित्नुभीमनादः प्रलयमेघ

[1] भासुरः—ख.

इव [1]भयङ्करनादः, नादोऽत्र अट्टहासः, चैद्यः शिशुपालः शरवर्षेण मुकुन्दं अभ्यवर्षत् अभिवर्षति स्म। विद्युदिन्द्रचापकृतमेघसादृश्यसम्पादनाय [2]अत्र विशेषणद्वयम् ॥ ११९ ॥

**गदया तदपोह्य बाणजालं**
**प्रतिनिर्धूतहिमप्रभाकराभः ।**
**अहितं विशिखैरहन् मुकुन्दोऽ-**
**दरवेधेऽपि दरव्यथाविमुक्तः ॥ १२० ॥**

**गदयेति**—तद्बाणजालं गदया अपोह्य निरस्य प्रतिनिर्धूतहिमप्रभाकराभः तदनन्तरमपास्तहिमसूर्यप्रभः मुकुन्दः अदरवेधेऽपि अनल्पशरताडनेऽपि दरव्यथाभ्यां भयक्लेशाभ्यां विमुक्तः [3]रहितः शत्रु अहन् हन्ति स्म। हनघातोर्लङ्। 'हल्ङ्या' (पा. सू. ६-१-६८) इत्यादिना तिलोपः "दरोऽस्त्री शङ्कभी[4]गर्तेष्वल्पार्थे त्वव्ययं दरम्" इति यादवः ॥ १२० ॥

**मुषिताम्बरमस्त्रशस्त्र[5]भूम्ना**
**दनुजारेर्दमघोषजन्मनश्च ।**
**अतिराघवरावणं तदानी-**
**मभवद्द्वैरथमाकुलेन्दुसूर्यम् ॥ १२१ ॥**

**मुषितेति**—तदानीं दनुजारेः कृष्णस्य दमघोषजन्मनः शिशुपालस्य च अस्त्रशस्त्रभूम्ना आग्नेयवारुणाद्यस्त्राणां आयुधानां च बाहुल्येन मुषिताम्बरं अपहृताकाशं अतिराघवरावणं[6] अतिक्रान्तरामरावणं तद्युद्धादप्युत्कटं आकुलेन्दुसूर्यं क्षुभितचन्द्रसूर्यं द्वैरथं युद्धं अभवत् ॥ १२१ ॥

---

[1] अहङ्कार-ख. ग. [2] अन्त्य-ख ग. [3] अभीतः-ख. [4] गर्वेष्वल्पार्थेष्वव्ययं-घ. [5] भूम्नां-घ. ङ. [6] राघवरावणावतिक्रान्तं तयोर्युद्धा-ग. ङ.

रथिनोरथ वादिनोरिवासीद्युधि
शस्त्रास्त्रमयैः प्रमाणतर्कैः ।
अपरस्परपातिभिः प्रभूतै-
रवधानेन परस्परं जिगीषा ॥ १२२ ॥

रथिनोरिति—अथ रथिनोः कृष्णशिशुपालयोः वादिनोः कथककयोरिव युधि युद्धे वादस्थानीये [1]अपरस्परपातिभिः अपरस्परैः सन्ततमविच्छिन्नैः पतद्भिः प्रभूतैः प्रचुरैः शस्त्रास्त्रमयैः शस्त्रास्त्ररूपैः प्रमाणतर्कैः प्रमाणान्यनुमानादीनि तर्काः तदनुकूलन्यायाः तैरुभयैः करणैः अवधानेन ऐकाग्र्येण परस्परं जिगीषा जेतुमिच्छा असीत् अजायत । 'अपरस्पराः क्रियासातत्ये' (पा. सू. ६-१-१४४) इति सूत्रेण अविच्छिन्नक्रियाप्रबन्धेषु वस्तुषु अपरस्परशब्दो निपातितः । 'आवश्यकाधमर्ण्ययोर्णिनिः' (.पा. सू. ३-३-७०) इत्यावश्यकार्थे णिनिप्रत्ययेन पातिन्शब्दः । तयोः खञ्जकुब्जवद्विशेषणसमासः ॥ १२२ ॥

प्रथितौ रणयज्ञयायजूकौ
धनुराम्नायसमाहितप्रयोगौ ।
[2]तदनन्यरसानतोषयेतां
नरदेवानुपहूतसन्निधातॄन् ॥ १२३ ॥

प्रथिताविति—रण एव यज्ञस्तेन यायजूकौ यजनशीलौ धनुराम्नायसमाहितप्रयोगौ धनुर्वेदोक्तक्रमेण [3]संरब्धरणयज्ञानुष्ठानौ प्रथितौ प्रसिद्धौ तौ तदनन्यरसान् तेन रणयज्ञेन अनन्यः अभिन्नः तद्रूपेण परिणतः रसो रागो येषां ते तथोक्ताः तान् तदेकदिदृक्षून्, तदनन्यरसाविति कर्तृविशेषणतयाऽपि क्वचित्पाठः, तदा तत्प्रयोगकौतुकिनावित्यर्थः, उपहूतसन्निधातॄन्

[1] उभाभ्यामपि प्रयुक्तानां शस्त्रास्त्राणां मध्येमार्गमेव च्छेदनेन अपरस्परपातिभिः शस्त्रास्त्रमयैः परस्परं जिगीषाऽऽसीदिति वाऽत्र मूलकृदाशयः स्यात्.
[2] तदनन्यरसानपोषयेतां—घ. झ. तदनन्यरसावतोषयेतां—म. मु. [3] संरब्ध—ग. ज.

रणसाहाय्यार्थमुपहूतान् सन्निधातृंश्चेति खञ्जकुब्जवत्समासः, नरदेवान् राज्ञः अतोषयेतां रणयज्ञेन सन्तुष्टानकुर्वताम्। यज्ञपक्षे सदस्यदक्षिणया वा तोषणं विवक्षितम्। तदोपहूतविशेषणमपि सफलंभवति। 'न यज्ञमवृतो गच्छेत्' इति निषेधेन दक्षिणार्थयज्ञोपसर्पणस्य आह्वानापेक्षत्वात् ॥ १२३ ॥

यदुसूर्यमवाप्य चैद्यचन्द्रः
शनकैर्यत्र बभूव मन्दधामा।
गणना न बभूव [1] कृष्णपक्षे
हतभग्नादिविकल्पितेऽपि तस्मिन् ॥ १२४ ॥

यदुसूर्यमिति—चैद्य एव चन्द्रः चैद्यानां चन्द्रवदाह्लादको वा शिशुपालः यदूनां सूर्यवत् प्रकाशकत्वात् सूर्यं कृष्णं अवाप्य यत्र विषये शनकैः मन्दधामा कृशपराक्रमः बभूव, तस्मिन् कृष्णपक्षे कृष्णबले हतभग्नादिविकल्पितेऽपि हताः मारिताः भग्नाश्छिन्नाङ्गाः पलायितादयो वा किमत्र सन्तीति तेषां विकल्पने विमर्शेऽपि गणना हतभग्नादिविषयिणी सङ्ख्या न बभूव, [2] कृष्णसैन्ये कस्यापि हननभङ्गाद्यभावादिति भावः।

अत्रार्थान्तरप्रतीत्या विरोधाभासो व्यज्यते। यत्र कृष्णपक्षे अपरपक्षे चन्द्रस्सूर्यमवाप्य सन्निकृष्य शनकैः सन्निकर्षक्रमेण मन्दधामा अल्पतेजा बभूव, तस्मिन्नपरपक्षे हतभग्नादिविकल्पितेऽपि हतं गुणितं भग्नं अंशहरणेन व्ययितं आदिशब्देन सङ्ख्यान्तरेण योजितमित्यादि गृह्यते, तद्रूपेण [3] विमृष्टेऽपि गणना न बभूवेति। पौर्णमास्यां चन्द्रसूर्ययोः परो विप्रकर्षः। ततः कृष्णप्रतिपदादि-

---

[1] कृष्णपक्षे बत नन्दादिविकल्पितेऽपि—प्र. मु. [2] कृष्णसैन्यस्यापीहहनन-भङ्गाद्यभावात्. ग. [3] विकृष्टेऽपि. ग.

क्रमेण सूर्यस्य सन्निकर्षं भजति चन्द्रः। अमावास्यायां तयोः परस्सन्निकर्ष इति स्थितिः। तस्मिन् कृष्णपक्षे ह्ननांशहरणसङ्ख्यान्तर-योजनादिगणितशास्त्रोक्तसंस्कारेण विकल्प्यमाने प्रतिपदादिका तिथि-परिच्छेदिका गणना निष्पद्यते। [1]सा तत्र न निष्पन्नेति विरोधा-भासः॥ १२४॥

**रभसभ्रमणेन हेतिराजो**
**रणनीराजनमाचचार शौरेः।**
**[2]तममंसत सैनिकास्तदानीं**
**द्विषदुत्पातमलातचक्ररूपम्॥ १२५॥**

**रभसेति**—हेतिराजः हेतीनां राजा सुदर्शनः, शिशुपालशिर-श्छेदाय भगवता नियुक्त इति भावः, रभसभ्रमणेन वेगेन यद्भ्रमणं तेन शौरेः कृष्णस्य रणनीराजनं युद्धे आरात्रिकं मङ्गलं आचचार। सैनिकाः सेनाभवा जनाः तदानीं वेगभ्रमणसमये तं हेतिराजं अलातचक्ररूपं उल्मुकमण्डलात्मकं द्विषदुत्पातं कृष्णस्य द्विषतां विनाशसूचकं विकारं अमंसत मन्यन्ते स्म॥ १२५॥

**सुकृतेन पुराकृतेन चैद्यः**
**प्रतिपन्नप्रकृतिः [3]प्रशान्तवैरः।**
**क्षणमद्भुतकृष्णरूपदर्शी**
**शिथिलाकृष्टशिलीमुखोऽवतस्थे॥ १२६॥**

**सुकृतेनेति**—पुराकृतेन प्रागाचरितेन सुकृतेन प्रतिपन्नप्रकृतिः प्राप्तसात्विकनिजस्वभावः अत एव प्रशान्तवैरः अपेतकृष्णविरोधः

---

[1] साऽत्र—घ. [2] सममंसत—घ. सममंसत सैनिकास्तदुग्रं—प्र.मु.
[3] प्रलीनवैरः—प्र. दे. मु.

चैद्यः क्षणमद्भुतकृष्णरूपदर्शी आश्चर्यं कृष्णस्वरूपं अभीक्ष्णं पश्यन् सन् शिथिलाकृष्टशिलीमुखः शिथिलं यथा तथा आकृष्टबाणः अवतस्थे ॥ १२६ ॥

समयोदयसंभृतप्रसाद-
त्रिगुणग्रन्थिचिकित्सकः श्रितानाम् ।
विलुलाव सुदर्शनेन कृष्णः
शिशुपालस्य शिरः किरीटजुष्टम् ॥ १२७ ॥

समयेति—सययोदयेन उचितकालोद्गमेन संभृतप्रसादः श्रितानां आश्रितानां त्रिगुणग्रन्थिचिकित्सकः त्रयो गुणाः सत्वादय एव गुणाः सूत्राणि तेषां ग्रन्थिः दृढसंवलनमेव ग्रन्थिः तस्य चिकित्सको वैद्यः, सत्वादीनां निवर्तकः, कृष्णः किरीटेन जुष्टं सेवितं शिशुपालस्य शिरो विलुलाव । आश्रितमोचनैकव्रतत्वात् पूर्वाश्रितं शिशुपालं मोचयिष्यन् तस्मिन् केनापि सुकृतेन प्रशान्तवैरे सत्वोद्रेकेण निजमूर्तिमादरेण पश्यति सति अयमेवास्य मुक्तिदानसमय इति प्रसन्नो भूत्वा तस्य शिरश्चिच्छेदेत्यर्थः ॥ १२७ ॥

सह भृत्यगणैस्समित्रवर्गे
निहते चेदिपतौ निवृत्तखेदाः ।
अभितुष्टुवुरादरेण देवा
नरदेवाश्च तमीड्यमादिदेवम् ॥ १२८ ॥

सहेति—समित्रवर्गे सुहृद्राजयूथसहिते चेदिपतौ भृत्यगणैस्सह निहते निवृत्तखेदाः देवाः इन्द्रादयः नरदेवाः राजानश्च ईड्यं स्तुत्यं तमादिदेवं आदरेणाभितुष्टुवुः ॥ १२८ ॥

हरिणा निधनं तदीक्षणं च
प्रयतामप्रतिबोधसंप्रयुक्तम् ।
जगदद्भुतदिव्यभोगहेतुः
प्रतिबोधे तु दुरत्यया विमुक्तिः ॥ १२९ ॥

हरिणेति—हरिणा निमित्तेन निधनं मरणं प्रयतां म्रियमाणानां तदीक्षणं हरेरवलोकनं च अप्रतिबोधसंप्रयुक्तं तद्विषयबोधाभावेन सहितं जगदद्भुतस्य लोकाश्चर्यस्य दिव्यभोगस्य हेतुः । प्रतिबोधे तद्विषयबोधे तु सति विमुक्तिः दुरत्यया दुरतिक्रमा, अनीप्सिताऽप्यवश्यं प्राप्यत इत्यर्थः । अताश्शिशुपालस्य हरिणा निधनं तदवलोकनं च पूर्वपुण्यवशात्तदवबोधसहितमासीदिति स मुक्त इति भावः ॥ १२९ ॥

रभसेन रथाङ्गलूनकण्ठा-
द्वपुषश्चेदिपतेरुदीयमानम् ।
तपनायुतसन्निभप्रकाशं
यदुवीरस्य तनुं विवेश तेजः ॥ १३० ॥

रभसेनेति—रथाङ्गलूनकण्ठात् चक्रच्छिन्नकन्धरात् चेदिपतेः शिशुपालस्य वपुषः रभसेन वेगेन उदीयमानं उद्गच्छत् तपनायुतसन्निभप्रकाशं सूर्याणामयुतेन सदृशप्रकाशं तेजः यदुवीरस्य कृष्णस्य तनुं विवेश ॥ १३० ॥

सहसा हरिचक्र[1]संप्रयोग-
क्षणसंप्राप्तविपाकया नियत्या ।
अनघस्थितिमन्तिमामवस्थां
स तदा संयमिनामवाप चैद्यः ॥ १३१ ॥

सहसेति—सः चैद्यः शिशुपालः तदा सहसा अतर्कितं यथा तथा हरिचक्रस्य [2]संप्रयोगक्षणे संबन्धक्षण एव संप्राप्तविपाकया

[1] संप्रयोगात् क्षण—घ. [2] संप्रयोगात् संबन्धात् क्षणे—घ.

लब्धफलौन्मुख्यया नियत्या भाग्येन अनघस्थितिं [1]दुःखरहितावस्थानां संयमिनां योगिनां अन्तिमां चरमां अवस्थां मुक्तिं अवाप ॥ १३१ ॥

**अवलोक्य तदद्भुतं महीयः**
**क्षितिपालैरमरैस्सलोकपालैः ।**
**मुनिभिश्च मुहुःकृतावमर्शै-**
**[2]रिदमित्थंत्विितिनिश्चयो न लेभे ॥ १३२ ॥**

**अवलोक्येति**—महीयः महत्तरं तदद्भुतं शिशुपालशरीरोत्थितस्य तेजसः कृष्णतनुप्रवेशरूपमाश्चर्यं अवलोक्य क्षितिपालैः राजभिः सलोकपालैः इन्द्रादिलोकपालसहितैः अमरैः मुनिभिश्च मुहुःकृतावमर्शैः किं शिशुपालशरीरे कृष्णतेजः स्थितं पुनस्तत्र प्रविष्टम्? उत तदयिमेव तेजः? कथं तदीयतेजसः कृष्णे प्रवेशः? इत्यादिक्रमेण पुनःपुनः कृतविचारैरपि इदमित्थंत्विितिनिश्चयः इदमित्थमेवेतिनिश्चयः न लेभे न लब्धः ॥ १३२ ॥

**इति संभृतवीरसप्ततन्तुः**
**कृतिना धर्मभुवा कृतानुयात्रः ।**
**विनिवर्त्य तमग्रजानुवर्ती**
**परमेशस्स्वपुरीं पुनः प्रतस्थे ॥ १३३ ॥**

**इतीति**—इति उक्तप्रकारेण संभृतः वीराणां सप्ततन्तुः मखः सङ्ग्रामो येन स तथोक्तः "सप्ततन्तुर्मखः क्रतुः" इत्यमरः, कृतिना कृतकृत्येन निर्वर्तितराजसूयेन धर्मभुवा भूर्भवनं भावे क्विप्, धर्मात् भूः यस्य तेन युधिष्ठिरेण कृतानुयात्रः किञ्चिद्दूरं कृतानुव्रजनः परमेशः तं धर्मभुवं विनिवर्त्य अग्रजानुवर्ती बलदेवमनुवर्तमानस्सन् पुनः स्वपुरीं प्रति प्रतस्थे ॥ १३३ ॥

---

[1] 'दुःखरहितावस्थानरूपां' इति पाठः स्यात्.

[2] रिदमित्थंत्वविनिश्चयो—ग. ङ.

जगद्वन्द्यः प्राप्तो जलधिरशनामात्मनगरीं
[1]यथार्हं संसृष्टो यदुभिरखिलैरार्चितपदः ।
धरित्री[2]भारार्धव्यपनयनधर्मे धृतमति-
र्महिष्या रुक्मिण्या महित[3]चरितस्साधु मुमुदे ॥ १३४ ॥

जगदिति—जगतां वन्द्यः जलधिः रशना रशनावत् परितः स्थितो यस्यास्तां आत्मनः नगरीं द्वारकां प्राप्तः यदुभिः यादवैः वसुदेवादिभिः यथार्हं यथोचितं तत्तद्वयोऽनुसारिवन्दनालिङ्गनाशीर्वादपूर्वकं संसृष्टः संगतः अखिलैः अमात्यादिभिस्सर्वैः अर्चितपदः पूजितचरणः महितचरितः श्लाघ्यचरित्रः कृष्णः धरित्रीभारार्धव्यपनयनधर्मे अपनीतावशिष्टस्य धरित्रीभारार्धस्य व्यपनयनमेव धर्मस्तस्मिन् नरकवधादौ कृतमतिस्सन् तत्र द्वारकायां रुक्मिण्या महिष्या देव्या सह मुमुदे मोदते स्म । शिखरिणीवृत्तम् ॥ १३४ ॥

अलघुभिरपराधैराशरीरं प्रवृत्तैः
श्रितमपि शिशुपालं शृण्वतामप्यसह्यैः ।
विधिवशनियतेन व्याजमात्रेण मुञ्च-
न्नजनि परिजनानां शौरिराश्वासपात्रम् ॥ १३५ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेंकटनाथस्य
श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि
महाकाव्ये पञ्चदशस्सर्गः.

अलघुभिरिति—अलघुभिः गुरुभिः आशरीरं शरीरोत्पत्तिमारभ्य प्रवृत्तैः शृण्वतां तटस्थानामप्यसह्यैः अपराधैः श्रितं आश्रितमपि शिशुपालं विधिवशनियतेन दैवायत्ततया अनुस्यूतेन न तु वैधबुद्ध्याऽनुष्ठितेन व्याजमात्रेण स्वानुस्मरणरूपापदेशेनैव मुञ्चन् शौरिः [4]परिजनानां भक्त्या परिसरतां जनानां आश्वासस्य पात्रमजनि

---

[1] यथार्हं संमानैर्यदुभिः—घ. [2] (भारस्य व्यपनयन)—दे. मु. [3] (चरितस्तत्र मुमुदे)—दे. मु. [4] परिजनानामाश्वासपात्रमजनि.

द्वेषकृतानुस्मरणमात्रेणापि मुक्तिं प्रयच्छन् भक्त्या मुक्तिं कैमुतिकन्यायेन प्रयच्छेदिति विश्वासास्पदमभूत्। शिशुपालं मुञ्चन्निति धेनुं मुमोचेतिवत्प्रयोगः। अजनीति जनेः कर्तरि लुङ् 'दीपजनबुध' (पा. सू. ३-१-६१) इत्यादिना वैकल्पिकश्चिण्। मालिनीवृत्तमेतत् ॥ १३५ ॥

इति [1]श्रीमद्भारद्वाजकुलतिलकविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनुना
अप्पयदीक्षितेन कृते यादवाभ्युदयव्याख्याने
पञ्चदशस्सर्गः [2]॥

———

'[1] इति श्रीमद्राजाधिराज-राजपरमेश्वर-निजभुजबलनिर्जितनिखिलभूमण्डल-पञ्चतिरुवटिरायभञ्जन-हयपतिसप्ताङ्गहरण-देवभूदेव-भूमीसहोदर-श्रीमन्महामण्डलेश्वर-रामराजचिन्नतिम्मयदेवमहाराजनामाङ्किते'.
—इति अधिकं ज.-कोशे दृश्यते.

[2]"चित्रं लोकय तिम्मयप्रभुवर प्रस्थानभेरीघन-
ध्वानस्त्वत्कटके महाम्बुधिरवस्फारो यदा जृम्भते।
धावद्वैरिकलत्रदृग्जलमयी वृष्टिस्तदा जायते
कान्तारे बहुला तृणालिरथ तत्सौधेषु संवर्धते ॥
चित्रं लोकय चिन्नतिम्मनृपते कान्तारखिन्नद्विषत्-
कान्तादृक्सलिलैः प्रतापदहनः प्रोद्दीप्यते ते भृशम्।
तेन व्याप्नुवता तदीयनगरे संवर्ध्यते काननं
तेन द्वेषिषु तापवृद्धिरमितच्छायेन तन्तन्यते ॥"
—इत्यन्ते ज.-कोशेऽधिकं दृश्यते.

## षोडशस्सर्गः

ऐरावतमथारुह्य श्वेताद्रिमिव जङ्गमम् ।
पुरीं द्वारवतीं शौरेराजगाम पुरन्दरः ॥ १ ॥

अथ नरकासुरवधोपोद्धातमिन्द्रागमनं प्रस्तौति—

**ऐरावतमिति**—अथ शिशुपालवधान्तदेवकार्यानन्तरं पुरन्दरः इन्द्रः जङ्गमं सञ्चारिणं श्वेताद्रिमिव स्थितं ऐरावतमारुह्य शौरेः पुरीं द्वारवतीमाजगाम ॥ १ ॥

अपत्यभावमापन्नमात्मानममृतोदधेः ।
निमेषरहितैः पौरैर्देव[1]भूतैर्निरीक्षितम् ॥ २ ॥

**अपत्येति**—अमृतोदधेः क्षीराब्धेः "[2]मोक्षे हेमनि गोरसे" इत्यमृतनानार्थेषु यादवः, अपत्यभावमापन्नं पुत्रत्वं प्राप्तं आत्मानं "आत्मा वै पुत्रनामाऽसि" इति श्रुतिः, इह धावल्यमहत्त्वोत्कर्ष-व्यञ्जनाय तदात्मत्वोक्तिः, निमेषरहितैः कौतुकान्निर्निमेषैः अत एव देवभूतैः देवत्वं प्राप्तैरिव स्थितैः पौरैः [3]पुरभवैर्जनैः निरीक्षितं, ऐरावतामिति पूर्वश्लोकेन सम्बन्धः ॥ २ ॥

एवमष्टादशभिः श्लोकैरैरावतो वर्ण्यते—

अदृश्यं मन्दपुण्यानाममन्दप्रीतिदायिनम् ।
आत्तदेहमिव स्वर्गमासेचनकदर्शनम् ॥ ३ ॥

**अदृश्यमिति**—मन्दपुण्यानां अल्पभाग्यानां अदृश्यं तत्र निमित्तं अमन्दप्रीतिदायिनं दर्शनमात्रेण महानन्दप्रदं आत्तदेहं गृहीत-शरीरं स्वर्गमिव आसेचनकदर्शनं आसेचनकं कदाऽपि तृप्तेरजनकं दर्शनं यस्य तत् 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इति तृप्त्य-

---

[1] भूतैरिवेक्षितम्—ट. प्र. दे. मु. [2] 'मोक्षेऽब्जे हेम्नि गोरसे' इति मुद्रितयादवकोशे दृश्यते. [3] पुरेभवैर्जनैरीक्षितम्—क. ख. ग. घ. ट.

जनकदर्शनाविषयेऽनुशिष्टस्यासेचनकशब्दस्य लक्षणया [1] तृप्त्यजनके प्रयोगः। असेचनकमिति ह्रस्वादिरिति सर्वानन्दः ॥ ३ ॥

**महनीयपरिष्कारं [2] वल्गुध्वजमतल्लिकम्।**
**महोत्सवमिवाशानामाशाभ्यधिकसंपदम् ॥ ४ ॥**

**महनीयेति**—महनीयाः पूज्याः रम्याः परिष्कारा भूषणानि यस्येति तथोक्तः वल्गुर्मनोहारिणी ध्वजमतल्लिका प्रशस्तपताका यस्य तं, मतल्लिकामचर्चिकादयः प्रशस्तवाचिनः, अत एव 'प्रशंसावचनैश्च' (पा. सू. २-१-६६) इति समासः, आशानां मनोरथानां महोत्सवमिव स्थितं, तत्परिपूर्तिहेतुत्वात्, आशाभ्यधिकसंपदं मनोरथातिशायिसौन्दर्यादि[3]समृद्धिकं अस्खलितगतिभिरपि मनोरथैर्यावती संपद्गोचरीकर्तुं शक्यते तदतिशायिसम्पत्कमिति सम्पत्प्रकर्षोक्तिः ॥ ४ ॥

**उदधेरिव मन्थेन पीडितस्य समुत्थितैः।**
**दृढलग्नैरिवोत्पत्तौ दीप्तं शोणितबिन्दुभिः ॥ ५ ॥**

**उदधेरिवेति**—मन्थेन मन्थानरूपेण पर्वतेन पीडितस्येव क्षतस्येव स्थितस्य उदधेः क्षीरोदस्य समुत्थितैः उत्पतितैः उत्पत्तौ निजोत्पत्तिसमये दृढलग्नैः दृढमङ्गेषु संसक्तैः शोणिताबिन्दुभिः असृग्बिन्दुभिरिव स्थितैः शोणितबिन्दुभिः [5] अरुणैर्बिन्दुभिरलङ्कारैस्तिलकैः दीप्तं शोणितबिन्दुभिरित्यर्थद्वयपरतन्त्रेणोद्धारितम्। [6] उदधेरिति षष्ठ्याः शोणितबिन्दुभिरित्यत्रान्वयः। समुत्थानापादानत्वमुदधेरर्थात्। असृक्क्षरणापादकं क्षतत्वमुदधेरवास्तवमेव सम्भावित-

---

[1]तृप्त्यजनके दर्शने प्रयोगः—ञ. [2] वल्गद्रुज—झ. [3]समृद्धि—ट. [4] 'क्षतस्येव' इति घ. ज. ट.—कोशेषु न दृश्यते. [5] अरुणबिन्दुभिः प्रकारैस्तिलकैर्दीप्तं—ञ. [6] यद्यप्युदधेरिति पञ्चम्यन्तमपि भवति, तथाप्यत्र पीडितस्येति तद्विशेषणानुगुण्यात् षष्ठ्यन्तं तदित्यभिप्रायः.

मित्युत्प्रेक्षायामिवशब्दः। यद्यपि शोणितबिन्दुभिरिवेति इवकारेणैव विशिष्टोत्प्रेक्षा लभ्यते। तथापि अनेकेवोपमायामिव अवयवेष्वपि पृथगुत्प्रेक्षाविवक्षया इवकार उपपद्यते ॥ ५ ॥

**दैत्यदानवदर्पघ्नैर्दन्तैर्दलितमन्दरैः।**
**सिंहानामपि हन्तारं सिंहवक्त्रविभूषणैः ॥ ६ ॥**

**दैत्येति**—दैत्यदानवदर्पघ्नैः—[1] दितिर्दनुरिति द्वे असुरमातरौ, तयोरपत्यानि क्रमेण दैत्या दानवाश्च, तेषां दर्पस्य हन्तृभिः दलितमन्दरैः वप्रक्रीडासु विदारितमन्दरपर्वतैः सिंहवक्त्राणि सिंहवक्त्रप्रतिरूपकाणि विभूषणानि येषां तैः दन्तैः सिंहानामपि हन्तारं "ऐरावतश्चतुर्दन्तः" इति प्रसिद्धेः तद्बहुत्वमुक्तम्। सिंहवक्त्रशब्दात् "इवे प्रतिकृतौ" (पा. सू. ५-३-९६) इति कन्प्रत्ययस्य [2] देवपथादित्वाल्लुपि सति सिंहवक्त्रशब्दः सिंहवक्त्रप्रतिरूपकवाची ॥ ६ ॥

**मेरुकल्पेन रूपेण मेदिनीधृतिहेतुना।**
**त्रिदशप्रीतिदातारं स्त्यानसिन्दूरधातुना ॥ ७ ॥**

**मेरुकल्पेनेति**—मेदिनीधृतिहेतुना भूमेर्धारणस्य हेतुना स्त्यानस्संहतस्सान्द्रः सिन्दूररूपो धातुर्यस्मिंस्तेन बहुसिन्दूरधातुचित्रितेन अत एव मेरुकल्पेन महामेरुसदृशेन रूपेण आकारेण त्रिदशानां प्रीतेर्दातारम् ॥ ७ ॥

**मूर्ध्ना विपुलतुङ्गेन मेनकास्तनबन्धुना।**
**दधतं मौक्तिकाकल्पं गङ्गाबुद्बुदनिर्मलम् ॥ ८ ॥**

**मूर्ध्नेति**—विपुलतुङ्गेन [3] विशालेनोन्नतेन च अत एव मेनकाया अप्सरसः स्तनस्य बन्धुना सदृशेन [4] मूर्ध्ना कुम्भेन गङ्गाबुद्बुदमिव निर्मलं मौक्तिकाकल्पं दधतम् ॥ ८ ॥

---

[1] दितिदनू—ञ. [2] 'देवपथादिभ्यश्च' (पा सू. ५-३-१००) इति सूत्रेणेति भावः. [3] विशालोन्नतेन—ग. घ. ज. ट. [4] मूर्ध्ना गङ्गा—घ. ज.

अजहद्भृङ्गगीतेन [1] गर्जाडम्बरशोभिना ।
स्वकान्त्या कर्णतालेन क्लृप्तसङ्गीतखेलनम् ॥ ९ ॥

अजहदिति—अजहन्ति भृङ्गगीतानि यं तेन गर्जाडम्बरशोभिना गर्जा बृंहितमेव आडम्बरः तूर्यरवः तेन शोभिना कर्णतालेन कर्णकलापेन, "कर्णशब्दात्परस्तालः कलापार्थस्तु दन्तिनाम्" इति यादवः, तालेन कांस्यवाद्यविशेषेणेति प्रतीयते, स्वकान्त्या नर्तकीस्थानीयया च क्लृप्तसङ्गीतखेलनं निर्मितसङ्गीतलीलं "गीतं वाद्यं तथा [2] नृत्तं त्रयं सङ्गीतमुच्यते" इति शार्ङ्गदेवः ॥ ९ ॥

नर्तयन्तममर्त्यानां नेत्रकौतुकसूतिकाम् ।
नासां त्रिदशनारीणामूरुनिर्माणमातृकाम् ॥ १० ॥

नर्तयन्तामिति—अमर्त्यानां देवानां, सदा पश्यतामपीति भावः, नेत्रकौतुकसूतिकां दृशां दिदृक्षातिशयस्योत्पादिकां त्रिदशनारीणां देवस्त्रीणां ऊरुनिर्माणस्य मातृकां तदतिशायिसौन्दर्यामिति यावत्, नासां शुण्डां नर्तयन्तं चालयन्तम् ॥ १० ॥

मङ्गलत्वमिवेच्छद्भिर्हेमशङ्खादिमण्डनैः ।
आश्रितं रत्नपूर्णेन कुम्भेन च महीयसा ॥ ११ ॥

मङ्गलत्वमिति—हेमशङ्खादिमण्डनैः [3] हेम आभरणरूपं सुवर्णं, शङ्खः कर्णयोर्लिखितः, आदिशब्देन चामरादिग्रहणम्, तद्रूपैः मण्डनैः रत्नपूर्णेन रत्नाभरणपूरितेन अन्तर्मौक्तिकपूर्णेन वा महीयसा महत्तरेण कुम्भेन च [4] मङ्गलत्वमिच्छद्भिरिव आश्रितम्, हेमशङ्खपूर्णकुम्भादयो मङ्गलद्रव्यत्वेन प्रसिद्धाः ।; ते परं मङ्गलमेनमाश्रित्य मङ्गलत्वं लिप्समाना आश्रयन्त इवेत्युत्प्रेक्षा ॥ ११ ॥

---

[1] गर्जाबृंहितशोभिना—ग्र. मु. [2] नृत्तं यत्र संगीत—ट. [3] हेमाभरणरूपः सुवर्णशङ्खः—ग. घ. ज. ट. [4] मङ्गलत्वमिच्छद्भिर्लिप्समानैराश्रयन्तमिवेत्युत्प्रेक्षा—घ.

विभूतिशरदम्भोदैः कीर्तिवल्लीगुलुच्छकैः ।
कान्तिसागरकल्लोलैः सपक्षमिव चामरैः ॥ १२ ॥

विभूतीति—विशिष्टा भूतिः गजाङ्गपत्रलेखा, विभूतिः आभरणादिसम्पद्वा "भूतिर्मातङ्गशृङ्गारे स्थितौ भस्मनि संपदि" इति विश्वः, सैव शरत्तस्या अम्भोदैः [1]तदुदितैर्धवलमेघैः कीर्तिवल्ली[2]गुलुच्छकैः तत्कीर्तिरेव वल्ली [3]तस्याः गुलुच्छैः स्तबकैः कान्तिसागरकल्लोलैः कान्तिरेव सागरः तस्य कल्लोलैः महोर्मिभिः चामरैः सपक्षं पतत्रसहितमिव स्थितम् ॥ १२ ॥

सहजं प्रभया चन्द्रं वारुणीं मदसंपदा ।
सूचयन्तं स्वमूर्त्या च सुधां शुद्धानुभाव्यया ॥ १३ ॥

सहजमिति—प्रभया चन्द्रं सहजं सूचयन्तं चन्द्रसदृशप्रभाशालित्वेन तस्य सहोदरत्वं प्रकटयन्तमिति यावत्, एवमुत्तरवाक्यानामप्यर्थः, सहजमित्यस्य स्त्रीलिङ्गविपरिणामेन उत्तरत्रानुषङ्गः, मदसंपदा मदसमृद्ध्या वारुणीं सुरां सहजां सूचयन्तं, शुद्धानुभाव्यया अवदाततया दृश्यया च स्वमूर्त्या सुधां च सहजां सूचयन्तम्, सुधाऽप्यवदाता उपभोग्या चेति भावः । प्रभया चन्द्रं मदसम्पदा वारुणीं मूर्त्या सुधां च सहजं सहोदरवर्गं सूचयन्तमित्येकवाक्यत्वेन वा [4]योजना । तदा सहजमित्यस्य 'पुमांस्त्रिया' (पा. सू. १-२-६७) इति पुल्लिङ्गशेषता । जातावेकवचनम् ॥ १३ ॥

जगदामोदजनकं दानार्द्रकरपुष्करम् ।
[5]दभ्रयन्तामिवौदार्याद्दिव्यपादपसंपदम् ॥ १४ ॥

जगदिति—जगतामामोदस्य हर्षस्य मदेन [6]सौरभस्य वा जनकं दानार्द्रकरपुष्करं "पुष्करं करिहस्ताग्रे" इत्यमरः, मदजलार्द्र-

---

[1] तदुचितै–अ. [2] गुलुच्छकैः कीर्तिरेव–घ. ट. [3] तस्याः सुभगैः गुच्छैः–ग. तस्याः स्तबकैः–अ. [4] योजनम्, सहज–घ. ट. [5] दर्शयन्तम्–अ.मु. [6] सौरभ्यस्य–ग. घ. ज. ट.

कराग्रं विश्राणनजलार्द्रकरपद्मामित्यपि [1]प्रतीयते, औदार्यात् औदार्यं महत्त्वं तदेव दातृत्वमिति श्लेषेणाध्यवसीयते "उदारो दातृमहतोः" इत्यमरः, तेन दिव्यपादपसंपदं कल्पवृक्षस्य सदा दानेन तत्कृतेन जगदामोदनेन च कृतमुत्कर्षं [2]दभ्रयन्तं दभ्रां फल्गुं कुर्वन्तम् ॥ ॥ १४ ॥

[3]उदग्रबहुदन्तांशुं बृंहितव्याप्तदिङ्मुखम् ।
हसन्तमिव दिङ्नागानन्यानतिबलानपि ॥ १५ ॥

उदग्रेति—उदग्रबहुदन्तांशुं उद्गतबहुलदन्तकिरणं बृंहितव्याप्तदिङ्मुखं [4]स्वशब्दविततनिखिलदिङ्मूलं अत एव दन्तकिरणोद्गमबृंहिताभ्यां अतिबलान् महाबलान् अन्यान् दिङ्नागान् पुष्पदन्तादीन् [5]हसन्तं उपहसन्तमिव स्थितम् ॥ १५ ॥

उद्वहन्तं कदलिकां काञ्चनीं किङ्किणीफलाम् ।
वप्राभिघातभीतस्य सुमेरोरुपदामिव ॥ १६ ॥

उद्वहन्तमिति—काञ्चनीं हिरण्मयीं किङ्किण्यः क्षुद्रघण्टा एव फलानि यस्यास्तां वप्राभिघातभीतस्य वप्रक्रीडासु सानूनामभिहननात् भीतस्य सुमेरोः उपदां उपहारमिव स्थितां कदलिकां पताकामेव रम्भावृक्षमुद्वहन्तं "कदली वैजयन्त्यां च रम्भायां हरिणान्तरे" इति विश्वः। मेरौ वृक्षाः प्रायो हिरण्मया इति पताकायाः श्लेषेण रम्भावृक्षत्वेनाध्यवसिताया मेरूपहारत्वेनोत्प्रेक्षा । काञ्चनशब्दात् 'प्राणिरजतादिभ्योऽञ्' (पा. सू. ४-३-१५४) इति विकारार्थे अञ्प्रत्यये "टिड्ढाणञ्' (पा. सू. ४-१-१५) इत्यादिना ङीपि च सति काञ्चनीशब्दः साधुः ॥ १६ ॥

---

[1] प्रतीयते, औदार्य—ग. [2] 'अल्पं सूक्ष्ममणु स्तोकं दभ्रं दह्वरमर्हकम्" इति यादवकोशोऽत्र बोध्यः. [3] उदग्रबाहु—ग्र. मु. [4] सशब्दविदित—घ. ट. [5] हसन्तं अपहसन्त—ञ. ट.

चित्रकम्बलसञ्छन्नं कान्तं कनककक्ष्यया ।
विद्युतेव परिष्वक्तं वासरान्तशरद्घनम् ॥ १७ ॥

चित्रेति—चित्रेण कम्बलेन सञ्छन्नं कनककक्ष्यया काञ्चनवरत्रया कान्तं "[1]चूषा कक्ष्या वरत्रा स्यात्" इति वैजयन्ती, अत एव विद्युता परिष्वक्तं वासरान्तशरद्घनमिव स्थितम् । स्वतो धवलत्वात् कम्बलारुण्ययोगाच्च दिवसान्तशरन्मेघस्य विशिष्टस्य उपमानता ॥ ॥ १७ ॥

अवधिं दर्शनीयानामाकल्प[2]मनघं दिवः ।
जीवातुं देवसैन्यानां दर्पभङ्गं विरुन्धताम् ॥ १८ ॥

अवधिमिति—दर्शनीयानां अतिरमणीयानां अवधिं परां काष्ठां "दर्शनीयं तदानन्दसान्द्रो यत्र मनोलयः" इति वैजयन्ती, दिवः स्वर्गस्य अनघं आकल्पं रम्यं भूषणं, देवसैन्यानां जीवातुं जीवनौषधं, विरुन्धतां विरोधिनां असुरादीनां दर्पभङ्गं, तद्धेतुत्वात् तद्व्यपदेशः, दर्पभञ्जकमित्यर्थः ॥ १८ ॥

घण्टायुगलनादेन नगेन्द्रेष्वनुनादिना ।
क्षरन्तममृतक्ष्वेडौ कर्णेष्वमरतद्विषाम् ॥ १९ ॥

घण्टेति—नगेन्द्रेषु पर्वतप्रवरेषु अनुनादिना प्रतिध्वनता घण्टा[3]युगलस्य नादेन अमराणां तद्विषां [4]असुराणां च कर्णेषु क्रमात् अमृतक्ष्वेलौ सुधाविषे क्षरन्तं, घण्टाशब्दश्रवणमात्रेण सुरासुराणां जीवनतदुत्क्रमणे जनयन्तमित्यर्थः । एतत्पर्यन्तविशेषणानामैरावतमिति प्रथमश्लोकस्थविशेष्येणान्वयः ॥ १९ ॥

---

[1] दूष्या कक्ष्या–घ. ज. ट. [2] मधिकं–घ. ट. [3] युगलनादेन. ग, [4] असुरादीनां च–ग. ञ.

**महता मदगन्धेन [1] तस्य विग्ना विबभ्रमुः ।**
**उत्खातविपुलस्तम्भा नागास्त्रुटितशृङ्खलाः ॥ २० ॥**

**महतेति**—तस्य ऐरावतस्य महता मदगन्धेन विग्नाः भीता नागाः [2] द्वारकागजाः उत्खातविपुलस्तम्भाः [3] उद्धुतमहालानाः त्रुटितशृङ्खलाः भिन्ननिगलाश्च सन्तः विबभ्रमुः [4] विभ्राम्यन्ति स्म ॥ २० ॥

**स तं द्वारवतीद्वारे समवस्थाप्य सानुगम् ।**
**आससाद हरेस्स्थानमवज्ञातत्रिविष्टपम् ॥ २१ ॥**

[5] **स इति**--सः इन्द्रः सानुगं अनुयायिभिस्सहितं तं ऐरावतं द्वारवतीद्वारे द्वारकाया गोपुरद्वारे समवस्थाप्य अवज्ञातत्रिविष्टपं अवमतस्वर्गं स्वर्गादधिकं हरेः कृष्णस्य स्थानं आससाद प्राप ॥ २१ ॥

**शुभानामिव साम्राज्यं श्वेतद्वीपमिवापरम् ।**
**निवेदितसमाहूतः प्रासादं प्राविशत्प्रभोः ॥ २२ ॥**

**शुभानामिति**—निवेदितसमाहूतः आवसरिकैः प्रथमं भगवते निवेदितः ततस्समाहूतः शक्रः शुभानां मङ्गलानां [6] साम्राज्यमिव स्थितं सकलमङ्गलनिदानं अपरं [7] श्वेतद्वीपमिव च स्थितं विभोः भगवतः प्रासादं राजगृहं प्राविशत् ॥ २२ ॥

**स तेन विहितां शक्रः प्रतिगृह्य प्रियार्हणाम् ।**
**निजगाद निजां भीतिं गद्गदोद्गमया गिरा ॥ २३ ॥**

**स इति**--सः शक्रः तेन कृष्णेन [8] विहितां कृतां प्रियार्हणां प्रियां पूजां [9] प्रतिगृह्य गद्गदोद्गमया हर्षेण भयेन व्रीलेन वा स्खलितप्रसरणया गिरा निजां भीतिं निजगाद ॥ २३ ॥

---

[1] तस्योद्विग्ना—ग्र. दे. मु. [2] द्वारकानागाः—घ. ज. ट. [3] उद्धूत—ङ. [4] विभ्रान्ताः—घ. ट. [5] स तमिति । सानुगं—घ. ट. [6] साम्राज्यमिव सकल—ग. घ. ञ. ट. [7] श्वेतद्वीपमिव स्थितं—ग. घ. ङ. ट. घ. ट. ग्र. दे. मु. [8] विहितां प्रिया—घ. ट. [9] परिगृह्य—ग. ञ.

**दयनीयेषु देवेषु देवदेव त्वयाऽधुना ।**
**अपाङ्गाः परिपात्यन्तामनुक्रोशानुवर्तिनः ॥ २४ ॥**

**दयनीयेष्विति**—हे देवदेव देवानामपि देव अधुना इदानीं [1]त्वया दयनीयेषु रक्षणीयेषु देवेषु अनुक्रोशानुवर्तिनः कृपानुवर्तिनः अपाङ्गाः अपाङ्गदर्शनानि परिपात्यन्ताम् । प्रार्थनायां लोट् ॥ २४ ॥

दीनरक्षार्थ एव चायं तवावतार इत्याह—

**सुषुवे नरसिंहं त्वां भक्त[2]प्रह्लादनोन्मुखम् ।**
**रक्षार्थमिह दीनानां रत्नस्थूणेव देवकी ॥ २५ ॥**

**सुषुव इति**—भक्तप्रह्लादनोन्मुखं भक्तानामाह्लादजनने उन्मुखं, भक्ते प्रह्लादे वत्सलमिति नृसिंहावतारपक्षे, नरसिंहं नरश्रेष्ठं, नृसिंहाव[3]ताररूपमित्यपि श्लेषेण प्रतीयते, एवंभूतं त्वां इह जगति दीनानां [4]रक्षार्थं देवकी रत्नस्थूणा हिरण्यकशिपुमन्दिरगता [5]रत्नमयी स्थूणेव सुषुवे सूतवती ॥ २५ ॥

कुत इदानीं वो भयमापन्नं, येन रक्षार्थना तत्राह—

**नाथ त्वयि निराबाधं त्रिलोकीं त्रातुमागते ।**
**नरको नाम दैत्येन्द्रः कदर्थयति नाकिनः ॥ २६ ॥**

**नाथेति**—हे नाथ त्वयि निराबाधं यथा तथा त्रिलोकीं त्रातुमागते [6]अवतीर्णे सत्यपि इति अपिशब्दोऽध्याहार्यः, नरको नाम नरक इति प्रसिद्धो दैत्येन्द्रः नाकिनः देवान् कदर्थयति पीडावतः करोति । कुत्सितोऽर्थः कदर्थः पीडा "कोः कत्तत्पुरुषे"

---

[1] मया—घ. झ. [2] प्रह्लादसंमुखम्—घ. ट. ग्र. दे. मु. [3] तारमित्यपि—घ. ट. [4] रक्षणार्थं—घ. [5] रत्नस्थूणेव—ग. घ. ट. [6] अवतीर्णेऽपीत्यपिशब्दो—ङ. ञ. ट.

(पा. सू. ६·३-१०१) इति [1]कुत्सितार्थस्य कुशब्दस्य कदादेशः। ततः कदर्थशब्दात् मतुबन्तात् 'तत्करोति' (गणसू. २०४) इति णिचि [2]णाविष्ठवद्भावान्मतुपो लुक् ॥ २६ ॥

धर्मसूकररूपस्य तवासौ क्षमयाऽन्वये।
उत्पात इव भूतानामुद्बभूव भयानकः ॥ २७ ॥

धर्मेति—धर्मसूकररूपस्य यज्ञवराहमूर्तेः तव क्षमया धरणीदेव्या अन्वये सम्पर्के भूतानां उत्पात इव भयानकः भयङ्करः असौ नरकः उद्बभूव उद्भूतः ॥ २७ ॥

जननी सर्वभूतानां पत्नी तव वसुन्धरा।
प्रसूय नरकं देवी दूयते त्वदुपेक्षया ॥ २८ ॥

जननीति—सर्वभूतानां जरायुजाण्डजादिसर्वप्राणिनां जननी तव पत्नी वसुन्धरा भूदेवी नरकं प्रसूय जनयित्वा त्वदुपेक्षया दूयते क्लिश्यते। त्वयोपेक्षितो नरको जननीमपि बाधत इत्यर्थः ॥ २८ ॥

न हिरण्यहिरण्याक्षौ न मधुर्न च कैटभः।
उपमानपदे तस्य त्वच्छक्तिजनितात्मनः ॥ २९ ॥

न हिरण्येति—त्वच्छक्त्या जनितात्मनः उत्पादितशरीरस्य तस्य नरकस्य उपमानपदे उपमानस्थाने हिरण्यहिरण्याक्षौ न भवतः, न मधुर्न च कैटभः। त्वद्वीर्योत्पन्नत्वादयं हिरण्यादीनतिशेत इत्यर्थः ॥ २९ ॥

एष कल्पान्तवृत्तान्त[3]मिदानीन्तनयन्निव।
विधुनोति त्वदालम्बं ब्रह्मस्तम्बमिदंपरः ॥ ३० ॥

एष इति—एषः नरकः कल्पान्तवृत्तान्तं प्रलयकालवार्तां इदानीन्तनयन् इदानींतनं कुर्वन्निव त्वदालम्बं त्वदवलम्बनं [4]ब्रह्मस्तम्बं

[1] कुत्सार्थस्य—ज. [2] 'णाविष्ठवत्प्रातिपदिकस्य' (वा. ४२०८) इति वार्तिकेनेति भावः. [3] मिदानीं जनयन्निव—मु. [4] ब्रह्मस्तम्बं ब्रह्माण्डं ब्रह्मादि—घ.

ब्रह्मादिस्तम्बपर्यतमखिलं जगत् "ब्रह्मादिस्तम्बपर्यन्तं ब्रह्मस्तम्बोऽखिलं जगत्" इति शब्दरत्नाकरः, इदम्परः विधूननैकपरस्सन् विधुनोति कम्पयति । कल्पान्त इव ब्रह्माण्डं सर्वमपि ततः कम्पत इत्यर्थः ॥ ३० ॥

**विक्रमस्रोतसा तस्य बृहन्त्यपि बलानि नः ।**
**सहसा भेदमायान्ति सैकता इव सेतवः ॥ ३१ ॥**

**विक्रमेति**—तस्य नरकस्य विक्रमः स्रोतः जलप्रसरणमिव तेन बृहन्ति महान्त्यपि नः अस्माकं बलानि सैन्यानि सैकताः सिकतामयाः सेतव इव सहसा शीघ्रं भेदं आयान्ति प्राप्नुवन्ति, विशीर्णानि पलायन्त इत्यर्थः ॥ ३१ ॥

**यदृच्छोपगमेऽप्यस्य यान्ति देवगृहाश्रिताः ।**
**[1] निर्धावितुमनीशानाः साक्षितां सालभञ्जिकाः ॥ ३२ ॥**

**यदृच्छेति**—अस्य नरकस्य यदृच्छोपगमे युद्धोद्देशं विना स्वैरगमनेऽपि देवगृहाश्रिताः देवानामस्मदादीनां गृहाण्याश्रिताः निर्धावितुमनीशानाः धावनाशक्ताः सालभञ्जिकाः दारुदन्तादि[2]पुत्रिकाः साक्षितां यान्ति तदागमनद्रष्टृतां प्राप्नुवन्ति । स्त्रीषु पुरुषेषु च सर्वेषु पलायितेषु सालभञ्जिका एवावशिष्यन्त इत्यर्थः ॥ ३२ ॥

**महता मत्प्रयुक्तेन वज्रेण ज्वलितात्मना ।**
**निलिल्ये तस्य दोर्मध्ये निष्काभरण[3]वर्ष्मणा ॥ ३३ ॥**

**महतेति**—मत्प्रयुक्तेन मया क्षिप्तेन ज्वलितात्मना दीप्ताकृतिना महता वज्रेण वज्रायुधेन तस्य नरकस्य दोर्मध्ये वक्षसि

---

1 प्रधावितु—ग्र. दे. मु. निर्धावितुमनीशा नस्साक्षितां—घ. ट.
2 पुत्रिका मनःसाक्षितां—ग. पुत्रिका नः साक्षितां—घ. ट. 3 वर्मणा—ङ.

निष्काभरणवर्ष्मणा स्वर्णा[1]भरणरूपेण देहेन सता निलिल्ये निलीनमासीत् ॥ ३३ ॥

[2] अथ वह्न्यादिक्रमेण स्वातिरिक्तानामपि दिक्पालानां तस्मिन् [3] प्रतिहतत्वमाह--

त्वत्कोप इव दीप्तोऽपि ज्वलनो न प्रकाशते ।
ज्योतिरिङ्गणवत्तस्य द्युमणेरिव सन्निधौ ॥ ३४ ॥

त्वदिति—त्वत्कोप इव दीप्तोऽपि ज्वलनः वह्निः द्युमणेः सूर्यस्येव तस्य नरकस्य सन्निधौ [4] ज्योतिरिङ्गणवत् खद्योतेन तुल्यं यथा तथा न प्रकाशते ॥ ३४ ॥

अमोघत्वयशोभङ्गभयादिव निवर्तते ।
अखण्डितबले तस्मिन् दण्डो दण्डधरार्पितः ॥ ३५ ॥

अमोघत्वेति—अखण्डितबले अप्रतिहतबले तस्मिन् नरके दण्डधरार्पितः यमेनार्पितः दण्डः कालदण्डः अमोघत्वयशोभङ्गभयादिव तत्प्राप्तौ मोघतावश्यंभावात् अमोघत्वकीर्ति[5]र्भज्येतेति भयादिव निवर्तते तदीयप्रत्यक्षपराहतः तमप्राप्यैव निवर्तत इत्यर्थः ॥ ३५ ॥

नयनार्चिष्मतस्तस्य नैरृतेश्वरवाहिनी ।
[6] अपसृप्य पुरोभागादद्यापि न निवर्तते ॥ ३६ ॥

नयनेति—नैरृतेश्वरवाहिनी राक्षसेश्वरस्य लोकपालस्य सेना नयनार्चिष्मतः तस्य नरकस्य पुरोभागादपसृप्य अन्यत्र गत्वा अद्यापि न निवर्तते तदीयनयनज्वालादर्शनेन तथा तस्याः स्थायि भयमासीदित्यर्थः ॥ ३६ ॥

---

[1] भरणरूपदेहेन–ग. [2] अथाग्न्यादि–ङ. ञ. [3] प्रतिहतिमाह–ग. ङ. ञ. [4] ज्योतिरिङ्गणवत्–ञ. [5] भज्येत इति–ङ. [6] अपसृत्य–ङ.

तं सुप्तमपि वा मत्तं वारुणो वैरिदारुणः ।
न रोद्धुं क्षमते पाशो नलस्तम्ब इव द्विपम् ॥ ३७॥

तमिति—वैरिदारुणः शत्रूणां भयङ्करः वारुणः वरुणसम्बन्धी पाशः सुप्तं [1]अपि वा अथवा मत्तं तं नरकं नलस्तम्बः नलस्य तृणविशेषस्य स्तम्बः काण्डः द्विपं गजमिव रोद्धुं न क्षमते। जाग्रतं प्रकृतिस्थं च तं रुणद्धीति [2]कथा दूरापास्तेति भावः ॥ ३७ ॥

शक्तश्शमयितुं तस्य संवर्तार्हजवोऽपि सन् ।
नभस्वान् खेलतस्सङ्ख्ये न स्वेदकणिकामपि ॥ ३८ ॥

शक्त इति—नभस्वान् वायुः संवर्तार्हजवः प्रलयोचित-वेगोऽपि सन् सङ्ख्ये युद्धे खेलतः क्रीडतः तस्य नरकस्य स्वेदकणिकामपि अल्पं स्वेदकणमपि शमयितुं न शक्तः, [3]तं स्प्रष्टुमेव बिभेतीति भावः ॥ ३८ ॥

धनदेन गदा तस्य महती मूर्ध्नि पातिता ।
अभित्त्वा पौष्पमापीडमनापीडत्वमादधे ॥ ३९ ॥

धनदेनेति—धनदेन कुबेरेण तस्य नरकस्य मूर्ध्नि पातिता महती गदा पौष्पमापीडं पुष्पमयमपि शेखरं अभित्त्वा अनापीडत्वं आपीडा समन्तात्पीडा तद्रहितत्वं आदधे। सत्येवापीडे अनापीडत्वं चकारेति विरोधाभासः ॥ ३९ ॥

जटिलान् कृत्तिवसनान् नियमं तीव्रमास्थितान् ।
तपस्विन इति ज्ञात्वा स रुद्रान्नातिवर्तते ॥ ४० ॥

जटिलानिति—सः नरकः जटिलान् जटावतः कृत्तिवसनान् चर्मपरिधानान् तीव्रं [4]दुष्करं नियमं ऊर्ध्वरेतस्त्वं आस्थितान् रुद्रान्

---

[1] अपि वा मत्तं–घ. [2] कथादूरापास्तामिति–घ. ट. [3] इदं वाक्यं–घ. ट. पुस्तकयोर्न दृश्यते. [4] 'दुष्करं' इति ङ. ञ.–कोशयोर्न दृश्यते.

एकादश रुद्रा इति बहुवचनं, तपस्विन इति ज्ञात्वा नातिवर्तते नातिक्रामति ॥ ४० ॥

**अहरद्वारुणं छत्रं मामकं मणिभूधरम् ।**
**अमृतस्यन्दिनी चास्मज्जनन्या मणिकुण्डले ॥ ४१ ॥**

अहरदिति—किञ्च वारुणं वरुणस्येदं छत्रं मामकं मदीयं मणिभूधरं मन्दरशृङ्गरूपं मणिमयं क्रीडापर्वतं अमृतस्यन्दिनी सुधां क्षरती अस्मज्जनन्या मणिकुण्डले च अहरत् अपहृतवान् ॥ ४१ ॥

**आदर्शमिव संपत्तेरमृताब्धेरिवाशयम् ।**
**औपवाह्यमसौ मत्कमारुरुक्षति साम्प्रतम् ॥ ४२ ॥**

आदर्शमिति—असौ नरकः साम्प्रतं इदानीं संपत्तेः श्रियः आदर्शमिव स्थितं, सर्वविधाया अपि सम्पदः आदर्श इवात्र दृश्यमानत्वात्, अमृताब्धेः आशयं हृदयमिव स्थितं, तत्सारभूतत्वात्, मत्कं मत्स्वामिकं 'स एषां ग्रामणीः' (पा. सू. ५-२-७८) इति कन्प्रत्ययः, औपवाह्यं राजवाहनं ऐरावतं आरुरुक्षति आरोढुमिच्छति ॥४२॥

**देवदानवसिद्धानां नृपाणामपि कन्यकाः ।**
**अपहृत्य त्वदेकार्हास्त्वरते पाणिपीडने ॥ ४३ ॥**

देवेति—देवानां दानवानां सिद्धानां देवयोनिविशेषाणां नृपाणामपि त्वदेकार्हाः लक्षणसम्पत्त्या [1] तव एकस्योचिताः कन्यका अपहृत्य पाणिपडिने तासां विवाहे त्वरते । त्वरावचनेन शीघ्रं तज्जये भगवन्तं प्रोत्साहयति ॥ ४३ ॥

**स भौमस्त्वन्निरस्तानां समवाय इवोत्थितः ।**
**बाधते विबुधानेवं बलवीर्यपराक्रमैः ॥ ४४ ॥**

स इति—त्वन्निरस्तानां त्वया हतानां मधुकैटभादीनां समवायः समाज इव उत्थितः सः भौमः भूमेरपत्यं नरकः एवं उक्तप्रकारेण

---

[1] तवैवोचिताः—ग. ङ. ञ.

बलवीर्यपराक्रमैः बलेन शक्त्या वीर्येण पराक्रमेण सदा जयोद्योगेन च "शौर्योद्योगौ पराक्रमौ" इति यादवः, विबुधान् देवान् बाधते ॥४४॥

**तदेवमवसीदत्सु दया देवेषु पात्यताम् ।**
**अनपह्नुतदास्यानां दोषनिह्नवसाक्षिणी ॥ ४५ ॥**

**तदेवमिति**—तदेवं उक्तप्रकारेण अवसीदत्सु खिद्यमानेषु देवेषु अनपह्नुतदास्यानां अनपह्नुतमनपलपितं दास्यं "स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम्" इति शास्त्रबोधितं स्वाभाविकं भगवच्छेषत्वं यैस्तेषां भगवत्पारतन्त्र्यानुसन्धानवतां प्रपन्नानां दोषनिह्नवसाक्षिणी दोषाणां निह्नवस्य—

"मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥

(श्रीवाल्मीकिरामा. ६-१८-३)

इति प्रतिज्ञानुरोधात्, [1]भगवता क्रियमाणस्य दोषतिरस्कारस्य साक्षिणी दयाविशिष्टस्यैव भगवतः प्रपन्नदोषातिरस्कारकत्वात् साक्षात् [2]द्रष्ट्री दया पात्यताम् । दयापातनस्य प्राप्तोऽयमवसर इति प्राप्तकाले लाट् ॥ ४५ ॥

**तमर्धं भूमिभारस्य त्वयैवोत्पादितं प्रभो ।**
**त्रिलोकी[3]कण्टकं तीक्ष्णं त्वमेवोद्धर्तुमर्हसि ॥ ४६ ॥**

**तमिति**—हो प्रभो भूमिभारस्य इदानीं दैत्यैः क्रियमाणस्य भूभारस्य अर्धं अर्धांशरूपं तत्र निमित्तं त्वयैव उत्पादितं जनितं, त्वच्छक्तियोगादितरेभ्योऽधिकमिति भावः, तीक्ष्णं शीघ्रकारिणं त्रिलोकीकण्टकं त्रैलोक्यस्य बाधकं तं नरकं त्वमेवोद्धर्तुमर्हसि ॥ ४६ ॥

---

[1] भगवत्क्रियमाणस्या–ग. घ. ट. [2] द्रष्ट्रीति दया–ग. घ. ट. [3] त्रिलोककण्टकं दैत्यं–घ. ट.

**निवर्त्ये धर्मशल्येऽस्मिन् निदाने सर्वपाप्मनाम् ।**
**निवेदनमिहास्माकमंशो निर्वहणं त्वयि ॥ ४७ ॥**

**निवर्त्य इति**——सर्वेषां पाप्मनां निदाने मूलकारणे अत एव धर्मशल्ये धर्मस्यान्तःप्रविष्टशरशलाकावद्बाधके "शल्यं शरशलाकायां शङ्कुतोमरयोरपि" इति रत्नमाला, अस्मिन् नरके निवर्त्ये वध्ये सति इह विषये निवेदनं त्वयि विज्ञापनं नः अस्माकमंशः, निर्वहणं तद्वधनिर्वाहस्तु तवांशः, विज्ञापनमात्रसमर्था वयं, तद्वधस्तु त्वदेकायत्त इत्यर्थः ॥ ४७ ॥

**मशकामर्शवद्यस्य मधुकैटभमर्दनम् ।**
**तदन्यदनुजध्वंसे तस्य ते किमिवाद्भुतम् ॥ ४८ ॥**

**मशकेति**—यस्य मधुकैटभयोर्महासुरयोः मर्दनं मशकामर्शवत् मशकपेषणेन तुल्यं तस्य ते तदन्यदनुजध्वंसे तद्व्यतिरिक्तदैत्यहनने किमिवाद्भुतं किंवा आश्चर्यम् । [1]प्राङ्नरकस्य मधुकैटभाभ्यामाधिक्योक्तिः स्वेषां बाधातिशयसूचनार्था ॥ ४८ ॥

**निगमान्तेषु निगदव्याख्यातनिजवैभवः ।**
**विधत्स्व विपदुत्तीर्णानमर्त्याननुकम्पया ॥ ४९ ॥**

**निगमान्तेष्विति**—निगमान्तेषु वेदान्तेषु निगदेन पाठमात्रेण व्याख्यातं निजं वैभवं यस्य सः वेदान्तेष्वतिस्पष्टं प्रतिपादितभक्तरक्षकत्वादिमहिमा त्वं अनुकम्पया अमर्त्यान् विपदमुत्तीर्णानुत्तीर्णवतो विधत्स्व कुरु । [2]गत्यर्थकत्वात्कर्तरि क्तः ॥ ४९ ॥

---

[1] **प्रागिति** ॥ 'स भौमस्त्वन्निरस्तानां' (४४) इति श्लोक इति भावः । यद्वा 'त्वन्निरस्तानां' इत्यत्र श्रीकृष्णरूपिणा भगवता निरस्तानामसुराणामेव विवक्षितत्वात्तदपक्षयैव तत्र नरकस्याधिक्यवर्णनामिति वक्तव्यम् । न हिरण्यजिरण्याक्षौ न मधुर्न च कैटभः' (२९ श्लो) इत्यत्र नरकस्य मध्वादिभ्य आधिक्यवर्णनं तु भगवच्छक्तिप्रशंसनपूर्वकं भगवतो नरकवधाभिनिवेशसंपादनार्थमिति भाति ।

[2] 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' (पा. सू. ३-४-७२) इति सूत्रेणेति भावः

इति विज्ञापितोदन्तं दत्तहस्तं बलद्विषम् ।
विनिवर्त्य जगन्नाथो वैनतेयमथास्मरत् ॥ ५० ॥

इतीति—जगतां नाथः कृष्णः इति उक्तप्रकारेण विज्ञापितोदन्तं निवेदितवृत्तान्तं दत्तहस्तं तथा करिष्यामीति दत्तः अभयहस्तः यस्मै तं बलद्विषं इन्द्रं विनिवर्त्य, भयात्परावर्त्य, स्वर्गाय प्रेषणं त्वग्रे वक्ष्यते, अथ अनन्तरं वैनतेयं गरुडं अस्मरत् ॥ ५० ॥

अनुचिन्तितमात्रस्तमुपतस्थे खगेश्वरः ।
अहीन्द्रदामाभिर्भीमैरंस[1]लम्बिभिरंसलः ॥ ५१ ॥

अनुचिन्तितेति—अनुचिन्तितमात्रः अनुचिन्तित एव विलम्बं विना अंसलम्बिभिः अंसयोर्लम्बमानैः भीमैः भयंकरैः अहीन्द्रदामभिः भुजगेन्द्रमालाभिः अंसलः मेदुरांसः खगेश्वरः तं कृष्णं उपतस्थे कृष्णेन सङ्गत इत्यर्थः । 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्' (वा. ९१४) इति सङ्गतिकरणे आत्मनेपदम् ॥ ५१ ॥

पक्षमारुतघोषेण त्रैलोक्यदुरितच्छिदा ।
चतुर्णामिव वेदानां संभूतिमिव भावयन् ॥ ५२ ॥

पक्षेति—त्रैलोक्यस्य दुरितच्छिदा पापहारिणा पक्षमारुतघोषेण पक्षानिलध्वनिना चतुर्णामपि वेदानां संभूतिं उत्पत्तिं भावयन् संपादयन्निव स्थितः। तत्पक्षानिलध्वनेः वेदघोषात्मकत्वादेवमुत्प्रेक्षा । उपतस्थ इति पूर्वेणान्वयः । एवमेकादशभिः श्लोकैः गरुडो वर्ण्यते ॥ ५२ ॥

तरुणार्कप्रभासारसामरस्यजुषा त्विषा ।
तप्तहेमद्रवौघेण लिम्पन्निव दिशो दश ॥ ५३ ॥

तरुणेति—तरुणार्कप्रभासारसामरस्यजुषा बालार्कस्य द्युति-

[1] लम्बिभिरांचितः—म. द्रे. मु.

[1] प्रकर्षैः एकरसत्वं सादृश्यं जुषमाणया त्विषा दीप्त्या तप्तहेमद्रवौघेण प्रतप्तकनकरसप्रवाहेणेव दश दिशो लिम्पन् ॥ ५३ ॥

स्वामिदर्शनसन्तोषात्प्रहृष्यद्भिस्तनूरुहैः ।
युगान्तसन्ध्याजलदः तटिज्जालैरिव ज्वलन् ॥ ५४ ॥

स्वामीति—स्वामिदर्शनेन सन्तोषात् प्रहृष्यद्भिः उच्छ्वसद्भिः तनूरुहैः रोमभिः तटिज्जालैः विद्युद्बृन्दैः युगान्त[2]सन्ध्याजलदः प्रलयकालसन्ध्याभवमेघ इव ज्वलन् दीप्यमानः दुर्दर्शत्वकनकवर्णत्वोभयानुरोधात् युगान्त[2]सन्ध्याजलदसम इति विशिष्टोपमानं कृतम् ॥ ५४ ॥

विपुलाद्भुतसंस्थानैर्द्योतितो दिव्यभूषणैः ।
भुजगेन्द्रफणारत्नशङ्काऽर्हमणिचित्रितैः ॥ ५५ ॥

विपुलेति—विपुलाद्भुतसंस्थानैः विशालचित्रावयवसन्निवेशैः भुजगेन्द्रफणारत्नशङ्काऽर्हमणिचित्रितैः भुजगेन्द्राणां शेषादीनां फणारत्नानीति शङ्कामर्हन्ति ये मणयः तैः कर्बुरितैः दिव्यभूषणैः अप्राकृताभरणैः द्योतितः उद्भासितः ॥ ५५ ॥

तुङ्गवज्रव्रणाङ्केन सुविस्तीर्णेन वक्षसा ।
अबहिर्भावयन् कृत्स्नमवकाशं विहायसः ॥ ५६ ॥

तुङ्गेति—तुङ्गः वज्रव्रणः वज्रायुधप्रहारव्रणः अङ्कश्चिह्नं यस्य तेन सुविस्तीर्णेन अतिविशालेन वक्षसा विहायसः कृत्स्नमवकाशं अबहिर्भावयन् [3] अन्तर्भावयन् व्याप्नुवन्नित्यर्थः ॥ ५६ ॥

पृथुना भुजयुग्मेन भोगीन्द्रपरिकर्मणा ।
मन्दरद्वितयेनेव समेतो रुक्मपर्वतः ॥ ५७ ॥

पृथुनेति—भोगीन्द्रपरिकर्मणा भोगीन्द्राः [4] परिकर्माणि प्रसाधनानि यस्य तेन पृथुना पृथुलेन भुजयुग्मेन मन्दरद्वितयेन समेतो

[1] द्युतिप्रवरैरेक—ञ. ब. [2] सन्ध्यासमय इति—ञ. [3] अन्तर्भावयंश्चाप्नुवन्—घ. ट. [4] 'परिकर्माणि' इति ग.—ञ. कोशयोर्नास्ति.

रुक्मपर्वतः सुमेरुरिव स्थितः । मन्दरोऽप्यमृतमथने भोगीन्द्रेण भूषितः ॥ ५७ ॥

**व्यालखण्डनसङ्क्रान्तविषपङ्ककलङ्किना ।**
**दधान इव तुण्डेन दैत्यदर्पगजाङ्कुशम् ॥ ५८ ॥**

**व्यालेति**––व्यालानां सर्पाणां खण्डनात् सङ्क्रान्तेन विषपङ्केन कलङ्किना कलङ्कवता तुण्डेन मुखेन हेतुना दैत्यानां दर्प एव गजः तस्याङ्कुशं दधान इव, तादृशतुण्डवत्त्वेन निमित्तेनाङ्कुशधारणोत्प्रेक्षा तुण्डस्याङ्कुशत्वोत्प्रेक्षापर्यवसिता, अत एवाङ्कुशस्यायसत्वेन मलिनत्वात्तत्साम्यसिद्धये कलङ्किनेति विशेषणम् ॥ ५८ ॥

**तक्षकश्रोणिसूत्रेण [1]दृढबद्धेन बन्धुरम् ।**
**मान्यमग्रजवर्णेन वसानो दिव्यमम्बरम् ॥ ५९ ॥**

**तक्षकेति**––दृढबद्धेन तक्षकश्रोणिसूत्रेण तक्षक एव कटिसूत्रं तेन बन्धुरं मनोज्ञं "मराले बन्धुरः पुंसि त्रिषु [2]स्यान्नवरम्ययोः" इति रत्नमाला, अग्रजवर्णेन स्वाग्रजस्यारुणस्य वर्णेन शोणिम्ना मान्यं पूज्यं हृद्यमिति यावत्, दिव्यं अप्राकृतं अम्बरं वसानः ॥ ५९ ॥

**नाथभक्तिपरिष्कार्या [3]नृत्तलीलामिव स्पृशन् ।**
**निजेन स्थानकेनाग्रे निहितोन्नतजानुना ॥ ६० ॥**

**नाथेति**––अग्रे देवस्य पुरतः निहितोन्नतजानुना एकं निहितं अन्यदुन्नतं च [4]जानु यस्मिंस्तेन निजेन आत्मीयेन स्थानकेन नाट्यशास्त्रोक्तलक्षणावस्थानविशेषेण नाथभक्तिपरिष्कार्यां नाथे या भक्तिः तया मण्डनीयां नृत्तलीलां स्पृशन् उपक्रममाण [5]इव स्थितः ।

---

[1] दृढबन्धेन बन्धुरः–घ. ट. [2] स्यान्नवरम्ययोः–ञ. [3] नृत्यलीला–घ. ट. [4] जानुनी–घ. ट. [5] उपस्थितः–घ.

भगवत्प्रीत्यर्थो यः कश्चिदप्युपचारो भक्त्या च पुष्कलो भवतीति भावेन नाथेत्यादिविशेषणम् । [1] गारुडस्थानकलक्षणमुक्तं सङ्गीतसुधानिधौ—

वामं पदमाकुञ्चितमन्वत ............... ॥ ६० ॥

**वपुषा भक्तिनम्रेण धीरोन्नतमहीयसा ।**

**शान्तवीराद्भुतरसान् समाहृत्येव संपतन् ॥ ६१ ॥**

**वपुषेति**—भक्तिनम्रेण भक्त्या नमनशीलेन धीरोन्नतमहीयसा [2] धीरेणोन्नतेन महत्तरेण च वपुषा शान्तवीराद्भुतरसान् भक्तिनम्रतया शान्तिरसं धीरोन्नततया वीररसं महीयस्तया अद्भुतरसं च समाहृत्य संपतन् विजृम्भमाण इव स्थितः ॥ ६१ ॥

**मूर्तिमानिव संरम्भो रूपवानिव मारुतः ।**

**तरङ्गान् पक्षतीकृत्य संक्षिप्त इव सागरः ॥ ६२ ॥**

**मूर्तिमानिति**—मूर्तिमान् संरम्भः संभ्रम इव, उत्साहातिशयात्, रूपवान् वर्णवान् मारुत इव, वेगोत्कर्षात्, तरङ्गान् पक्षतीकृत्य पक्षमूलीकृत्य संक्षिप्तः सङ्कुचितदेहः सागर इव च स्थितः, जगद्व्यापनसामर्थ्यात् । विभक्तधनेषु विभक्तशब्दवत् संक्षिप्तदेहे संक्षिप्तशब्द उत्तरपदलोपेन द्रष्टव्यः । गम्यमानस्याप्रयोगो लोप इति कैयटकारः ॥ ६२ ॥

**संवर्त इव नागानां सङ्घात इव रंहसाम् ।**

**वालखिल्यचारित्राणां विपाक इव जङ्गमः ॥ ६३ ॥**

**संवर्त इति**—नागानां सर्पाणां संवर्तः प्रलय इव रंहसां वेगानां सङ्घातः समूह इव वालखिल्यानामृषीणां यानि चरित्राणि सत्कर्माणि तेषां जङ्गमः चरिष्णुः विपाकः फलोन्मुखीभाव इव च स्थितः, एतत्पर्यन्तश्लोकानां ‘ उपतस्थे खगेश्वरः ’ इत्यनेन सम्बन्धः ।

---

1 ‘ गारुडस्थान ’ इत्यारभ्य एतत्पद्यसमाप्तिपर्यन्ता व्याख्या अ.—कोशे न दृश्यते. 2 धारतयोन्नतेन—ग. ज. अ.

पुरा वालखिल्येषु कुतश्चिद्धेतोरिन्द्रे कोपात् अन्यमिन्द्रं तज्जेतारं स्रक्ष्याम इति तपश्चरत्सु काश्यपेनानुनीतेषु कथञ्चित्प्रतिज्ञानिर्वाहाय गरुडः खगेन्द्रतया अवतीर्य इन्द्रममृताहरणेन जिगायेति भारतकथा ॥ ६३ ॥

**प्रभुस्तं दैत्यसिद्धीनां प्रसूतकिलकिञ्चितम् ।**
**ओलण्डितमिवापश्यदुग्रं समरताण्डवम् ॥ ६४ ॥**

**प्रभुरिति**—प्रभुः कृष्णः दैत्यसिद्धीनां असुरसम्पदां प्रसूतकिलकिञ्चितं उत्पादितकिलकिञ्चिताख्यरतिभावविकारं "क्रोधाभिलाषहर्षादिस्सङ्करः किलकिञ्चितम्," इति लक्षणम्, अनेन दैत्यसंपदां वशीकरणोक्त्या तदपहर्तृत्वं [1]द्योत्यते, तं गरुडं ओलण्डितं उत्क्षिप्तं शूरेभ्यः पृथक्कृत्योद्धृतं उग्रं समरताण्डवं युद्धेषु क्रियमाणं उद्धृतनृत्तं पराक्रममिवापश्यत् पराक्रममिव तं दृष्टवानित्यर्थः। [2]'ओलण्ड उत्क्षेपणे' इति चोरादिकाद्धातोः निष्ठायां ओलण्डितशब्दः ॥ ६४ ॥

**दत्तनीराजनस्तेन ददृशे वाहनेश्वरः ।**
**प्रदक्षिणीकृतश्शश्वत्प्रतापविजयश्रिया ॥ ६५ ॥**

**दत्तेति**—तेन कृष्णेन दत्तनीराजनः युद्धप्रस्थानाय विहितारात्रिकोपचारः वाहनानामीश्वरः गरुडः प्रतापविजयश्रिया [3]शश्वत् पुनः पुनः प्रदक्षिणीकृतः ददृशे, प्रदक्षिणीकृत इव दृष्ट इत्युत्प्रेक्षा वाचकाप्रयोगात् गम्या। राजानः प्रस्थानसमयेषु औपवाह्यस्य नीराजनं कुर्वन्ति। तच्च त्रिवारं परिभ्रमयन्तीति शश्वदित्युक्तम् ॥ ६५ ॥

---

[1] द्योतते—ग.ट. [2] ओलडि उत्क्षेपणे। इति धातुपाठे (चुरादौ १५४३) दृश्यते। अतोऽत्र 'ओलडि उत्क्षेपणे' इति पाठः स्यात्। यद्वा इदित्त्वोपजातनकारघटिततयाऽयं ओलण्ड इत्युक्तमिति भाति। इदित्त्वादेव चास्य णिज्विकल्पात् 'ओलण्डति' इति सिध्यति। केचिदत्र ओकारमित्संज्ञकमभिप्रेत्य लडीत्येव धातुरित्यभिप्रयन्ति। अन्ये च धातुमेनमुकारादिं मन्यन्ते. [3] इतः पूर्वं प्रतापस्य 'अरातिदण्डचण्डिम्नः विजयस्य च लक्ष्म्या' इत्यधिकं ग. ज. ञ.—कोशेषु दृश्यते.

**स तदाऽऽस्फोटयामास विन्ध्यमेरुसमौ भुजौ ।**
**रुद्रया च सुकीर्त्या च मृदितौ [1]कण्ठभूषणैः ॥ ६६ ॥**

**स इति**—[2]सः गरुडः तदा विन्ध्यमेरुसमौ विन्ध्यस्य मेरोश्च तुल्यौ रुद्रया च सुकीर्त्या च आश्लेषसमये कण्ठभूषणैः मृदितौ भुजौ भुजमूलभागौ भृशमास्फोटयामास अभिजघान, स्वसन्नाहसूचनार्थमिति भावः । रुद्रा च सुकीर्तिश्च गरुडस्य देव्यौ ॥ ६६ ॥

**दुधुवे पक्षती च द्वे डोलायितकुलाचले ।**
**वीजयन् घोरदुर्वादिघर्मतप्तामिव त्रयीम् ॥ ६७ ॥**

**दुधुव इति**—डोलायितकुलाचले डोलायिताः डोलावदाचरितवन्तः कुलाचलाः याभ्यां हेतुभ्यां ते तथोक्ते कम्पितकुलाचले इत्यर्थः, पक्षती पक्षमूले घोरदुर्वादिघर्मतप्तां घोरः अविषह्यः दुर्वादिनां [3]वेदाप्रामाण्यान्यथाप्रामाण्यवादिनां घर्मः निदाघः दुस्तर्करूपः तेन तप्तां त्रयीं त्रिवेदीं वीजयन्निव दुधुवे धुनीते स्म । आस्फोटनसमुच्चयार्थश्चकारः । [4]गरुडपक्षत्योर्वेदमयत्वात् तद्धूननेन स्वाभाविक[5]वेदार्थाभिव्यक्तया वेदानामाप्यायनमुत्प्रेक्ष्यते ॥ ६७ ॥

**मुहुराम्रेडयामास जयालोकयभारतीम् ।**
**मुग्धमध्यप्रगल्भाभिर्दशाभिः कर्बुरामिव ॥ ६८ ॥**

**मुहुरिति**—मुग्धमध्यप्रगल्भाभिः दशाभिः मन्दोच्चतारावस्थाभिः कर्बुरां चित्रामिव स्थितां जयालोकय[6]भारतीं जय आलोकय इति वाचं मुहुः पुनःपुनः आम्रेडयामास आवर्तयामास ।

---

1 कर्णभूषणैः–**ञ. मु.** 2 'स गरुडः' इति **घ. ट.**–कोशयोर्न दृश्यते. 3 वेदस्याप्रामाण्य–**ग. ञ.** 4 गरुडपक्षत्योर्वेदमूलत्वा–**घ. ट.** गरुडपक्षयोर्वेदमयत्वा–**ञ.** 5 वेदार्थाभिव्यक्तानां वेदानां–**घ. ट.** 6 भारतीं इमां जय–**घ. ट.**

पौनःपुन्यं बहुपर्यायावृत्तिः, आम्रेडनं एकैकस्मिन्नपि पर्याये जय-शब्दाद्यावृत्तिः ॥ ६८ ॥

स तदा सन्नतस्कन्धो बद्धाञ्जलिरनिःश्वसन् ।
मुमुदे [1]मूर्ध्नि संस्पृष्टो मुकुन्देन प्रसेदुषा ॥ ६९ ॥

स इति—स गरुडः तदा प्रस्थानसमये प्रसेदुषा प्रसन्नेन मुकुन्देन सन्नतस्कन्धः सन्नतांसः बद्धाञ्जलिरनिःश्वसंश्च मूर्ध्नि संस्पृष्टस्सन् मुमुदे मोदते स्म । सन्नतस्कन्धादिविशेषणद्वयं विनय-प्रकटनाय । तृतीयं प्रभुषु निःश्वासाप्रसरणाय भृत्यानां स्वभाव-सिद्धम् ॥ ६९ ॥

तस्मिन् प्रथममारोप्य सत्यां विरहविक्लबाम् ।
आरुरोह ततश्शौरिराखण्डलकृतस्तुतिः ॥ ७० ॥

तस्मिन्निति—शौरिः तस्मिन् गरुडे विरहविषये विक्लबां विरहासहिष्णुं सत्यां सत्यभामां प्रथममारोप्य ततः अनन्तरं आखण्ड-लेन कृतस्तुतिस्सन् स्वयमप्यारुरोह ॥ ७० ॥

निवर्त्य स्वनिवासाय शक्रं शमितसाध्वसम् ।
प्रययौ दीप्तसन्नाहः प्राग्ज्योतिषपुरं प्रभुः ॥ ७१ ॥

निवर्त्येति—प्रभुः कृष्णः शमितसाध्वसं अपनीतभयं शक्रं स्वनिवासाय निवर्त्य स्वर्गाय [2]सम्प्रेष्य दीप्तसन्नाहः उत्कटसेनोद्योगस्सन् प्राग्ज्योतिषाख्यं नरकस्य पुरं प्रययौ ॥ ७१ ॥

श्रेयःपरिपणं तस्य श्रुतिश्रेणिशिरोमृतम् ।
प्रणतः [3]परिजग्राह शासनं पाकशासनः ॥ ७२ ॥

श्रेय इति—पाकशासनः इन्द्रः श्रेयसां परिपणं मूलधनं

---

[1] मूर्तिसंस्पृष्टो—घ. ट. [2] प्रेषयित्वा—ग. ङ. ञ. [3] प्रतिजग्राह—ग. ञ. ग्र. दे मु.

निखिलश्रेयोनिदानभूतमिति यावत्– 'नीवी परिपणो मूलधनं' इत्यमरः, श्रुतिश्रेणीनां श्रोत्रपङ्क्तीनां शिरोमृतं शिरसि दत्तामृतवत् सर्वाङ्गशीतलत्वापादकं तस्य कृष्णस्य शासनं प्रेषण[1]रूपां आज्ञां प्रणतस्सन् परिजग्राह ॥ ७२ ॥

**यथास्वं नगरद्वारे यादवा दानवाश्च तम् ।**
**तरस्विगरुडारूढं सत्यमैक्षन्त [2]तत्क्षणम् ॥ ७३ ॥**

**यथास्वमिति**—यादवाः द्वारकास्थिताः यदुवंश्याः दानवाः प्राग्ज्योतिषस्थिता असुराश्च यथास्वं स्वकीयमनतिक्रम्य नगरद्वारे स्वस्वपुरद्वारे तत्क्षणे तस्मिन् प्रस्थानक्षण एव तरस्विगरुडारूढं वेगवन्तं गरुडमारूढं तं कृष्णं सत्यं अबाधितं यथातथा ऐक्षन्त। यस्मिन् क्षणे यादवा द्वारकाद्वारे तमपश्यन् तस्मिन्नेव क्षणे दानवा अपि स्वपुरद्वारे विनैव भ्रान्तिमपश्यन्निति गरुडवेगातिशयोक्तिः ॥ ७३ ॥

**समन्ताद्वैरिदुर्गस्य क्षिप्तचक्रः क्षणेन सः ।**
**क्षुरान्तानच्छिनत्पाशानाततान्छतयोजनम् ॥ ७४ ॥**

**समन्तादिति**—कृष्णः वैरिदुर्गस्य वैरिणः नरकस्य दुर्गं पाशयन्त्रैः दुष्प्रापं परं "दुष्प्रापं तु पुरं दुर्गं यन्त्रशैलजलादिभिः" इति वैजयन्ती, तस्य समन्तात् परितः क्षिप्तचक्रः प्रहितचक्रायुधस्सन् शतयोजनं शतानां योजनानां समाहारः, अत्यन्तसंयोगे द्वितीया, पात्रादित्वान्न ङाप्प्रत्ययः, आततान् प्रसारितान् क्षुरान्तान् [3]क्षुराः शस्त्रविशेषाः, तैस्सर्वत्र ग्रथितैः रम्यान् 'क्षुरोऽस्त्री वपनं शस्त्रम्' इति वैजयन्ती, 'मृतावपि सिते रम्ये समाप्तावन्त इष्यते' इति शब्दार्णवः, क्षुराः शस्त्रविशेषाः अन्तेषु उभयपार्श्वेषु येषां तानिति वा, पाशान्

---

[1] रूपं–घ. ट. [2] तत्क्षणे–ग्र. दे. मु. [3] क्षुराः शस्त्रविशेषाः अन्तेषु उभयपार्श्वेषु येषां तान् पाशान्–घ. ट.

क्षणेन अच्छिनत् छिनत्ति स्म । [1]मरुर्नाम प्राग्ज्योतिषपुरीपालकः कश्चिदसुरस्तां पुरीं समन्तात् शतयोजनपर्यन्तं क्षुरग्रथितैः पाशैः संछाद्य पालितवानिति पौराणिकी कथा ॥ ७४ ॥

**मुरं पञ्चजनं सप्तसहस्राणि मुरोद्भवान् ।**
**शलभीकृत्य चक्राग्निरुपदुद्राव तत्पुरम् ॥ ७५ ॥**

**मुरमिति**—चक्रस्य सुदर्शनस्याग्निः मुरं पाशान् वितत्य तत्रैव वसन्तं पञ्चजनं पञ्चजननामकमन्यमसुरं सप्तसहस्राणि सप्तगुणितसहस्रसङ्ख्यान् मुरोद्भवान् मुरस्यात्मजांश्च शलभीकृत्य शलभवद्दग्ध्वा तत्पुरं प्राग्ज्योतिषपुरं उपदुद्राव बबाधे । अकारान्तो मुरशब्दः प्रसिद्धः । "आचिता मौरवैः पाशैः" इति [2]विष्णुपुराणे (विष्णु. ५-२९-१६) दर्शनादुकारान्तोऽपि ॥ ७५ ॥

**ततः प्राग्ज्योतिषद्वारे दैत्यदानवसूदनः ।**
**पाञ्चजन्यमुपादध्मौ प्रलयाम्बुधिनिस्वनम् ॥ ७६ ॥**

**तत इति**—ततः अनन्तरं दैत्यानां दानवानां च सूदनः हिंसकः कृष्णः, नन्द्यादित्वाल्ल्युः, प्राग्जोतिषद्वारे प्रलयाम्बुधिनिस्वनं प्रलयाम्बुधिघोषतुल्यघोषं उपमानपूर्वपदो बहुव्रीहिः, शङ्खं उपादध्मौ आपूरयामास ॥ ७६ ॥

---

[1] अत्र उत्तरश्लोकव्याख्यापरिशीलनेन 'मुरुर्नाम' इति पाठः स्यात्.
[2] अत एव महाभारतेऽपि 'मुरुं च नरकं चैव' (सभापर्वणि १४-१४) इति 'क्षुरान्तान् मौरवान् पाशान्' (सभापर्वणि ५५-२८) इति चोक्तं दृश्यत इति बोध्यम्। तत्रैवोत्तरश्लोके 'संछिद्य पाशान् शस्त्रेण मुरं हत्वा सहान्वयम्' (सभा. ५५-२९) इति, तथा विष्णुपुराणे 'ततो मुरस्समुत्तस्थौ तं जघान च केशवः। मुरस्य तनयन्सप्तसहस्रांस्तांस्ततो हरिः' (५-१७-१८) इति दर्शनात् प्रसिद्धोऽकारान्तोऽपीति बोध्यम्.

वीक्ष्य तं विविशुर्दुर्गं दिवाभीता इवासुराः ।
उद्यन्तमिव तिग्मांशुमुदयाद्रौ गरुत्मति ॥ ७७ ॥

वीक्ष्येति—अथासुराः प्राग्ज्योतिषपुरनिवासिनः उदयाद्रौ उद्यन्तं तिग्मांशुं सूर्यमिव गरुत्मति तं वीक्ष्य दिवाभीताः उलूका इव दुर्गं गुहास्थानीयं विविशुः ॥ ७७ ॥

अभिमानोदित[1]व्यक्तिरहङ्कार इवोल्बणः ।
महतो दैत्यनगरान्निरगान्नरकासुरः ॥ ७८ ॥

अभिमानेति—अभिमानेन गर्वेण उदिता उद्गता व्यक्तिः यस्य स तथोक्तः, गर्वोद्धत इति यावत्, उल्बणः उत्कटः नरकासुरः नरक इत्यसुरः अहङ्कारः [2]अहङ्कारतत्त्वमिव महतो विपुलात् दैत्यनगरात् निरगात् निर्गतः । 'इणॅं गतौ' (अदादि १०४५) इति धातुः । 'इणो गा लुङि' (पा. सू. २-४-४५) इति गादेशः । अहङ्कारोऽप्यभिमानोदितव्यक्तिः अभिमानशब्दोक्त[3]स्वरूपः, महतः महत्तत्वात् निर्गतश्च । 'वैकारिकोऽहङ्कारोऽभिमान [4]इत्यर्थान्तरम्' इति, "प्रकृतेर्महान् महतोऽहङ्कारः" इति च देवलस्मरणात् ॥ ७८ ॥

तमस्त्रमायाभ्यधिका दानवाः पर्यवारयन् ।
प्रकटच्छन्नकौटिल्याः पाषण्डमिव हैतुकाः ॥ ७९ ॥

तमिति—अस्त्रमायाभ्यधिकाः अस्त्रेषु केचित् शाम्बरीष्वपरे प्रवीणा दानवाः तं नरकं पर्यवारयन् परिवारयन्ति स्म । 'वृञ् आवरणे' (चुरादि १८१४) इति धातुश्चुरादावपि पठ्यते । तस्येदं रूपम् । कथमिव? प्रकटच्छन्नकौटिल्याः केचित्प्रकटकौटिल्याः अन्ये छन्न-

---

[1] व्यक्तेरहं–म. मु. [2] अहङ्कार इव–घ. [3] शब्दस्वरूपः–घ. ङ.
[4] इत्यनर्थान्तरम्' इति पाठः स्यात्.

कौटिल्याश्च, कौटिल्यं वेदविरुद्धमताङ्गीकरणमभिसंहितम्, हैतुकाः हेतुभिर्जयन्तः वेदाननुमतयुक्त्यवलम्बना वादिनः पाषण्डं वेदबाह्यलिङ्गधारिणं क्षपणकादिकमिव । "मोक्षावलम्बिनः प्रायः पाषण्डा बाह्यलिङ्गिनः" इति वैजयन्ती । हैतुका इति "तेन दीव्यति खनति जयति जितम्" (पा. सू. ४-४-२) इति ठक्प्रत्ययः, "इसुसुक्तान्तात्कः" (पा. सू. ७-३-५१) इति कादेशश्च ॥ ७९ ॥

**संयुगे रजसोद्रिक्ते तस्मिन् सत्वतमस्त्विषोः ।**
**अर्थिप्रत्यर्थिनोरासीदनभिव्यक्तरूपता ॥ ८० ॥**

**संयुग इति**—सत्वतमस्त्विषोः [1]सत्वतमोगुणाभयोः तत्सदृशयोरिति यावत्, अर्थिप्रत्यर्थिनोः रजसा पांसुना उद्रिक्ते तस्मिन् संयुगे अनभिव्यक्तरूपता [2]अलक्षितरूपतां आसीत् । रजोगुणोद्रेकात्सत्वतमसोरभिभवो भवतीति भावः ॥ ८० ॥

**शरधारासहस्रेण छादयन्नरको दिशः ।**
**स्वहेतुमभिसंपेदे समुद्रमिव तोयदः ॥ ८१ ॥**

**शरेति**—नरकः शरधाराणां बाणवृष्टीनां सहस्रेण दिशः [3]छादयन् सन् स्वस्य हेतुं जनकं कृष्णं तोयदः मेघः स्वहेतुं समुद्रमिव अभिसंपेदे प्रपेदे । मेघपक्षे—शरं जलम् । "शरं नीरे शरः काण्डे" इति विश्वः ॥ ८१ ॥

**नरकाम्बुदमुक्ताभिर्नाथो नाराचवृष्टिभिः ।**
**विपद्भिरिव तद्भक्तो विषमाभिर्न विव्यथे ॥ ८२ ॥**

**नरकेति**—नाथः कृष्णः नरक एवाम्बुदः तेन मुक्ताभिः

---

[1] सत्वतमोगुणोभयोः—घ. ट. [2] 'अनभिव्यक्तरूपता' इतीदं घ. ट.-कोशयोर्नास्ति. [3] छादयन् स्वस्य—घ. ट.

नाराचवृष्टिभिः अयोमयबाणवर्षैः तद्भक्तः कृष्णस्य भक्तः विषमाभिः दुस्तराभिः विपद्भिरिव न विव्यथे न व्यथितो बभूव ॥ ८२ ॥

**दृप्यतामथ दैत्यानां [1] ध्वनिरुत्कम्पयन्दिवम् ।**
**पाञ्चजन्यप्रणादेन पर्यभूयत भूयसा ॥ ८३ ॥**

दृप्यतामिति—अथ युद्धारम्भानन्तरं दृप्यतां अहंकुर्वतां दैत्यानां दिवं स्वर्गमुत्कम्पयन् ध्वनिः सिंहनादशब्दः भूयसा बहुतरेण पाञ्चजन्यप्रणादेन भगवच्छङ्खध्वनिना पर्यभूयत परिभूतोऽभवत् ॥ ॥ ८३ ॥

**दिदृक्षोपगतानां तद्देवानां रोमहर्षणम् ।**
**अदीव्यत रणद्यूतमन्तरस्थयशःपणम् ॥ ८४ ॥**

दिदृक्षेति–दिदृक्षया द्रष्टुमिच्छया उपगतानां देवानां [2] सुराणां दीव्यन्तीति व्युत्पत्त्या द्यूतकृतां रोमहर्षणं [3] भयेनाश्चर्येण च रोम्णां हर्षणं अन्तरस्थयशःपणं अन्तरस्थः कश्चिदपि प्राग्जयपराजय[4]निर्णयाभावान्मध्यगतः यश एव पणो मूलधनं आह्वत्वेन मध्ये स्थापितं धनं यस्मिंस्तत् रणमेव द्यूतं अदीव्यत दीव्यते स्म । कृष्णनरकाभ्यामिति शेषः । दीव्यतेः कर्माणि लङ् ॥ ८४ ॥

**प्रतिविव्याध दैतेयं बाणैरशनिभीषणैः ।**
**पक्षवन्तमिवाद्रीन्द्रं प्रकुप्यन् पाकशासनः ॥ ८५ ॥**

प्रतिविव्याधेति—अशनिभीषणैः [5] वज्रवद्भयङ्करैः बाणैः दैतेयं असुरं प्रतिविव्याध विध्यन्तं स्वयमपि विव्याध, शौरिरिति शेषः, कथमिव ? पक्षवन्तं पतत्रवन्तं अद्रीन्द्रं प्रकुप्यन् पाकशासन इव ॥ ८५ ॥

---

[1] ध्वनिरुत्तम्भयन्–ग्र. मु. [2] सुराणामेव द्यूत–ञ. [3] जयेनाश्चर्येण–घ. ट. [4] जयाभावा–घ. ट. [5] वज्रवद्भीषणैः–घ.

**शरसंहतयस्तस्य क्षरन्त्यश्शार्ङ्गशैलतः ।**
**द्विधा चक्रुस्स्ववेगेन द्विषद्दलमहार्णवम् ॥ ८६ ॥**

**शरेति**—तस्य कृष्णस्य शार्ङ्गशैलतः चापादेव गिरेः क्षरन्त्यः शराः बाणा एव शराणि जलानि तेषां संहतयः स्ववेगेन द्विषद्दलमेव महार्णवं द्विधा चक्रुः विदारयामासुः ॥ ८६ ॥

**तस्य ज्यास्वनगीतानि समयुज्यन्त संयुगे ।**
**करिणां कर्णतालैश्च कबन्धानां च ताण्डवैः ॥ ८७ ॥**

**तस्येति**—तस्य कृष्णस्य ज्यास्वनाः मौर्वीध्वनय एव गीतानि करिणां कर्णतालैः कर्णकपालैः "कर्णशब्दात् परस्तालः कलापार्थस्तु दन्तिनाम्" इति यादवः, तालैः वाद्यविशेषैरित्यपि प्रतीयते, कबन्धानां अशिरस्कशरीराणां ताण्डवैश्च समयुज्यन्त संयुक्तान्यभूवन् । [1]एवमपूर्वं सङ्गीतमासीदिति भावः । महारणे बहुषु निपातितेषु कबन्धानि नृत्यन्तीति प्रसिद्धिः । समयुज्यन्तेति कर्मकर्तरि प्रयोगः । ताण्डवादिभिर्गीतं युनक्ति सम्बध्नाति शौरिरिति [2]गीतं कर्म, तस्यैव कर्तृत्वं विवक्षितम् । तत्र च कर्मकर्तरि यकि प्राप्ते 'सृजियुज्योः श्यंस्तु' (वा. १८७७) इति यकोऽपवादः श्यन्प्रत्ययः ॥ ८७ ॥

**दैत्यशोणितदिग्धाभिस्तद्बाणततिभिर्नभः ।**
**रुरुधे रोषताम्राभिः कृतान्तस्येव दृष्टिभिः ॥ ८८ ॥**

**दैत्येति**—दैत्यानां शोणितेन दिग्धाभिः रूषिताभिः अत एव रोषताम्राभिः कृतान्तस्य दृष्टिभिः अवलोकनैरिव स्थिताभिः तस्य कृष्णस्य बाणवृष्टिभिः नभो रुरुधे रुद्धं आवृतम् । कर्मणि लिट् ॥ ८८ ॥

---

[1] एवमपूर्वसङ्गीत–घ. ट. [2] गीतिकर्मकस्यैव–घ. ट.

**द्विरदाश्शरनिर्भिन्नकुम्भनिर्मुक्तमौक्तिकाः ।**
**क्षरन्तः करकासारं कल्पमेघा इवाबभुः ॥ ८९ ॥**

**द्विरदा इति**—शरानिर्भिन्नैः [1]भगवद्बाणदलितैः कुम्भैः निर्मुक्तमौक्तिकाः विसृष्टमुक्ताफलाः द्विरदाः करकासारं घनोपलानां वेगवृष्टिं क्षरन्तः कल्पमेघाः प्रलयघना इव आबभुः आभान्ति स्म ॥ ८९॥

**नासावालधिभिर्नागाः क्षरन्तो रक्तनिर्झरान् ।**
**शशंसुर्लाघवं तस्य निष्पत्राकृतसायकम् ॥ ९० ॥**

**नासेति**—नासा [2]शुण्डा च वालधिश्च नासावालधीति प्राण्यङ्गत्वादेकवद्भावः, बहुनासावालधिविवक्षायामेकशेषत्वेन बहुवचनान्तता, नासासहिता वालधय इति मध्यमपदलोपिसमासो वा, तैः रक्तनिर्झरान् असृक्प्रवाहान् क्षरन्तः नागाः गजाः तस्य कृष्णस्य निष्पत्राकृतसायकं नासायां प्रविश्य वालधौ निर्गमनापादकेन अतिवेग[3]मोक्षेणातिव्यथितबाणं लाघवं हस्तशैघ्र्यं शशंसुः सूचयामासुः । "कृष्णागरुणि शीघ्रे च स्पृक्कायां च स्मृतो लघुः" इति विश्वः । 'सपत्रनिष्पत्रादतिव्यथने' (पा. सू. ५-४-६१) इति कृञो योगे निष्पत्रशब्दाड्डाचि निष्पत्राकृतशब्दस्साधुः ॥ ९० ॥

**[4]अग्रिमं विशतां स्कन्धमामूलमहितां चमूम् ।**
**शराणां तस्य संधाननिपातौ न द्विषोऽविदुः ॥ ९१ ॥**

**अग्रिममिति**—अहितां द्वेषिणीं चमूं अग्रिमं स्कन्धं अग्रभागगतसेनाव्यूहं, आरभ्येति शेषः, आमूलं मूलं सेनाया अपरावधिः तत्पर्यन्तं विशतां प्रविशतां तस्य कृष्णस्य शराणां सन्धाननिपातौ द्विषो नाविदुः नाजानन्निति कृष्णस्य हस्तलाघवातिशयोक्तिः । अविदुरिति वेत्तेर्लङ् । 'सिजभ्यस्तविदिभ्यश्च' (पा. सू. १-४-१०९) इति झेर्जुस् ॥ ९१ ॥

---

[1] भगवद्बाणताडितैः-ग. घ. ट. [2] शुण्डा वालधिश्च-घ. ट. [3] अत्र 'मोक्षेणातिव्यथयितृबाणं' इति पाठः स्यात्. [4] अग्रमविशताम्-घ. झ. ट.

लक्ष्यमेकमभूत्तस्य शराणामुत्पलत्विषाम् ।
अमरस्त्रीकटाक्षाणामप्यभङ्गुरधन्वनः ॥ ९२ ॥

लक्ष्यमिति—[1]अभङ्गुरधन्वनः स्थिरधन्वनः तस्य कृष्णस्य उत्पलत्विषां इन्दीवररुचां शराणां उत्पलत्विषां अमरस्त्रीकटाक्षाणां च एकं लक्ष्यमभूत् । कृष्णशरैर्यो लक्षीकृतः तस्य निधनं निश्चित्य तमेवाप्सरसः पतिंवरा अपश्यन्नित्यर्थः ॥ ९२ ॥

चिरप्रार्थितभीतानां स तासामेव शात्रवान् ।
स्वयंवरपतींश्चक्रे सुधन्वा सुरसुभ्रुवाम् ॥ ९३ ॥

चिरेति—सुधन्वा शोभनं [2] धनुर्यस्य सः कृष्णः शात्रवान् अरीनसुरान् चिरप्रार्थितभीतानां चिरमसुरैः प्रार्थितानां तेभ्यो भीतानां च तासामेव सुरसुभ्रुवां अप्सरसां स्वयंवरपतींश्चक्रे । येभ्यो भीता याः तत्प्रार्थनां नाङ्गीचक्रुः तासामेव तान् अहमहमिकया वरणीयान् वितेन इत्यर्थः । भयंकरासुरदेहनिपातनेन दिव्यदेहप्रापणादिति भावः ॥ ९३ ॥

त्यक्त्वा [3] भीतिवृतांस्तत्र विमुक्तान् जीविताशया ।
सार्धमप्सरसः कीर्त्या वीरान् स्वयमवृण्वत ॥ ९४ ॥

त्यक्त्वेति—तत्र युद्धे कीर्त्या सार्धं अप्सरसः देववेश्याः भीतिवृतांस्त्यक्त्वा जीविताशया विमुक्तान् वीरान् स्वयमवृण्वत स्वयं वृण्वते स्म । पतिवरण[4]प्रवृत्ताः स्त्रियः स्त्र्यन्तरयुक्तान् विहाय स्त्र्यन्तररहितान् वृण्वत इत्युचितमिति भावः । भीतानां न कीर्तिः नापि स्वर्गोऽभूत् । वीराणां तु रणे अभिमुखं हतानां कीर्तिस्वर्गावभूतामिति फलितार्थः ॥ ९४ ॥

---

1 अभङ्गुरं धनुर्यस्य तस्य--घ. ट. 2 शोभनधन्वनस्तस्य—ग. 3 भीतिव्रतान्—घ. म्र. मु. 4 प्रयुक्ताः—ग.

**अनन्तस्य तदाऽनन्तैरसुरैराहवोत्सवः ।**
**जयश्रियं च सत्यां च सम्मते समतोषयत् ॥ ९५ ॥**

**अनन्तस्येति**—तदा अनन्तस्य कृष्णस्य अनन्तैः निरवधिकैः असुरैः सह आहवोत्सवः युद्धमहः जयश्रियं जयलक्ष्मीं च सत्यां सत्यभामां च सम्मते इष्टे उभे अपि समतोषयत् सन्तोषयति स्म । जयश्रियः स्वोचितं कृष्णमासाद्य शोभमानता भाक्तस्सन्तोषः, तद्दर्शनेन सत्याया मुख्यः सन्तोष इति विशेषः ॥ ९५ ॥

**स्वबाधनियतस्तत्र परबाधाभिलाषिणाम् ।**
**प्रयासस्सुरशत्रूणां जात्युत्तरमिवाभवत् ॥ ९६ ॥**

**स्वबाधेति**—तत्र युद्धे परबाधाभिलाषिणां प्रतिपक्षबाधेच्छूनां सुरशत्रूणां असुराणां स्वबाधनियतः स्वबाधावश्यम्भावयुक्तः [1] प्रयासः विक्रमणयत्नः जात्युत्तरमिवाभवत्, कथासु वादिना प्रतिवादिमतदूषणार्थं उक्तमुत्तरं स्वमतस्य व्याघातकं चेत् जात्युत्तरमुच्यते, तत्सदृशोऽभवदित्यर्थः । तत्र सन्नद्धानामसुरयोधानां भगवद्बाणैरवश्यं विनिपात इति स्वसन्नाह एव स्वबाधको जात इति भावः ॥ ९६ ॥

**विसन्धिविग्रहाः क्षिप्तयानासनसमाश्रयाः ।**
**द्वैधीभावसृजो योधा दुर्नयस्था इवाभवन् ॥ ९७ ॥**

**विसन्धीति**—विसन्धिविग्रहाः विश्लिष्टसन्धिकशरीराः क्षिप्तयानासनसमाश्रयाः यानानि वाहनानि आसनानि [2] तदुपरिस्थितानि कुथादीनि, क्षिप्तः निरस्तः यानासनानां समाश्रयः येषां ते तथोक्ताः द्वैधीभावसृजः द्वैधीकरणत्यजः भवतेर्ण्यन्तादेरचि भावशब्दः क्रियावाची, 'सृज विसर्गे' (तुदादि १४१५) इति धातुः विसर्जनार्थः, एवंभूता

---

[1] प्रयासो मरण—घ. ट. [2] तदुपरिस्थित्यादीनि क्षिप्तः—घ. ट.

इति योधा भगवद्बाणार्दिता योधा उच्यन्ते । यद्वा शौर्येण परानर्दयन्त एवमुच्यन्ते । तत्र पक्षे विच्छिन्नसन्धयः परेषां विग्रहा यैस्ते तथोक्ताः, क्षिप्तः परेषां यानासनसमाश्रयः यैस्ते तथोक्ताः, द्वैधीभावसृजः परेषां द्विधाभवनं कुर्वन्त इति विशेषणानामर्थः । ते दुर्नयस्थाः दुर्नीतौ स्थिता इवाभवन् । सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाः षड्गुणा नीतिशास्त्रोक्ताः । तत्र सन्धिररिणा सन्धानम् । विग्रहस्तेन कलहः । यानं तज्जिगीषया यात्रा । आसनं यात्रां विहाय स्वस्थाने स्थितिः । द्वैधीभावः द्वयोः परस्परं [1] विरुद्धयोः उभयत्र दत्तपदता । समाश्रयः प्रबलेन बाध्यमानस्य इतरस्य आश्रयः । एते गुणा यथाकालं प्रयोक्तव्याः । [2] दुर्नयस्थास्तद्राहिता भवन्तीत्युपमानता ॥ ९७ ॥

अनघव्यवसायानामसङ्गत्यक्तवर्ष्मणाम् ।
योगिनामिव तत्रासीदपरावर्तना [3] गतिः ॥ ९८ ॥

अनघेति—तत्र युद्धे अनघव्यवसायानां अप्रतिबन्धोत्साहानां असङ्गत्यक्तवर्ष्मणां निस्सङ्गं यथा तथा त्यक्तशरीराणां "शरीरं वर्ष्म विग्रहः" इत्यमरः, योधानामिति शेषः, योगिनामिव अपरावर्तना परावर्तनरहिता गतिरासीत् ॥

"द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥"

इति तुल्यगतिस्मरणादिति भावः ॥ ९८ ॥

तनुं तत्र मुकुन्देन त्याजितान् महती स्वयम् ।
अवृणोदनघा कीर्तिरधिविन्नाप्सरोगणान् ॥ ९९ ॥

तनुमिति—तत्र युद्धे मुकुन्देन तनुं त्याजितान् हतान् अधिविन्नाप्सरोगणान् अधिविन्नः अध्यूढः प्रथमलब्धः अप्सरोगणः

---

[1] विरुध्यतोः—ग. अ. [2] दुर्नयस्थास्तु दुःखिता—घ. ट. [3] परावर्तिनां गतिः—प्र. मु.

यैस्तान् योधान् अनघा निरवद्या महती कीर्तिः स्वयं अवृणोत् स्वयंवरेण प्राप्तवती । हननानन्तरमेव अप्सरोभिर्गृहीतेषु योधेषु कीर्तिरपि तेषां लोके प्रतिष्ठिता अभूदित्यर्थः । 'ण्यन्ते कर्तुश्च कर्मणः' (वा. १०९९) इति तनुत्यागे हतानां प्रयोज्यकर्मणां [1]कर्मत्वव्यक्तेरनभिधानात् तनुकर्मत्वमनभिहितमिति तत्र तृतीया ॥ ९९ ॥

निस्सहायीकृतस्तत्र शरवर्षैर्धरासुतः ।
बहुमन्यत तेनैव द्वन्द्वयुद्धमुपस्थितम्[2] ॥ १०० ॥

निस्सहायीकृत इति—तत्र शरवर्षैः भगवद्बाणवृष्टिभिः निस्सहायीकृतः हताखिलसैन्यः धरासुतः नरकः तेन कृष्णेनैव सह उपस्थितं प्राप्तं कृष्णस्य लक्ष्यान्तराभावेन अस्यैव लक्षीकरणादिति भावः, द्वन्द्वयुद्धं मिथोयुद्धं बहुमन्यत समाभिमानाद्बहुमेने ॥ १०० ॥

[3]कृतप्रतिकृतैरस्त्रप्रयोगैः क्रीडतोस्तयोः ।
अदृष्टान्तमभूद्युद्धमन्यदृष्टान्तवर्जितम् ॥ १०१ ॥

कृतेति—कृतप्रतिकृतैः केनचित्प्रथमं कृतैः ततः तत्प्रतिपक्षतया परेण कृतैश्च अस्त्रप्रयोगैः क्रीडतोस्तयोः अदृष्टान्तं अनवलोकितावधिकं युद्धं अन्यदृष्टान्तवर्जितं दृष्टान्तान्तररहितं स्वेनैवोपमेयमभूत् ॥ १०१ ॥

वक्रवृत्तिस्सरुधिरो लोहिताङ्गो महीसुतः ।
प्राप्य यादवभास्वन्तं मूढस्समभवत्क्रमात् ॥ १०२ ॥

वक्रेति—वक्रवृत्तिः कुटिलचारित्रः सरुधिरः शस्त्रवेधैरसृक्सहितः अत एव लोहिताङ्गः महीसुतः नरकः यादवः कृष्ण एव भास्वान् तं

---

[1] अत्र 'कर्मत्वस्य केनाभिधानात् तनुकर्मत्वमनभिहितमिति तत्र द्वितीया' इति पाठेन भाव्यमिति भाति. [2] मवस्थितम्—प्र. मु. ट. [3] कृतैरस्त्रैः प्रयोगैः—घ. ट.

प्राप्य क्रमात् शस्त्रवेधक्रमेण मूढः कर्तव्यमूढस्समभवत् । अङ्गारको [1]यथा अर्कं प्राप्य सन्निकर्षक्रमेण मूढः अस्तं गतो भवति तद्वदिति गम्यते । अङ्गारकपक्षे—वक्रस्य शनैश्चरस्य वृत्तिरिव वृत्तिर्यस्येति वक्रवृत्तिः, द्वयोरपि पापग्रहत्वात् जातकादिषु प्रायः फलसाम्याच्च, [2]स इति भिन्नं पदं प्रसिद्धपरामर्शि, रुधिर इति विशेष्यनिर्देशः, लोहिताङ्गः स्वतोऽरुणाङ्गः, महीसुतः धरण्यास्तनय इति तुल्यमुभयत्र । "कर्षको रुधिरो भौमः" इति वैजयन्ती ॥ १०२ ॥

**स्वायुधैकसहायस्तु देवस्स्वच्छन्दयादवः ।**
**निरयापरपर्यायं रिपुं चक्रे निरायुधम् ॥ १०३ ॥**

**स्वायुधेति**—स्वायुधमेवैकोऽन्यनिरपेक्षस्सहायो यस्येति तथोक्तः स्वच्छन्दः स्वाधीनः अकर्मवश्यः यादवः यदुवंश्यः देवः कृष्णः निरयापरपर्यायं निरयशब्दः अपरः पर्यायः स्वेन सह एकार्थवाचको यस्येति नरकशब्दपरमिदम्, तेन तद्वाच्यमिति लक्षणयोच्यते, रिपुं शत्रुं निरायुधं चक्रे । तस्यायुधान्यच्छिनदित्यर्थः ॥ १०३ ॥

**[3]क्रोधरक्ततनुर्दैत्यः क्षरच्छोणितनिर्झरः ।**
**गृहीतपादसञ्चारो गैरिकाद्रिरिवाबभौ ॥ १०४ ॥**

**क्रोधेति**—क्रोधरक्ततनुः कोपारुणशरीरः क्षरन्ति शोणितान्येव निर्झरा यस्येति क्षरच्छोणितनिर्झरः दैत्यः नरकः गृहीतः पादसञ्चारो येन तादृशः गौरिकाद्रिः रक्तधातुमयः पर्वत इव आबभौ आभाति स्म ॥ १०४ ॥

---

[1] यथा सूर्यं प्राप्य—ज. यथाऽस्तं प्राप्य—घ. ट. [2] सपदं प्रसिद्धपरामर्शि—घ. ट. [3] क्रोधयुक्ततनु—ज.

**निशितैस्तस्य नाराचैर्निर्भिन्नरथसारथिः ।**
**आस्फोटितभुजस्तार्क्ष्यमजिघांसदमर्त्यजित् ॥ १०५ ॥**

**निशितैरिति**—निशितैः उत्तेजितैः तस्य कृष्णस्य [1] नाराचैः आपुङ्खमयोमयैः शरैः निर्भिन्नरथसारथिः अमर्त्यजित् देवानां जेता नरकः आस्फोटितभुजः आहतभुजस्सन् तार्क्ष्यमजिघांसत् पादचारेणागत्य गरुडं हन्तुमैच्छत् । "प्रक्ष्वेडनस्तु नाराच [2]ऐषणश्चायसश्शरः इति यादवः ॥ १०५ ॥

**निसर्गतमसस्तस्य जिह्मगस्याङ्गमुत्तमम् ।**
**रथपादेन चिच्छेद राहोरिव रमापतिः ॥ १०६ ॥**

**निसर्गेति**—रमापतिः कृष्णः निसर्गतमसः स्वाभाविकतमोगुणस्य जिह्मगस्य [3]कुटिलाचारस्य नरकस्य राहोरिव उत्तममङ्गं शिरः रथपादेन चक्रेण चिच्छेद । राहुपक्षे—निसर्गः स्वभावसिद्धः तमश्शब्दो यस्मिन् तस्य तमश्शब्दवाच्यस्य जिह्मगस्य सर्पस्य ॥ १०६ ॥

**उदतिष्ठत हाकारस्ततो युगपदेकधा ।**
**देवदानवसौधेभ्यो हर्षशोकसमुद्भवः ॥ १०७ ॥**

**उदतिष्ठतेति**—ततः नरकशिरश्छेदानन्तरं देवदानवसौधेभ्यः सुरासुराणां हर्म्येभ्यः हर्षशोक[4]समुद्भवः सुराणां हर्षः, असुराणां शोक इति तदुभयप्रभवः हाकारः हाशब्दः युगपत् समसमयमेव एकधा [5]एकप्रकारेण अत्युच्चतया उदतिष्ठत उत्थितः, प्रसृतोऽभवत् । न तूत्थानमूर्ध्वकर्म विवक्षितम् । परिस्पन्दरूपानूर्ध्वक्रियायामेव 'उदोऽनूर्ध्वकर्मणि' (पा.सू. १–३–२४) इत्यात्मनेपदविधानात् । प्रसरणपरत्वे तु अपरिस्पन्दस्यापि शब्दस्य आरोपितप्रसरणविवक्षया आत्मनेपदोपपत्तिः॥

---

[1] नाराचैः अयोमयैः–ञ.  [2] 'ऐषणश्चायसे शरे' इति मुद्रितयादवकोशे दृश्यते.  [3] कुटिलव्यापारस्य–घ. ट.  [4] समुद्भवः हाकारः–घ. ट.  [5] एकेन प्रकारेण–ग. ञ.

**स्फुरद्भ्रुकुटि दैत्यस्य रोषदष्टाधरं मुखम् ।**
**[1] निकृत्तमपि न द्रष्टुं प्रबभूवुर्दिवौकसः ॥ १०८ ॥**

**स्फुरदिति**—दिवौकसः देवाः स्फुरद्भ्रुकुटि स्पष्टभ्रूभङ्गं रोषेण दष्टाधरं दैत्यस्य मुखं निकृत्तं छिन्नमपि द्रष्टुं न प्रबभूवुः न शेकुः । [2] चिररूढमूलभयानुवृत्त्येति भावः ॥ १०८ ॥

**निकृत्तशिरसं देवी निजाङ्के पतितं सुतम् ।**
**महती मेदिनी दीनं कम्पमानाऽन्वकम्पत ॥ १०९ ॥**

**निकृत्तेति**—महती पूज्या मेदिनी देवी निकृत्तशिरसं निजाङ्के स्वोत्सङ्गोपरितले पतितं दीनं शोच्यं सुतं कम्पमाना सती अन्वकम्पत अनुकम्पते स्म । तस्मिन् पतिते पतनवेगात् [3] भूगोलकस्य कम्पो भूदेव्याः कृपोदयश्च जात इत्यर्थः ॥ १०९ ॥

**अथ सा दैत्यहन्तारं प्रणम्य नतजीवितम् ।**
**अयाचत दयासिन्धुमात्मजस्य शुभां गतिम् ॥ ११० ॥**

**अथेति**—अथ सा देवी दैत्यानां हन्तारं नतजीवितं प्रणतानां जीवितहेतुम्, तद्धेतुत्वात्तद्व्यपदेशः, दयासिन्धुं दयायास्समुद्रवन्निदानभूतं देवं प्रणम्य आत्मजस्य शुभां गतिं अयाचत । दुहादित्वाद्द्विकर्मकत्वम् ॥ ११० ॥

**तुष्टाव च पतिं तुष्टा मेदिनी विश्ववेदिनी ।**
**[4] स्नपयन्तीव संयत्तं दन्तदीधितिगङ्गया ॥ १११ ॥**

**तुष्टावेति**—विश्ववेदिनी सर्वज्ञा तुष्टा "मुदिते मुदिताऽत्यर्थम्" इति स्मरणात् पतिहर्षदर्शनेन हृष्टा मेदिनी संयत्तं प्राप्तयुद्धयत्नं, 'यती

---

[1] निकृत्तमपि तद्द्रष्टुं न बभूवुः–ग. घ. ट. [2] पूर्वं रूढ–घ. ट.
[3] भूकम्पो–घ. ट. [4] स्नपयन्तीव सा देवं दन्त–ग्र. मु.

प्रयत्ने ' (भ्वादि ३०) इति धातोः संपूर्वात् क्तः, पतिं कृष्णं दन्तदीधित्यैव गङ्गया स्नपयन्तीव युद्धश्रमापनोदायेति भावः, तुष्टाव स्तुतवती ॥ १११ ॥

**अहमस्मि विभूतिस्ते भूतधात्री त्वया धृता ।**
**अशेषाधारमेकं त्वामनाधारमधीयते ॥ ११२ ॥**

**अहमिति**—अहं भूतधात्री प्राणिनां धारणी त्वया धृता ते तव विभूतिः शक्तिभेदोऽस्मि । सर्वप्राण्याधारभूताया अपि किमाधारापेक्षा तत्राह---त्वामेकमेव अशेषाधारं सर्वस्याधारं अनाधारं स्वयमाधारान्तर-रहितं च अधीयते आमनन्ति । अतस्त्वद्व्यतिरिक्तं सर्वमाधारसापेक्ष-मिति भावः ॥ ११२ ॥

**तिसृभिश्शक्तिभिर्युक्तं षाड्गुण्यप्रथितोदयम् ।**
**अधिराजमशेषस्य जगदुस्त्वां जिताहितम् ॥ ११३ ॥**

**तिसृभिरिति**—तिसृभिश्शक्तिभिः श्रीभूमिनीलाभिः, राज-पक्षे—उत्साहप्रभुमन्त्रशक्तिभिः युक्तम्, षड्गुणाः ज्ञानशक्त्यादयः, पक्षे—सन्धिविग्रहादयः, त एव षाड्गुण्यम्, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्, तेन प्रथितोदयं प्रपञ्चितसमृद्धिकं जिताहितं जितशात्रवम्, त्वामशेषस्य जगतः अधिराजं अधिकं राजानं जगुः निगदन्ति स्म । अधिराज इति [1]प्रादिसमासः । [2]समासान्तष्टच्प्रत्ययश्च ॥ ११३ ॥

**अपि [3]कोटिमुखैस्सर्वैरनन्तेनाप्यनेहसा ।**
**नाथ त्वद्गुणदुग्धाब्धि[4]पृषदास्वादनं क्षमम् ॥ ११४ ॥**

**अपीति**—हे नाथ कोटिमुखैः प्रत्येकं कोटिकोटिसङ्ख्याक-मुखैः, सप्तपर्णादिवत् सङ्ख्याशब्दस्य वीप्सार्थता, सर्वैरपि प्राणिभिः

---

1 ' प्रादयो गताद्यर्थे प्रथमया ' (वार्तिकं १३३५) इति वार्तिकेनेत्याशयः । 2 ' राजाहस्सखिभ्यष्टच् ' (पा. सू. ५-४-९१) इति सूत्रेणेति भावः । 3 नापि-म. मु. 4 पृषता-ङ. म. मु.

अनन्तेन अनवधिकेनापि अनेहसा कालेन [1]त्वद्गुणदुग्धाब्धिपृषदास्वादनं तव गुणः दयासौलभ्यादिरेव दुग्धाब्धिः तस्य बिन्दुमात्रास्वादनं क्षमं योग्यम् । सर्वैरिति तृतीयोपपत्तये कर्तुमित्यध्याहार्यम् । सर्वैरपि मिलित्वा तावदेव कर्तुं शक्यमित्यर्थः । 'अन्तर्धौ येनादर्शनम्' (पा. सू. १-४-२८) इति सूत्रनिर्देशात् [2]अनध्याहारेणापि तृतीयोपपद्यत इत्यपि तत्र तत्रोक्तम् ॥ ११४ ॥

**अकर्तुमन्यथाकर्तुं कर्तुमप्यखिलं क्षमम् ।**
**लक्ष्मीलक्षणमाहुस्त्वां लङ्घितात्रिविधावधिम् ॥ ११५ ॥**

**अकर्तुमिति**—त्वां निखिलं जगत् प्रलयकाले अकर्तुं सर्गादौ कर्तुं [3]मन्वन्तरादिभेदेष्वन्यथाकर्तुं च क्षमं [4]शक्तं लङ्घितत्रिविधावधिं विभुत्वान्नित्यत्वात्सर्वशरीरकत्वाच्च अतिक्रान्तदेशकालवस्तुपरिच्छेदं लक्ष्मीलक्षणं वक्षःस्थितलक्ष्मीचिह्नं "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" (तै. आ. ३-१३) इति [5]श्रुत्युदितं परमपुरुषं आहुः ॥ ११५ ॥

**स्थिरत्रसविभक्तं ते चिदचिद्भेदचित्रितम् ।**
**स्वसृष्टमिदमुद्यानं त्वदन्यो नास्ति रक्षितुम् ॥ ११६ ॥**

**स्थिरेति**—स्थिरत्रसविभक्तं स्थावरजङ्गमरूपेण विभक्तं "चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम्" इत्यमरः, चिदचिद्भेदचित्रितं चेतनाचेतनभेदेन [6]कर्बुरितं स्वेन त्वया सृष्टं इदं जगदेव ते तव उद्यानं विहारास्पदत्वादुपवनं रक्षितुं त्वदन्यो नास्ति । त्वमेवास्य रक्षणे शक्त इत्यर्थः ॥ ११६ ॥

---

[1] त्वद्गुणस्सौलभ्यादिरेव–घ. ट. [2] अध्याहारेणापि–घ. [3] मन्वन्तरभेदेन चान्यथा–ग. [4] 'शक्तं' इति–घ. ट.–कोशयोर्न दृश्यते. [5] श्रुत्युक्तम्–ञ. [6] कारितं–ग.

**स्वातन्त्र्यपरतन्त्रस्त्वं पारतन्त्र्यस्वतन्त्रितैः ।**
**विहरस्यात्मसूत्रस्थैः [1] शकुनैरिव जन्तुभिः ॥ ११७ ॥**

**स्वातन्त्र्येति**—त्वं स्वातन्त्र्यपरतन्त्रः स्वातन्त्र्यवशवर्ती स्वातन्त्र्येण अखण्डितेन प्रेरितस्सन् पारतन्त्र्यस्वतन्त्रितैः पारतन्त्र्ये विषये स्वाधीनीकृतैः स्वाभाविकपारतन्त्र्यतया स्वभावेन पारतन्त्र्ये विषये भृतिग्रहणादिहेत्वन्तरानपेक्षकृतैः आत्मसूत्रस्थैः [2] आत्मा त्वत्स्वरूपं सूत्रमिव तत्र स्थितैः जन्तुभिः जीवैः शकुनैः पक्षिभिरिव विहरसि । 'स यथा शकुनिः सूत्रेण प्रबद्धः' (छान्दोग्ये ६-८-२) इति श्रुत्यर्थ इहानुसन्धेयः ॥ ११७ ॥

**सितासितगुणारब्धैः पाशजालैर्दुरत्ययैः ।**
**निबद्धाः पशवो नाथ त्वदेकाधीनमुक्तयः ॥ ११८ ॥**

**सितासितेति**—हे नाथ सितासितगुणारब्धैः सिततदितरगुणाः सत्वरजस्तमांसि [3] त एव सितासितानि सूत्राणि तदुत्पादितैः दुरत्ययैः दुर्लङ्घैः पाशजालैः पाशाः पुण्यपापकामक्रोधादयः सांसारिकबन्धकरत्वात् तेषां समूहैः करणैः निबद्धाः, त्वयेति शेषः, पशवः जीवाः "आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः[4]" इति पुराणवचनात् [5] त्वदेकाधीनमुक्तयः त्वय्येकस्मिन्नधीना मुक्तिर्येषां तथोक्ताः । एकशब्दसमासानन्तरं त्वच्छब्दस्य शिवभागवतवत्समासः ॥ ११८ ॥

**[6] यस्य त्वं यश्च हृद्यस्ते यस्यासौ तस्य यस्तथा ।**
**नाथ त्वत्पदमारुह्य न पुनस्तैर्निवर्त्यते ॥ ११९ ॥**

**यस्येति**—यस्य पुंसः त्वं हृद्यः प्रियः भक्तिगोचरः, यश्च ते तव हृद्यः प्रसादगोचरः, असौ त्वयि भक्तिमान् त्वत्प्रसादविषयो वा

---

[1] शकुन्तैरिव—**ग्र. दे. मु.** [2] आत्मत्वात्स्वरूपम्—**घ. ञ. ट.** [3] त एव गुणाः सूत्राणि—**घ. ट.** [4] गोविन्दवशवर्तिनः—**ग.** [5] 'पशवः पाशिताः पूर्वं परमेण स्वलीलया । तेनैव मोचनीयास्ते नान्यैर्मोचयितुं क्षमाः ॥' इति प्रमाणमत्रानुसन्धेयम्. [6] यस्य प्रियश्च हृद्यस्तं यश्चासौ तस्य ते तथा—**ग्र. मु.**

यस्य हृद्यः यदीयभक्तिगोचरः, तस्य त्वद्भक्तस्य त्वत्कृपाविषयस्य वा यः तथा हृद्यः प्रसादगोचरः, तैस्सर्वैरपि त्वत्पदं तव स्थानं आरुह्य पुनर्न निवर्त्यते । भावे लट् । तव भक्ताः, जन्मान्तरसुकृतैस्तव प्रसादविषयाः, तेषामुभयेषां भक्ताः, तदुभयप्रेमगोचराश्च, तव स्थानं प्राप्नुवन्ति, न च पुनरावर्तन्त इत्यर्थः ॥ ११९ ॥

**सुरासुरविभागोऽयं तुलाग्रन्यायतस्त्वया ।**
**कल्पितः कालपर्यायान्निम्नोन्नतसमक्रमः ॥ १२० ॥**

**सुरासुरेति**—अयं सुरासुराणां विभागः तुलाग्रन्यायतः तुलादण्डस्य ये अग्रे तद्रीत्या कालपर्यायात् कालभेदात् निम्नोन्नतसमक्रमः कदाचि[1]न्निम्नोन्नतक्रमः कदाचित्समक्रमश्च त्वया कल्पितः । तुलाग्रपक्षे क्रमः क्रमणं, सुरासुरपक्षे क्रमश्शक्तिः । "क्रमश्शक्तौ परीपाट्याम्" इति विश्वः । एवं वा श्लोकयोजना—अयं च सुरासुरविभागः तुलाग्रन्यायतः त्वया कल्पितः, यथा तुलादण्डं निर्मिमाणेन तदग्रद्वयं समपरिमाणं निर्मीयते, एवं सम एव त्वया सृष्टः, 'देवानां दानवानां च सामान्यमधिदैवतम्' (जितं ते) इति विशेषपक्षपाताभाववचनात्, तथाऽपि कालपर्यायात् स्वस्वकृतकर्मानुसारेण [2]यदारोपिततुलनीयपरिमाणानुसारेण तुलाग्र[3]द्वयवन्निम्नोन्नतसमक्रमो जात इति ॥ ॥ १२० ॥

**कस्त्वदङ्गीकृतं हन्ता कस्त्राता त्वज्जिघांसितम् ।**
**निहंसि पासि चैकस्त्वं स्वेन विश्वं परेण वा ॥ १२१ ॥**

**क इति**—त्वदङ्गीकृतं त्वया परिगृहीतं को हन्ता । त्वज्जिघांसितं त्वया हन्तुमिष्टं कस्त्राता, न कोऽपीत्यर्थः । उभयत्र तृन्प्रत्यय इति तद्योगे

---

1 निम्नोन्नतमक्रमः—अ. 2 अत्र 'घटारोपित' इति पाठस्स्यात्. 3 द्वयनिम्नोन्नत—ग. घ. ट.

द्वितीया । एकः अन्यनिरपेक्षः त्वं स्वेन परेण वा स्वरूपेण[1] इन्द्रादिरूपेण वा विश्वं जगत् निहंसि पासि [2]चकारः समुच्चयार्थः । जगति कानिचिद्वस्तूनि स्वयमेव संहरसि रक्षसि च, कानिचिदन्यमुखेनेत्यर्थः ॥ १२१ ॥

**वृद्धिसङ्कोचविषमा गतागतसहायिनी ।**
**नियतिः केन लङ्घ्येत निजच्छायानुकारिणी ॥ १२२ ॥**

**वृद्धीति**—वृद्धिसङ्कोचविषमा कदाचिद्वृद्ध्या कदाचित् सङ्कोचेन च विषमा [3]अनेकरूपा गतागतसहायिनी परत्रेह च गमनागमनयोः [4]सहगन्त्री, सहोपपदादयतेः ताच्छीलिको णिनिः, अत एव निजच्छायानुकारिणी आत्मच्छायासदृशी नियतिः पुण्यपापात्मकं कर्म केन लङ्घ्येत, निजच्छायावदेव न केनापि लङ्घितुमशक्येत्यर्थः । तथा च स्वस्वकृतकर्मानुसारेण प्राणिनां सम्पद्विपदाविति त्वयि वैषम्यनैर्घृण्यशङ्का नेति भावः ॥ १२२ ॥

**[5]नपुत्रवधमन्वीक्ष्य न दूये त्वन्मतस्थिता ।**
**न च पुत्राभिमानो मे मत्प्रसूतेषु जन्तुषु ॥ १२३ ॥**

**नपुत्रेति**—त्वन्मतस्थिता त्वदिष्टानुवर्तिनी अहं नपुत्रस्य त्वद्द्रोहादपकृष्टपुत्रस्य नरकस्य वधमन्वीक्ष्य न दूये न शोचामि । किञ्च

---

1 'इन्द्रादिरूपेण वा' इति ञ–कोशादन्यत्र न दृश्यते. 2 वाकारः–ग. घ. ट. 3 'अनेकरूपा' इति ग. घ. ट.–कोशेषु न दृश्यते. 4 सहायभूता–ग. घ. 5 'न पुत्रवधमुद्वीक्ष्य दूयेऽहं त्वन्मते स्थिता'–घ. ट. म. दे. मु. यद्यपि एतत्पाठाभिप्रायेणैव–तेष्वेव कोशेषु व्याख्यायामपि 'त्वदिष्टानुवर्तिनी न दूये न शोचामि' इति विवरणं दृश्यते, तथाऽप्युत्तरत्र 'अपकर्षोऽपि नञर्थः' इत्युक्तिदर्शनात् व्याख्यायां 'त्वदिष्टानुवर्तिनी' इत्यनन्तरं 'अहं नपुत्रस्य त्वद्द्रोहादपकृष्टपुत्रस्य नरकस्य वधमन्वीक्ष्य' इति पाठेन भाव्यमिति स एव पाठ ऊर्ध्वं निर्दिष्टः.

मत्प्रसूतेषु मदुत्पादितेषु जन्तुषु मे पुत्राभिमानोऽपि नास्ति, भेकादिष्विवेति भावः । अमानुष्योऽयमित्यादि प्रयोगात् अपकर्षोऽपि नञर्थ [1] इति शृङ्गारप्रकाशिका ॥ १२३ ॥

**सूदने कृतसङ्कल्पः स्वभक्तपरिपन्थिनाम् ।**
**यदि तीर्णप्रतिज्ञस्त्वं [2] किं मयेदं न मृष्यते ॥१२४ ॥**

**सूदन इति**—स्वभक्तानां ये परिपन्थिनः विरोधिनः तेषां सूदने हिंसने कृतसङ्कल्पः कृताध्यवसायः त्वं यदि तीर्णप्रतिज्ञः तादृशस्य नरकस्य सूदने तीर्णप्रतिज्ञः [3] तदा इदं नरकस्य सूदनं मया किं न मृष्यते न क्षम्यते । त्वदिष्टमेव ममापि हर्षदमिति भावः ॥ १२४ ॥

**[4] त्वन्मायाजृम्भितैर्देव ब्रह्माण्डैरपि लीयते ।**
**जन्मन्यपि सुरोधेषु जन्तुवर्गेषु का कथा ॥ १२५ ॥**

**त्वन्मायेति**—हे देव त्वन्मायाजृम्भितैः त्वदीयमायाप्रभवैः ब्रह्माण्डैरपि लीयते, भावे लट् । जन्मन्यपि विषये । सुरोधेषु रोद्धुं शक्येषु जन्तुवर्गेषु का कथा। तेषां लये किमाश्चर्यमित्यर्थः ॥ १२५ ॥

**त्वत्प्रसूतस्त्वयैवासौ वधितश्चक्रधारया ।**
**का नाम कृतिनस्तस्य परिदेवयितव्यता ॥ १२६ ॥**

**त्वत्प्रसूत इति**—असौ नरकः त्वत्प्रसूतः त्वदुत्पादितः त्वयैव चक्रधारया पावनस्य चक्रस्याग्रेण वधितः मारितः, 'वध हिंसायाम्' (भ्वादि) इति भौवादिको धातुः, अतः कृतिनः धन्यस्य तस्य का नाम परिदेवयितव्यता शोच्यता, न काऽपीत्यर्थः । नामेति प्रसिद्धौ ॥ १२६ ॥

---

[1] इत्युक्तं शृङ्गारप्रकाशिकायाम्–ग. घ. ट. [2] किं मयैतन्न–ग्र. दे. मु.
[3] तर्हीदं–घ. ट. [4] त्वन्मायाबुद्बुदैर्देव–ग्र.–कोशे पाठान्तरमपि.

**निरुद्धे नरके नाथ नित्यधर्मात्मना त्वया।**
**[1] निष्प्रतिद्वन्द्विकं स्वर्गसुखमास्वाद्यतां सुरैः॥ १२७॥**

**निरुद्ध इति**—हे नाथ नित्यधर्मात्मना 'कृष्णं धर्मं सनातनम्' इति स्मरणात् नित्यधर्मरूपेण त्वया नरके निरुद्धे मारिते सति, पुण्येन निरये प्रतिबद्धे इत्यपि गम्यते, सुरैः [2] निष्प्रतिद्वन्द्विकं परिपन्थिरहितं स्वर्गसुखं आस्वाद्यतां अनुभूयताम् ॥ १२७ ॥

**निर्यातितमिदं भूयः [3] त्वज्जनन्यै मया स्वयम्।**
**श्रवणाभरणद्वन्द्वं शीतलार्कयुगप्रभम् ॥ १२८ ॥**

**निर्यातितमिति**—शीतलार्कयुगप्रभं शीतलादित्ययुगलतुल्यशोभं इदं श्रवणाभरणद्वन्द्वं कुण्डलद्वयं त्वज्जनन्यै तव मात्रे अदित्यै मया स्वयं भूयः निर्यातितं प्रत्यर्पितम् । यतधातुः चौरादिको (चु. १७३६) निरुपसर्गपूर्वः प्रतिदानार्थः 'यत [4] निराकारोपस्कारयोः' इत्येतदनन्तरं 'निरश्च धान्यधनयोः प्रतिदाने' इति पाठात् ॥ १२८ ॥

**इति विज्ञाप्य सा तस्मै विषादाभावमात्मनः।**
**विरराम ततो देवी विलक्षा विश्वधारिणी ॥ १२९ ॥**

[5] **इतीति**—विलक्षा भगवच्छक्तिदर्शनेन विस्मयान्विता विश्वधारिणी सर्वेषां पोषयित्री व्रीहियवपयोदध्यादिक्रतुद्रव्यजननेन देवादीनामपि पोषणात्, सा देवी मेदिनी तस्मै कृष्णाय इति उक्तप्रकारेण आत्मनः स्वस्य विषादाभावं पुत्रवध[6]प्रयुक्तदुःखाभावं विज्ञाप्य ततः विज्ञापनात् विरराम ॥ १२९ ॥

---

1 निष्प्रतिद्वन्द्वकः स्वर्गः सुखमासाद्यताम्—घ. ट. 2 निष्प्रतिद्वन्द्वकः परिपन्थिरहितः स्वर्गः सुखमासाद्यताम्—घ. ट. 3 स्वजनन्यै—घ. ट. 4 निराकार इति क्षीरस्वामिसंमतः पाठः निराकार—घ. ट. ञ. निकार, इति धातुपाठे. 5 इतीति—भगवद्दर्शनेन—घ. ट. 6 प्रसक्त—ङ. ग. ञ.

तामशेषजगद्धात्रीं सन्नताङ्गीमसान्त्वयत् ।
सहधर्मचरीं पूर्वां वासुदेवो वसुन्धराम् ॥ १३० ॥

तामिति—वसुदेवस्यापत्यं वासुदेवः पूर्वां सहधर्मचरीं प्राचीनां पत्नीं अशेषजगद्धात्रीं अशेषस्य जगतः प्रागुक्तरीत्या पोषयित्रीं सन्नताङ्गीं स्तनादिभारादवनताङ्गीं वसुन्धरां असान्त्वयत् पुत्रवधशोकापनोदनाय सान्त्वयति स्म । "षान्त्व सामप्रयोगे" (चु. १५७०) इति चौरादिको धातुः । सहधर्मचरीमित्यत्र 'भिक्षासेनादायेषु च' (पा. सू. ३-२-१७) इति [1] चकारादन्यत्राप्यनधिकरणोपपदे चरेष्टप्रत्ययात्, पचादिगणे चरडिति पाठाद्वा टित्त्वात् ङीप् ॥ १३० ॥

पुरस्कृतप्रसादस्तां पूर्वसम्भवगेहिनीम् ।
गृहीतकुण्डलो गन्तुमन्वमंस्त गदाग्रजः ॥ १३१ ॥

पुरस्कृतेति—पुरस्कृतप्रसादः व्यञ्जितप्रसादः गदस्याग्रजः [2] कृष्णः गृहीतकुण्डलस्सन् पूर्वसम्भवगेहिनीं पूर्वस्मिन् वराहावतारे पत्नीं तां वसुन्धरां गन्तुमन्वमंस्त गमानाय अनुमन्यते स्म ॥ १३१ ॥

ततस्सा तत्समादेशात्सत्यभामाभिवन्दिता ।
रम्यं प्रतिययौ स्थानं रत्नसानुशिखण्डकम् ॥ १३२ ॥

तत इति—[3] ततः अनुमत्यनन्तरं तत्समादेशात् कृष्णस्य नियोगात् सत्यभामया अभिवन्दिता नमस्कृता सा वसुन्धरा रत्नसानुशिखण्डकं मेरोरुत्तमाङ्गभूषणं [4] तदुपास्थितं रम्यं स्थानं स्वावासं प्रतिययौ ॥ १३२ ॥

---

[1] चकारादन्येभ्योऽप्यधि—अ. ट. [2] 'कृष्णः' इतीदं घ. ट.—कोशयोर्न दृश्यते. [3] तदनुमत्यनन्तरं—ड. [4] उत्तमाङ्गाभरणं—अ. ग.

ददर्श यदुवीरोऽथ दैत्यवीरनिवेशनम्।
अचिन्त्यमिव मायानां प्रभावमनुपप्लवम् ॥ १३३ ॥

ददर्शेति– अथ तस्याः प्रतिनिवृत्त्यनन्तरं यदुवीरः यदुश्रेष्ठः अचिन्त्यं अतर्क्यं अनुपप्लवं अप्रतिबन्धं मायानां शाम्बरीणां प्रभावं अनुभावमिव स्थितं अत्याश्चर्यमिति यावत्, दैत्यवीरनिवेशनं असुरश्रेष्ठस्य नरकस्य गृहं ददर्श ॥ १३३ ॥

विचक्षणवरं दैत्यं वैरिसंपत्करग्रहे।
[1] विभूतिसंचयप्रेक्षी बहुमंस्त बलानुजः ॥ १३४ ॥

विचक्षणवरमिति—बलानुजः कृष्णः विभूतिसंचयप्रेक्षी तस्मिन् गृहे ऐश्वर्यसमृद्धिं प्रेक्षमाणस्सन् वैरिसम्पत्करग्रहे वैरिणां सम्पत्सर्वस्वमेव करः उपायनं तस्य ग्रहणे विचक्षणवरं, वरशब्दः श्रेष्ठवाची, अतिसमर्थमिति यावत्, वैरिसम्पदः काश्चन कन्यकाः तासां पाणिग्रहणे समर्थं, वरं कन्याग्रहीतरमत्यपि गम्यते, दैत्यं नरकं बहुमंस्त अश्लाघत ॥ १३४ ॥

सुधानिष्यन्दिभिः स्थूलैः मुक्तादामभिरावृतम्।
पश्यन् पाशभृतश्छत्रं विश्वकर्ता [2] विसिष्मिये ॥ १३५ ॥

सुधेति—सुधानिष्यन्दिभिः अमृतनिष्यन्दयुक्तैः स्थूलैः मुक्तादामभिः मौक्तिकस्रग्भिः आवृतं पाशभृतः वरुणस्य छत्रं पश्यन् विश्वकर्ता कृष्णः [2] विसिष्मिये विस्मितो बभूव। विविधविचित्रप्रपञ्चरचनाचतुरस्यापि विस्मयो बभूवेति छत्रस्य [3] रामणीयकातिशयो दर्शितः ॥ १३५ ॥

---

1 विभूतिसंचयं प्रेक्ष्य—घ. ट. 2 विसिस्मिये—घ. ट. 3 रामणीयकातिशयोक्तिर्दर्शिता—ग. ञ.

**निदध्यौ कन्यकास्तत्र निदर्शितपरस्पराः ।**
**अमुद्राभङ्गसुभगा नीवीरिव रतेश्शुभः[1] ॥ १३६ ॥**

**निदध्याविति**—शुभः मङ्गलात्मकः कृष्णः [2]तत्र नरकस्य गृहे निदर्शितपरस्पराः निदर्शितं दृष्टान्तीकृतं परस्परं याभिस्ताः परस्परोपमेयाः बहिरुपमानरहिताः अमुद्राभङ्गसुभगाः मुद्राभङ्गाभावेन हृद्याः रतेः मन्मथप्रियायाः नीवीः मूलधनानीव स्थिताः कन्यकाः निदध्यौ ददर्श । [3]निपूर्वकः ध्यायतिर्दर्शनार्थः । सौन्दर्यातिशयेन जगन्ति मोहयन्त्या रतेर्मूलधनत्वेनोत्प्रेक्षा । तत्र तासां प्रभुत्वं व्यञ्जयितुं अमुद्राभङ्गसुभगा इत्युक्तम् । "नीवी [4]परिपणो मूलधनं" इत्यमरः ॥ १३६ ॥

**लावण्यजलधौ लक्ष्म्याश्छाया इव सहोदिताः ।**
**मधुस्वच्छन्दतासीम्नो मान्मथीरिव दीर्घिकाः ॥ १३७ ॥**

**लावण्येति**—लावण्यजलधौ सहोदिताः [5]युगपदुद्गताः लक्ष्म्याः छायाः प्रतिबिम्बानीव स्थिताः, [6]एकस्या अपि वीचिभेदेन बहवः प्रतिबिम्बा भवन्तीति भावः, किञ्च मधुस्वच्छन्दतासीम्नः मधुनः स्वच्छन्दता स्वातन्त्र्यं माधुर्यमिति यावत्, [7]उत्कृष्टगुणत्वसाम्यात् स्वच्छन्दताशब्देन माधुर्यं लक्ष्यते, तस्य सीम्नः अवधिभूमिरूपाः [8]भ्रामरमाक्षिकादिभेदेन भिन्नमधुनि तारतम्येन स्थितस्य माधुर्यस्योत्कर्षविश्रान्तिभूमीरिति यावत्, मान्मथीः मन्मथसम्बन्धिनीः दीर्घिकाः विहारवापिका इव स्थिताः कन्यका इति पूर्वश्लोकेन सम्बन्धः । अत्राद्योत्प्रेक्षया लक्ष्मीसादृश्यं, द्वितीयोत्प्रेक्षया [9]मन्मथप्रवेशरूपं शृङ्गारभरितत्वं च व्यज्यते ॥ १३७ ॥

---

[1] शुभाः—झ. [2] तत्र तस्य नरकस्य—ग. [3] निपूर्वः—ग. घ. ङ. [4] परिपणं—घ. ट. [5] युगपदुद्भूताः—ङ. [6] एकस्मादपि—घ. ट. [7] यावत् कृष्णगुणत्वसाम्यात्—घ. ट. [8] भ्रमरमक्षिकादिभेदेन भिन्नमधुनि—ग. घ. ट. [9] मन्मथरूपप्रवेशरूपं शृङ्गारचरितत्वम्—ग. घ. ट. ग.

**कामकीर्तिपताकाभिस्स ताभिः प्रत्यवेक्षितः ।**
**आत्मानममृतोदन्वदन्तास्स्थितममन्यत ॥ १३८ ॥**

**कामेति**—[1] सः कृष्णः कामकीर्तिपताकाभिः कामस्य [2] जगन्मोहनकीर्तिप्रकाशिकाभिः वैजयन्तीभिः ताभिः कन्यकाभिः प्रत्यवेक्षितः स्वयं वीक्षणानन्तरं प्रतिवीक्षितस्सन् आत्मानं अमृतोदन्वदन्तास्स्थितं [3] अमृताम्भोधिमध्यस्थितं अमन्यत, तथा निर्वृतोऽभूदित्यर्थः ॥ १३८ ॥

**सुप्रभातमभूत्तासां सुदिनं च तमोपहम् ।**
**भवदोषार्यमा यासां देवो दृष्टिपथं गतः[4] ॥ १३९ ॥**

**सुप्रभातमिति**-- तासां कन्यकानां तमोपहं तमसो दुरितस्य अन्धकारस्य च अपहन्तृ सुप्रभातं शोभनं प्रभातं सुदिनं शोभनदिनं च अभवत् । भवदोषार्यमा संसारदोष [5] एव दोषा रात्रिः तस्याः सूर्यः [6] तदप्ययहेतुत्वात्, देवः कृष्णः यासां दृष्टिपथं गतः तासामिति पूर्वेण सम्बन्धः । सूर्ये दृष्टे प्रभातादिप्राप्तिर्युक्तेति भावः ॥ १३९ ॥

**रत्नशैलनिभांस्तस्य भुजान् [7] कटकभूषितान् ।**
**[8] उपधास्यन्ति यास्तासां श्रेयसी भवितव्यता ॥ १४० ॥**

**रत्नेति**—कटकभूषितान् वलयपरिष्कृतान् शैलस्य कटकानि सानवो नितम्बा वा, "कटकं वलये सानौ राजधानीनितम्बयोः" इति विश्वः, रत्नशैलनिभान् इन्द्रनीलाचलतुल्यान् तस्य कृष्णस्य भुजान् याः कन्यकाः [9] उपधास्यन्ति उपधानीकरिष्यन्ति तासां भवितव्यता पुण्यानां फलोन्मुखता "विपाको भवितव्यता" इति हला-

---

[1] 'स कृष्णः' इति घ. ट.—कोशयोर्न दृश्यते. [2] जगन्मोहनप्रकाशिकाभिः—घ. ट. [3] अमृताम्बुधिमध्यस्थम्—ग. घ. ट. [4] एतच्छ्लोकानन्तरं झ. कोशे 'स्वपूज्यमहतां भावि महाभूषो महीभृताम् । ऋक्षेष्वनुचरं शूरस्सूर्यकोटिसमप्रभः ॥' इत्येकः श्लोकः कुण्डलितो दृश्यते । अयं व्याख्यायामस्यामव्याख्यातश्च. [5] दोषा एव—ङ. [6] तदत्यय—ग. तद्व्यय—झ. [7] कनकभूषणान्—झ. [8] उपयास्यन्ति—झ. [9] उपधानीकुर्वन्ति—ग. घ. ट.

युधः, श्रेयसी प्रशस्यतरा प्रशस्यशब्दादीयसुन् प्रत्ययः, 'प्रशस्यस्य श्रः' (पा. सू. ५-३-६०) इति श्रादेशः। उगितश्च (पा. सू. ४-१-६) इति ङीप्। उपघास्यन्तीति तत्कालापेक्षया भविष्यदर्थप्रयोगः ॥ १४० ॥

**सर्वस्वमिव पुण्यानां साम्राज्यमिव संपदाम्।**
**समाजमिव सिद्धीनां स तद्यौवतमग्रहीत् ॥ १४१ ॥**

**सर्वस्वमिति**—सः कृष्णः पुण्यानां सर्वस्वं सारांशमिव, सम्पदां शोभानां साम्राज्यं अखण्डितैश्वर्यमिव, सिद्धीनां मनोरथसिद्धीनां समाजमिव स्थितं तद्यौवतं युवतीनां समूहं अग्रहीत्। युवतिशब्दस्य [1] भिक्षादिषु पाठादण्प्रत्ययः। तत्पाठसामर्थ्यादेव 'भस्याढे तद्धिते' (वा. ३९२८) इति पुंवद्भावो न भवति। अस्य भिक्षादिपाठं प्रत्याख्यातवतो भाष्यकारस्य मते पुंवद्भावात् यौवनमिति रूपम्। तथा प्रयोगोऽपि—

सुरूपमिति नैपथ्यं कलाकुशलयौवनम्।
यस्य पुण्यकृतः [2] प्रेक्ष्यं सफलं तस्य यौवनम् ॥ इति ॥१४१॥

**भुजमन्दरवेगेन चक्रभ्रमवता विभुः।**
**मथिताद्दानवाम्भोधेरमृतं तदविन्दत ॥ १४२ ॥**

**भुजेति**—विभुः कृष्णः चक्रभ्रमणवता सुदर्शनभ्रमणवता, [3] मन्दरपक्षे चक्राकार[4]भ्रमणवता, भुज एव मन्दरः तस्य वेगेन मथितात् [5] दानवदेवाम्भोधेः तत् यौवतरूपं अमृतं अविन्दत अलभत ॥ १४२ ॥

---

[1] 'भिक्षादिभ्योऽण्' (पा. सू. ४-२-३८) इति सूत्रगृहीतभिक्षादिगणपाठादित्यर्थः. [2] प्रेष्यम्–ङ [3] चक्रभ्रमणवता–घ. ट. [4] भ्रमवता–घ. ट. [5] दानवाम्भोधेः–घ. ट.

मणिपरुवकसंपन्माननीयस्तनानां[1]
मनसिजवपुषेव स्वेन सङ्कल्पितानाम्।
सकलजगदभिख्यासारसीम्नां स तासां
स्वयमजुषत सिद्धिं स्वप्रसादाग्रसूताम् ॥ १४३ ॥

मणीति—सः कृष्णः मणिपरुवकः रत्नसिन्दूरादिभाजनं "अस्त्री परुवकं सिन्दूरादिद्रव्यस्य भाजनम्" इति यादवः, तस्य संपत् शोभा तया माननीयाः महनीयाः स्तनाः यासां तास्तथोक्ताः तासां, स्तनयोः परुवकसाम्यं कवयो वदन्ति, तथा वासवदत्तावर्णनेऽपि दृश्यते "अनुरागरत्नपूरितकनकमय[2]परुवकाभ्यां चूचुकमुद्रासनाथाभ्यां" (वासवदत्ता ६९. पृष्ठे श्री) इति। मनसिजः वपुः यस्य तेन मन्मथमूर्तिना स्वेन सङ्कल्पितानां सङ्कल्पमात्रेण हस्तेनोपमर्दनं विना सृष्टानामिव स्थितानां, मनसिजेन सङ्कल्पितानामित्येतावता सिद्धेऽप्येवं कथनं पुरुषान्तरसृष्टान्यपि तत्तद्रूपमास्थितेन भगवतैव सृष्टानीति विवक्षया, सकलजगदभिख्यासारसीम्नां सर्वस्य जगतः कान्तीनां यस्सारांशः तस्यावधिभुवां तासां कन्यकानां स्वप्रसादप्रसूतां स्वानुग्रहजनितां[3] सिद्धिं उत्तमरूपसम्पत्तिं स्वयं अजुषत असेवत। स्वाङ्गीकरणेन कृतार्थीकृतवानित्यर्थः ॥ १४३ ॥

पुरमथ गमयित्वा[4] भूषितं यादवाग्र्यैः
शतसमधिकसंख्यं षोडशस्त्रीसहस्रम्।
अवनितनयभीतान् प्रीणयन्नादितेयान्
परिणयनविलम्बं पद्मनाभः प्रसेहे ॥ १४४ ॥

पुरमिति—अथ पद्मनाभः शतं समधिका सङ्ख्या उपरिसङ्ख्या यस्य तत् षोडशस्त्रीसहस्रं षोडश[5]गुणितं स्त्रीणां सहस्रं

---

[1] स्तनीनाम्–ग्र. दे. मु. घ. ट. [2] परुवकाभ्यामिव चूचुक–घ. ट. [3] सिद्धिमुत्तरूप–घ. ट. [4] भूषिताम्–ग. झ. ग्र. दे. मु. घ. ट. [5] गुणस्त्रीणाम्–घ. ट.

प्रयोज्य[1]कर्म यादवाग्रचैः यादवश्रेष्ठैः [2]भूषितं पुरं द्वारकां गमयित्वा अवनितनयभीतान् अवनितनयाद्भूमितनयान्नरकाद्भीतान् आदितेयान् देवान् प्रीणयन्, हेतौ शतृप्रत्ययः, तेषां प्रीणनस्य हेतोः स्वर्गं [2]गन्तु-काम इति यावत्, परिणयनविलम्बं तासां विवाहे कालातिपातं प्रसेहे ॥ १४४ ॥

दिवि भुवि च [3]समिद्धं दीपरूपेण रूढैः
त्रिभुवनविभवानामङ्कुरैरेकरूपैः ।
जनितनिगम[4]सख्यं दानवीनां विलापैः
नरकवधदिनं तन्नाथपूजार्हमासीत् ॥ १४५ ॥

दिवीति—दीपरूपेण रूढैः दीपात्मना जातैः एकरूपैः सर्वत्रैकाकारैः त्रिभुवनविभवानां त्रैलोक्यसमृद्धीनां अङ्कुरैः दिवि भुवि च समिद्धं दीप्तं दानवीनां असुरस्त्रीणां विलापैः जनितनिगमसख्यं उत्पादितवेदविचारं वेदमार्गविरोधिनो नरकासुरस्य विनिपातात् यथा पूर्वं प्रवृत्तवेदाध्ययनादिवैदिककृत्यजातमिति यावत्, तन्नरकवधदिनं नाथपूजार्हं कृष्णस्य विशेषपूजायां उचितमासीत् । नरकवधदिनं आश्व-युजकृष्णपक्षचतुर्दशी, सैव दीपोत्सवचतुर्दशी च । तत्र विष्णोर्विशेष-पूजाविधिः पुराणेषूक्तः । तस्यां तिथौ दीपारोपणविधानात् प्रासाद-गोपुरजलाशयादिष्वारोपिता दीपा नरकवधेन पुनः प्ररोहन्तीनां त्रैलोक्यसमृद्धीनां अङ्कुरा इव अदृश्यन्तेत्यपह्नुत्यलंकारेण दर्शितो दिवि भुवि चेत्यादिना ॥ १४५ ॥

---

[1] कर्तृ यादवाग्र्यैः—घ. ट. [2] गन्तुमिति—ग. घ. ट. [3] 'समृद्धम्'—झ. पाठान्तरम्. [4] सङ्घम्—ञ.

ऐरावतप्रतिनिधीनथ षट्सहस्रं
स्तम्बेरमान् पृथुलदन्तचतुष्कभाजः।
काम्भोजवाजिनियुतानि च सत्रिसप्ता-
न्यभ्यानयन्निजपुरं नरकस्य भृत्यैः ॥ १४६ ॥

ऐरावतेति—ऐरावतस्य प्रतिनिधीन् सदृशान् पृथुलदन्त-चतुष्कभाजः ऐरावतकुलोत्पन्नत्वात् तद्वदेव पृथुलदन्तचतुष्टययुक्तान् षट्सहस्रं षड्गुणितं सहस्रमिति मध्यमपदलोपिसमासः, स्तम्बेरमान् गजान् सत्रिसप्तानि तिसृणां सप्तसङ्ख्यानां समाहारः त्रिसप्तेति लक्षणया एकविंशतिसङ्ख्योच्यते, तत्सहितानि एकविंशति[1]गुणानीति यावत्, काम्भोजानां काम्भोजदेशप्रभवानां वाजिनां नियुतानि लक्षाणि च "सहस्राणां शते लक्षं लक्षा च नियुतं च तत्" इति वैजयन्ती, नरकस्य भृत्यैः निजपुरं द्वारकामभ्यानयत् ॥ १४६ ॥

[2] उद्गम्य दुर्गजलधेरुदयाद्रिकल्पं
तुङ्गं विहङ्गमपतिं त्वरयाऽधिरोहन्।
उल्लासहेतुरभवद्यदुवीरभास्वान्
वैमानिकप्रणयिनीवदनाम्बुजानाम्[3] ॥ १४७ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि महाकाव्ये षोडशस्सर्गः ॥

---

उद्गम्येति—दुर्गं नरकस्य पुरं जलधिरिवेत्युपमितसमासः, उदयाद्रिकल्पमित्युपमानुगुण्यात्, एवं यदुवीरेत्यादावपि, तत

---

[1] गुणितानीति-ग. [2] उद्गत्य-ग. ग्र. दे. मु. [3] नयनाम्बुजानाम्-ग्र. दे. मु.

[1] उद्गम्य उदयाद्रिसदृशं तुङ्गं विहङ्गमानां पतिं त्वरया देवानां प्रीणनाय सम्भ्रमेणाधिरोहन् यदुवीरभास्वान् विमानेन चरन्तीति वैमानिकाः तेषां प्रणयिन्यः देवस्त्रियः तद्वदनाम्बुजानां उल्लासहेतुः हर्षहेतुरभवत्। गरुडमधिरोहन्तं कृष्णं दृष्ट्वा गगनमार्गे [2] तस्य विशेषदर्शनं भविष्यतीति देवस्त्रियो हृष्टा बभूवुरित्यर्थः ॥ १४७ ॥

इति श्रीमद्भरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनुना
अप्पयदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने
षोडशस्सर्गः ॥

---

[1] उद्गत्य—ग. [2] तस्य सविशेषदर्शनम्—ञ.

## अथ सप्तदशस्सर्गः

---

आतपत्रमथ तत्प्रचेतसो
मन्दरस्य मणिशृङ्गमुन्नतम् ।
सावरोधमपि सात्वतां पतिं
लीलयैव गरुडो वहन् ययौ ॥ १ ॥

**आतपत्रमिति**—अथ आरोहणानन्तरं गरुडः तत् नरकेणाहृतं प्रचेतसः वरुणस्य आतपत्रं, उन्नतं मन्दरस्य मणिशृङ्गं रत्नशिखरं, सावरोधं अन्तःपुरस्त्रिया [1] सत्यभामया सहितं सात्वतां पतिं सात्वततन्त्रप्रवक्तॄणां पालकं [2] कृष्णमपि लीलयैव अनायासेनैव वहन् ययौ। सात्त्वतशब्दात्तदाचष्ट इति णिचि टिलोपे क्विपि णिलोपे च सति सात्वच्छब्द उक्तार्थवाचकः । रथोद्धता सर्गवृत्तम् ॥ १ ॥

तं क्षिपन्तमधिकेन रंहसा
मारुतस्य मनसोऽपि शीघ्रताम् ।
वालखिल्यसुकृतं विपक्त्रिमं
प्राणमैक्षत बहिश्चरं प्रभुः ॥ २ ॥

**तमिति**—अधिकेन रंहसा वेगेन मारुतस्य मनसोऽपि शीघ्रतां आशुगामितां क्षिपन्तं निराकुर्वन्तं विपक्त्रिमं विपाकेन निर्वृत्तं परिपक्वं वालखिल्यानामृषीणां सुकृतं तं गरुडं प्रभुः कृष्णः बहिश्चरं बहिर्देशे चरन्तं प्राणमैक्षत प्राणमिव प्रेमास्पदमकरोदित्यर्थः । प्राणशब्दो वायुविशेषवाची एकवचनान्तः । पुंसि भून्म्यसवः प्राणाः" इति बहुत्व-

---

[1] सत्यया—ग. ञ.  [2] कृष्णं लीलयैव—ग घ. ज. ट.

नियमस्तु [1]प्राणापानाद्याकारसर्ववायुपरत्वेन स्थितः। "क्रेर्मन्नित्यम्" (पा. सू. ४-४-२०) इति विपक्त्रिमशब्दस्साधुः। ब्रह्मणो यज्ञे सर्वैरपि वालखिल्यैरङ्गुष्ठप्रमाणैरेकां [2]समिधं महता यत्नेनानीयमानां वीक्ष्य उपहसितवति शक्रे तद्गर्वापहाराय अन्यमिन्द्रं [3]तज्जेतारं स्रक्ष्याम इति प्रतिज्ञाय, तदर्थं तपश्चरत्सु तेषु काश्यपेनानुनीतेषु, कथंचित् तत्प्रतिज्ञानिर्वाहाय गरुडः खगेन्द्रतया अवतीर्य शक्रममृताहरणे जिगायेति पौराणिकी कथा। तदभिप्रायेण वालखिल्यसुकृतं विपक्त्रिममिति रूपकम् ॥ २ ॥

लोकतः खगरथेन मध्यमा-
दुत्पतन्तमवनम्य माधवम् ।
निर्जराः स्तुतिभिरभ्यपूजयन्
पुष्कलाभिरपि पुष्पवृष्टिभिः ॥ ३ ॥

लोकत इति—खग एव रथस्तेन करणेन मध्यमाल्लोकतः भूलोकात् उत्पतन्तं माधवं [4]निर्जराः अभ्रमार्गे चरन्तो देवाः अवनम्य स्तुतिभिः पुष्कलाभिः समृद्धाभिः पुष्पवृष्टिभिरपि अभ्यपूजयन्। 'पूर्णश्रेष्ठौ तु पुष्कलौ' इति वैजयन्ती ॥ ३ ॥

पाञ्चजन्यनिनदोपहूतया
पर्यचारि परितोषनिघ्नया ।
भक्तिभारनतया सदोन्नतः
स्वर्गिणां परिषदा यदूद्वहः ॥ ४ ॥

पाञ्चजन्येति—सदोन्नतः सर्वदा प्रभावेनोत्तुङ्गः यदूद्वहः यदुश्रेष्ठः पाञ्चजन्यनिनदोपहूतया स्वकीयशङ्खध्वनिभिः [5]स्वर्गादाहूतया परितोषनिघ्नया सन्तोषपरवशया भक्तिभारेण नतया स्वर्गिणां देवानां परिषदा पर्यचारि सेवितोऽभूत्। कर्माणि लुङ् ॥ ४ ॥

---

[1] प्राणापानाद्यखिलवायु—ग. घ. ज. ट. [2] समिधं बहुधा यत्नेन नीयमानां—ग. घ. ज. ट. [3] तज्जेतारं वा स्रक्ष्यामः—घ. ज. ट. [4] निर्जरा देवा अभ्रमार्गे चरन्तमवगम्य-घ. ज. ट. [5] स्वर्गत आहूतया—ग. स्वर्चिताहूतया—ञ.

प्राप्य यादवपतिस्त्रिविष्टपं
देवमातुरुपनीतकुण्डलः ।
अग्रजेन हरिणा हरिः [1]स्वसं-
भावितेन समभाव्यतोचितम् ॥ ५ ॥

प्राप्येति—यादवानां पतिः हरिः कृष्णः त्रिविष्टपं प्राप्य देवमातुः अदितेः उपनीतकुण्डलः अर्पितनरकहृतकुण्डलस्सन् अग्रजेन उपेन्द्रावतारे अग्रजन्मना अत एव [1] स्वसंभावितेन स्वपूजितेन हरिणा शक्रेण उचितं यथा तथा समभाव्यत आलिङ्गनादिभिरपूज्यत ॥ ५ ॥

भागधेयपरिपाकतस्तदा
वासवो वसतिमभ्युपागतम् ।
देवदानवसमानदैवतं
पर्युपास्त परिकल्पितार्हणः ॥ ६ ॥

भागधेयेति—वासवः शक्रः तदा भागधेयपरिपाकतः भाग्यस्य फलोन्मुख्यात् वसतिं गृहं अभ्युपागतं देवदानवसमानदैवतं सुरासुराणां [2]साधारणदैवतं कृष्णं परिकल्पितार्हणः कृत[3]पूजाविधानस्सन् पर्युपास्त परभावबुद्ध्या अञ्जलिबन्धजयशब्दादिभिः [4]असेवत॥६॥

तत्र [5] सम्मदवतीभिरञ्जसा
लोकपालमहिषीभिरर्चिताम् ।
देहिनीमिव जयश्रियं निजां
वल्लभमंस्त दयितां बलानुजः ॥ ७ ॥

तत्रेति—तत्र स्वर्गे बलानुजः कृष्णः सम्मदवतीभिः संतोषवतीभिः[6] लोकपालानां महिषीभिः इन्द्राणीप्रभृतिभिः अञ्जसा

---

[1] 'स्वयं भावितेन' —घ. ज. अ. दे. मु. [2] साधारणं- ग. ञ. अत्र 'देवानां दानवानां च सामान्यमधिदैवतम्' इति पाञ्चरात्रीयजितन्तेस्तोत्रगतं प्रमाणमनुसन्धेयम्. [3] पूजानमनस्सन् —घ. ट. [4] अपूजयत–ट. [5] संमतवतीभि–झ. [6] हर्षवतीभिः–घ. ज. ट.

त्वरितं "अञ्जसा [1]त्वरिते सत्ये" इति वैजयन्ती, अर्चितां पूजितां "भूते क्तः" इति तद्योगे तृतीया, देहिनीं मूर्तिमतीं निजां जयश्रियमिव स्थितां दयितां सत्यां बह्वमंस्त । लोकपालमहिषीणामत्यादरेण पूजा कृष्णस्यापि तस्यां बहुमानबुद्धिमकरोदिति तत्कृते पूजाधिक्ये तात्पर्यम् ॥ ७ ॥

सप्रसादमभिनन्द्य सन्नतान्
नाकिनो नरकभीतिवर्जितान् ।
कृत्यशेषविधये कृती भुवः
प्रत्यपद्यत निवृत्तिपद्धतिम् ॥ ८ ॥

सप्रसादमिति—कृती कुशलः कृष्णः नरकभीतिवर्जितान् नरकासुरभीतिरहितान् सन्नतान् नाकिनः देवान् सप्रसादमभिनन्द्य श्लाघयित्वा कृत्यशेषस्य दैत्यान्तरहरणरूपस्य विधये करणाय भुवो निवृत्तिपद्धतिं प्रतिनिवृत्तिमार्गं प्रत्यपद्यत प्राप ॥ ८ ॥

स्वप्रभावविनिवृत्तसाध्वसां
सोऽतिपत्य नगरीं सुपर्वणाम् ।
पुष्पधन्वन इवोप[2]पकारिकां
प्रैक्षतोपवनसम्पदं पुरः ॥ ९ ॥

स्वेति—सः कृष्णः स्वप्रभावविनिवृत्तसाध्वसां स्वस्य प्रभावेणापगतनरकभयां सुपर्वणां देवानां नगरीं अतिपत्य अतिक्रम्य पुष्पधन्वनः कामस्य उपकारिकां राजगृहमिव स्थितां "राजसदनमुपकार्योपकारिका" इत्यमरः, उपवनसम्पदं [3]नन्दनोद्यानसमृद्धिं पुरः अग्रे प्रैक्षत ॥ ९ ॥

---

[1] त्वरिते तत्वे–ङ. अ. एवमेव मुद्रितवैजयन्त्यामपि.　　[2] कार्यकां–झ.
[3] नन्दनोद्याने समृद्धिं–ग. घ. ट.

वर्तते दशशतेक्षणोऽपि स-
न्नेकचक्षुरिव यन्निरीक्षणे ।
तत्र दत्तनयनो वियद्वने
विश्वदृष्टिरनघो विसिष्मिये ॥ १० ॥

वर्तत इति—दशशतेक्षणः दशगुणितानि शतानि लक्षणया सहस्रसङ्ख्यानि ईक्षणानि यस्य तथाभूतोऽपि सन् इन्द्रः यन्निरीक्षणे यस्य दर्शने एकचक्षुरिव अवलोकनाय अपर्याप्तलोचनो वर्तते रामणीयकातिशयात् तत्र वियद्वने [1]गगनोद्याने नन्दने दत्तनयनः विश्वदृष्टिः विश्वस्मिन् विषये दृष्टिर्ज्ञानं यस्य[2] स सर्वज्ञोऽपि अनघः अपहतपाप्मा कृष्णः विसिष्मिये विस्मितो बभूव ॥ १० ॥

दर्शयंस्तदनु रामणीयकं
नन्दनस्य वसुदेवनन्दनः ।
इत्युवाच मधुरस्मितेक्षणां
प्रेयसीं प्रणयपेशलाक्षरम् ॥ ११ ॥

दर्शयन्निति—तदनु तदनन्तरं नन्दनस्य रामणीयकं [3]रमणीयत्वम्, "योपधाद्गुरूपोत्तमाद्वुञ्" (पा. सू. ५-१-१३२) इति भावे वुञ्प्रत्ययः, दर्शयन् वसुदेवनन्दनः मधुरस्मितेक्षणां मधुरे शृङ्गारहृद्ये स्मितावलोकने यस्यास्तां प्रेयसीं [4]सत्यां प्रति प्रणयपेशलाक्षरं प्रेम्णा चारूण्यक्षराणि यस्मिन् कर्मणि तद्यथा तथा इति वक्ष्यमाणप्रकारेण उवाच । "चारौ दक्षे च पेशलः" इत्यमरः ॥ ११ ॥

---

[1] गगनोद्याने दत्तनयनः—ग. ङ. ञ. [2] स सारज्ञोऽपि—घ. [3] रमणीयकत्वम्—ग. घ. ट. [4] 'सत्यां प्रति' इति ङ—कोशादन्यत्र न दृश्यते.

पुण्यकृद्भिरभिकाङ्क्षितं त्वया
पौरुहूतमनुभूतमास्पदम् ।
अस्य सम्पदमनेकशाखय-
न्प्रेक्ष्यतामिदमिहान्यदद्भुतम् ॥ १२ ॥

पुण्यकृद्भिरिति—पुण्यकृद्भिः सुकृतिभिः अभिकाङ्क्षितं इष्टं पौरुहूतमास्पदं ऐन्द्रं स्थानं त्वया अनुभूतं दृष्टम् । अस्य ऐन्द्रस्थानस्य सम्पदं विभूतिं [1] अनेकशाखयत् बहुविधां कुर्वत् अन्यदिदमद्भुतं आश्चर्यमुद्यानरूपं इह प्रदेशे प्रेक्ष्यताम् । काङ्क्षितमनुभूतमिति भूते क्तः । अतस्तद्योगे तृतीया । अनेकशाखयदिति णिचि शतृप्रत्ययः ॥ १२ ॥

अञ्चितस्मितमकेवलेक्षणं
भङ्गुरभ्रु परिवर्तिताननम् ।
[2] किञ्चिदत्र तरलाक्षि तावकीं
नन्दनं नयनवृत्तिमर्हति ॥ १३ ॥

आञ्चितेति—हे तरलाक्षि चटुललोचने अत्र प्रदेशे नन्दनं कर्तृ, अञ्चितस्मितं अञ्चितं पूजितं प्रसन्नं स्मितं नयनविकसनं यस्मिन् कर्मणि तद्यथा तथा, एवमुत्तरेष्वपि क्रियाविशेषणेषु विग्रहः, अकेवलेक्षणं अशून्येक्षणं सादरावलोकनं भङ्गुरभ्रु उन्नमनाद्भङ्गशालिभ्रूलतं परिवर्तिताननं व्यावर्तितमुखं च यथा तथा किञ्चित् तावकीं नयनवृत्तिं त्वदीयं नयनव्यापारं अर्हति । किञ्चिदवलोकनेन कृतार्थीकर्तव्यमित्यर्थः ॥ १३ ॥

---

[1] अनेकशाखयत् अनेकशाखां बहुविधां—ङ. [2] किञ्चिदक्षि तरलाक्षि तावकं नन्दनं नयनवृत्तमर्हति—घ. ट.

विश्वमेतदवधेन जेष्यतः
षट्पदज्यधनुषो धनुर्भृतः ।
अत्र नित्यमृतुभिस्सहोदितैः
षड्विधं बलमिवैकतां गतम् ॥ १४ ॥

विश्वमिति—अत्र नन्दने नित्यं सहोदितैः युगपदुद्भूतैः ऋतुभिः हेतुभिः विश्वं समस्तं एतत् भूतजातं अवधेन वधं विना जेष्यतः षट्पदज्यधनुषः भ्रमरमौर्वीकचापस्य धनुर्भृतः मन्मथस्य षड्विधं बलं '[1] श्रेणिसुहृद्द्विषदाटाविकं बलम्' इत्यादि षट्प्रकारं सैन्यं एकतां गतं सम्भूतमिव, ऋतुभिर्हेतुभिरित्थमुत्प्रेक्ष्यत इत्यर्थः । अर्थाद्धेतुष्वेव बलतादात्म्यसम्भावनारूपोत्प्रेक्षा पर्यवस्यति ॥ १४ ॥

ऐकमुख्यममरेन्द्रतुष्टये
संश्रितैरिह वसन्तपूर्वकैः ।
शोभते सुनयने गुणैरिव
स्वानुरूपफलसम्पदाहिता ॥ १५ ॥

ऐकमुख्यमिति—हे सुनयने अमरेन्द्रतुष्टये शक्रप्रसादाय इह नन्दने ऐकमुख्यं संश्रितैः वसन्तपूर्वकैः षड्भिः ऋतुभिः गुणैः सन्धिविग्रहादिभिरिव आहिता सम्पादिता स्वानुरूपफलसम्पत् स्वोचितफलसमृद्धिः शोभते । गुणपक्षे फलं लाभः, ऋतुपक्षे [2] . . ॥ १५ ॥

---

[1] इतः पूर्वं 'मूलं भृतं' इति पदद्वयेन भाव्यमिति भाति. [2] अत्र 'जम्ब्वादिफलं' इति पदेन भाव्यमिति भाति.

जम्बुचूतरसजग्धिरञ्जितैः
[1] स्निग्धकण्ठि कलकण्ठनिस्स्वनैः ।
[2] त्यक्तगेहगमनाय निष्पतन्
पुष्पकेतुरिह घुष्यते ध्रुवम् ॥ १६ ॥

जम्ब्विति—स्निग्धकण्ठि [3] 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीष्, जम्बूनि जम्बूफलानि चूतानि चूतफलानि तेषां रसस्य द्रवस्य जग्ध्या भक्षणेन रञ्जितैः कलकण्ठनिस्स्वनैः कोकिलध्वानिभिः [4] त्यक्तगेहगमनाय प्रवासिषु जयार्थं प्रयाणाय निष्पतन् उद्युञ्जानः पुष्पकेतुः मन्मथः घुष्यते शब्द्यते, ध्रुवम्। यथा दिग्विजयाय प्रतिष्ठमानो राजा वाद्यघोषैः ज्ञाप्यते। जम्बूचूतशब्दाभ्यां विकारार्थस्य प्रत्ययस्य लुक्। [5] जम्बूशब्दे 'लुक्तद्धितलुकि' (पा. सू. १-२-४९) इति स्त्रीप्रत्ययस्य च लुक् ॥ १६ ॥

[6] अर्दितान्मकरकेतुसायकै-
रत्र देवि दयितान् पदाश्रितान् ।
मुद्रयन्ति चकितान् सुरस्त्रियः
पत्रभङ्गमकरैः स्तनार्पितैः ॥ १७ ॥

अर्दितानिति—हे देवि अत्र मलयानिलकोकिलालापाद्युद्दीपनविभावयुक्ते नन्दने सुरस्त्रियः मकरकेतुसायकैः मन्मथशरैः अर्दितान्

---

1 स्निग्धकण्ठकलकण्ठ—झ. ग्र. मु. 2 त्यक्तगेहदमनाय—ग्र. दे. मु. त्यक्तगेहहननाय—घ. ट. 3 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (पा. सू. ४-१-५४) इति सूत्रे काशिकावृत्तौ पठितमिदम्. 4 त्यक्तगेहेषु देशान्तरगमनाय प्रवासिषु हननाय प्रहाणाय—घ. 5 जम्बूशब्दात् विकारार्थे 'जम्ब्वा वा' (पा. सू. ४-३-१६५) इति सूत्रेण अणि 'ओरञ्' (पा. सू. ४-३-१३९) इति पाक्षिके अञि वा तस्य 'फले लुक्' (पा. सू. ४-३-१६३) इति लुकि 'लुक्तद्धितलुकि' (पा. सू. १-२-४९) इत्यनेन स्त्रीप्रत्ययस्य च लुगिति भावः. 6 मर्दितान्—झ.

पीडितान् अत एव चकितान् भीतान् पदाश्रितान् गृहीतचरणान् दयितान् स्तनार्पितैः पत्रभङ्गमकरैः पत्रलेखामकरैः मुद्रयन्ति मुद्रावतः कुर्वन्ति । मुद्रावच्छब्दात् 'तत्करोति' (ग. सू. २०४) इति णिचि णाविष्ठवद्भावात् 'विन्मतोर्लुक्' (पा. सू. ५-३-६५) इति मतुपो लुक् । पादग्रहणेन निवृत्तमानाः सुराङ्गना दयितानुपगूहन्तीत्यर्थः । मकरध्वजेन जिता इति व्यञ्जनाय मकरमुद्रेति भावः ॥ १७ ॥

**कैश्चिदत्र कृतिभिः कृतास्पदैः**
**निर्ममैर्मनसिजो [1]निरस्यते ।**
**सम्भवन्त्युपवने वनेऽपि वा**
**सावधानमनसां समाधयः ॥ १८ ॥**

**कैश्चिदिति**—अत्र वने कृतास्पदैः [2]निर्मिताश्रमैः कृतिभिः कुशलैरिन्द्रियनिग्रहसमर्थैः कैश्चित् निर्ममैः ममतारहितैः मुनिभिः मनसिजो [3]निरस्यते निगृह्यते । कथमुद्याने बहुविधोद्दीपनप्रचुरे मन्मथनिरासस्तत्राह—सम्भवन्तीति । सावधानमनसां अप्रमत्तचित्तानां उपवने वनेऽपि वा समाधयस्सम्भवन्ति । मनोनिग्रहशक्तानां उपवनं वनमिति विशेषो नास्तीत्यर्थः ॥ १८ ॥

**पल्लवैरधरकान्तिरंशतः**
**स्मेरकुद्मलरुचा स्मितं च ते ।**
**वल्लरीभिरिह दोर्लतागुण-**
**श्चोरितानि निहितानि वा त्वया ॥ १९ ॥**

**पल्लवैरिति**—इह वने पल्लवैस्ते अधरकान्तिः, स्मेरकुट्मलरुचा विकासोन्मुखमुकुल[4]रुचा ते स्मितं च वल्लरीभिः ते दोर्लताया गुणः

---

[1] 'निगृह्यते'—ग. ग्र. दे. मु. [2] निर्मितगृहैः—ग्र. [3] निगृह्यते.
[4] कुट्मल—ग. घ. ट.

शोभागुणश्च अंशतः मात्रया चोरितानि मुषितानि, त्वया वा तेषु निहितानि। कथमन्यथा तेषु त्वदधरकान्त्यादिलेशदर्शनमिति भावः। 'नपुंसकमनपुंसकेन' (पा. सू. १-२-६९) इति नपुंसकशेषता ॥१९॥

वादितेषु विहगेष्वनुक्षणं
मञ्जु गायति च षट्पदव्रजे।
मारुतेन चतुरेण नर्तिता
लास्यमत्र परिचिन्वते लताः ॥ २० ॥

वादितेष्विति—[1]अत्र नन्दने अनुक्षणं क्षणेक्षणे विहगेषु शुकादिपक्षिषु [2]वादितेषु वनपालैस्तान् शिक्षयद्भिर्वादितेषु, वाद्यवादनमपि गम्यते, षट्पदव्रजे भ्रमरयूथे मञ्जु यथा तथा गायति च सति चतुरेण लास्यशिक्षादक्षेण मारुतेन नर्तिता लताः लास्यं नृत्यं[3] परिचिन्वते अभ्यस्यन्ति ॥ २० ॥

मन्थरश्वसनसौरभोल्वणा
वल्लरीः स्फुरितपल्लवाधराः।
मन्मथेन ऋतुसङ्गमादिमा
निर्वृता इव निशामयाद्भुताः ॥ २१ ॥

मन्थरेति—मन्थरश्वसनेन मन्दवायुना हेतुना सौरभेण उल्बणा उत्कटाः, विजृम्भितसौरभा इति यावत्, स्फुरितपल्लवाधराः उज्ज्वलपल्लवदन्तच्छदाः ऋतुसङ्गमात् ऋतुकाले भर्तृसङ्गमादित्यपि प्रातीयते, मन्मथेन हेतुना निर्वृताः सुखिताः मन्मथसुखं प्राप्ता इव स्थिताः अद्भुताः [4]चित्राः वल्लरीः लताः निशामय पश्य। 'शमु उपशमे' (दि. १२०२) इति धातोः णिचि 'शमोदर्शने' इति मित्संज्ञानिषेधान्न

---

[1] अत्र वने. [2] वाचिते—ग. ट [3] नृत्तम्—ग. अ. [4] 'चित्रा इमा वल्लरीः' इति पाठः स्यात्.

ह्रस्वः। [1]अत एव दर्शनार्थताऽपि। भर्तृसङ्गमनिर्वृताः स्त्रियोऽपि [2]श्रमात्कम्पमानश्वासा नायकार्पणाय व्यक्ताधराश्च भवन्ति। तथैव सङ्गीतरत्नावल्यामपि श्वासाधरलक्षणयोरुक्तम्—

"स्तम्भितश्शस्त्रमोक्षादौ कम्पितस्सुरतोत्सवे" इति।

'अधरस्स्याद्विनिष्क्रान्तो यावकादिकरञ्जने।
बिब्बोके चञ्चलाक्षीणां सङ्गमे वल्लभार्पणे॥'

इति। अतस्तत्तादात्म्योत्प्रेक्षा॥ २१॥

**केलिशैलमणिमेखलापदा-**
**दुद्गतामिह तमालवाटिकाम्।**
**पश्य नन्दनभुवस्सुमध्यमे**
**रोमराजिमिव मध्यसंश्रिताम्॥ २२॥**

**केलीति**—इह वने हे सुमध्यमे शोभनावलग्ने केलिशैलमणिमेखलापदात् क्रीडाशैलस्य [3]मणिमयानितम्बस्थानात्, काञ्चीपदादित्यपि गम्यते, उद्गतां उत्थितां नन्दनभुवः मध्यं संश्रितां, [4]अवलग्नसंश्रितामपि, अत एव रोमराजिं नन्दनभूमेः रोमावलीमिव स्थितां तमालवाटिकां पश्य॥ २२॥

**सम्भ्रमेण वनपालदारिकाः**
**सामि[5]लङ्घितपराग[6]रोधसम्।**
**आलवालवलयेषु शाखिनां**
**[7]वाहयन्ति मकरन्दवाहिनीम्॥ २३॥**

**सम्भ्रमेणेति**—वनपालानां दारिकाः कुमारिकाः सामिलङ्घितपरागरोधसं किञ्चिदतिक्रान्तपुष्परजःकृतकूलां मकरन्दवाहिनीं पुष्प-

---

[1] तत एव—ग. [2] श्रमात्कम्पमानावयवा—घ. [3] मणिनितम्ब—घ. ट.
[4] वलग्न—ग. ञ. [5] लम्भित—झ. [6] रोधनाम्—मु. [7] पाययन्ति—झ.

रसनदीं सम्भ्रमेण त्वरया शाखिनामालवालवलयेषु जलाधारमण्डलेषु वाहयन्ति पुनरपि कूलं यथावत्कृत्वेति भावः। दारकशब्दादपत्यवाचिनः स्त्रीत्वे टापि 'प्रत्ययस्थात्कात्पूर्वस्य' (पा. सू. ७-३-४४) इति इकारे च सति दारिकाशब्दः। "दारको भेदकेऽपत्ये" इति विश्वः ॥ २३ ॥

**चक्रवाकमिथुनोदितस्तनी**
**वीक्ष्यतामिह विहारवापिका ।**
**पुष्परेणुरुचिरा मधुश्रियः**
**पुत्रिकेव पुरुहूतसम्मता ॥ २४ ॥**

**चक्रवाकेति**—चक्रवाकमिथुनमेव उदितावुद्गतौ स्तनौ यस्याः सा तथोक्ता पुष्परेणुभिः पतितैः रुचिरा, पक्षे पुष्परेणुकोमलशरीरा, अत एव [1]पुरुहूतस्य सम्मता इन्द्रस्य प्रिया मधुश्रियः वसन्तलक्ष्म्याः पुत्रिका सुतेव स्थिता विहारवापिका [2]विहारदीर्घिका वीक्ष्यताम् ॥२४॥

**दिव्यपद्मवदना मणिप्रभा**
**दीर्घिकेयमसिताब्जलोचना ।**
**अन्तरिक्षमणिदर्पणान्तरे**
**बिम्बितेव भवती विभाव्यते ॥ २५ ॥**

**दिव्येति**—दिव्यपद्मवदना मनोज्ञपद्ममुखी मणिप्रभा हरिन्मणिप्रभासमानप्रभा असिताब्जलोचना [3]इन्दीवरलोचना इयं दीर्घिका अन्तरिक्षमेव मणिदर्पणं तस्यान्तरे मध्ये बिम्बिता प्रतिबिम्बिता भवतीव त्वमिव विभाव्यते प्रतीयते ॥ २५ ॥

---

[1] पुरुहूतसम्मता—अ. [2] विहारस्य दीर्घिका—ग. अ. ट. [3] इन्दीवरनयना—ग. अ.

अप्सरस्सु निखिलास्वलक्षितां
रूपसम्पदमसौ तवाद्भुताम् ।
पश्यतीव पुरुहूतवापिका
भृङ्गतारकितपद्मलोचना ॥ २६ ॥

अप्सरस्स्विति—पुरुहूतस्य वापिका निखिलास्वप्यप्सरस्सु अलक्षितां अदृष्टां अद्भुतां तव रूपसम्पदं सौंदर्यसमृद्धिं भृङ्गेण तारकितं [1] सञ्जातकनीनिकं पद्ममेव लोचनं यस्यास्तथाभूता सती पश्यतीव ॥ २६ ॥

बिभ्रती त्वदभिलापचेतसोः
स्वादुतां प्रसदनं च शाश्वतम् ।
दृष्टिरुत्पलवनं दिशत्वसौ
दीर्घिकापयसि दीर्घलोचने ॥ २७ ॥

बिभ्रतीति—हे दीर्घलोचने त्वदभिलापचेतसोः स्वादुतां शाश्वतं प्रसदनं च बिभ्रती, यथासङ्ख्यमन्वयः, त्वदभिलाप इव मधुरे त्वच्चेतसीव नित्यप्रसन्ने चेत्यर्थः, दीर्घिकापयसि दीर्घिकाया जले असौ दृष्टिः इदं तव लोचनं उत्पलवनं दिशतु उत्पलवनवत् कटाक्षपातं ददातु । मधुरं प्रसन्नं दीर्घिकापयः कटाक्षयेत्यर्थः ॥ २७ ॥

शोणकुड्मलमुखी सरोजिनी
शोभते हरितपत्रशालिनी ।
संवृता त्रिदशपादपैरसौ
शारिकेव मणिपञ्जरस्थिता ॥ २८ ॥

शोणेति—शोणकुड्मलमुखी अरुणमुकुलाग्रवदना हरितानि पत्राणि शलति गच्छति प्राप्नोतीति हरितपत्रशालिनी श्यामवर्णवती

[1] सञ्जाततारकं–घ. ट.

त्रिदशानां पादपैः मन्दारादिभिः पञ्जरस्थानीयैः संवृता असौ सरोजिनी नलिनी मणिपञ्जरस्थिता शारिकेव शोभते। शारिकापक्षे शोणकुट्मलाकारवदना हरितैः पक्षैः शलति गच्छति शलते चलतीति वा हरितपत्रशालिनी। 'शल गतौ' (भ्वादि ८४३) इति '[1]शल चलन' (भ्वादि ४९०) इति वा भौवादिको धातुः। शारिका शुकप्रिया। तथा च वासवदत्तायां प्रयोगः "ततो जम्बूकुञ्जस्थिता शारिका काचिच्चिरादागतं शुकं प्रकोप[2]तरलाक्षमुवाच। कितव शारिकान्तरमन्विष्य गतोऽसि"[3] (श्रीरं. मु. १२२ पृ.) इत्यादि। [4]नैघण्टुकैश्शुकप्रकरणादन्यत्र [5]शारिकायां तु [6]गौरादिष्वभिधानात् पक्ष्यन्तरमित्यप्याहुः॥ २८॥

> व्याहृतिक्षमदशातिवर्तिनीं
> विप्लुताम्बुज[7]रुचिं रजःकणैः।
> सेवते मधुमदेन मोहितः
> पुष्पितां भ्रमर एष पद्मिनीम्॥ २९॥

व्याहृतीति—मधुमदेन मकरन्दलाभहर्षेण "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति विश्वः, मोहितः [8]परवशं प्राप्तः एष भ्रमरः व्याहृतिक्षमां वचनयोग्यां दशामतिवर्तमानां शोभातिशयेन वचनपथातीतां रजःकणैः [9]परागकणैः विप्लुताम्बुजरुचिं छन्नकमलकान्तिं पुष्पितां सञ्जातप्रसूनां, तारकादित्वादितच्, 'पुष्प विकसने' (दिवादि ११२२) इति धातोः कर्तरि क्तप्रत्ययेन विकसितामिति वा,

---

[1] संवरणार्थकोऽप्ययम्, धातुपाठे चलनसंवरणयोरित्यर्थनिर्देशदर्शनात्. [2] तरलाक्षरमुवाच–घ. [3] आगतोऽसि–घ. [4] नैघण्टुकाः–घ. [5] "शारिकायां तु गोराटी इत्यभिधानात्" इत्यत्र शुद्धपाठः स्यादिति भाति। अत एव हेमचन्द्रकोशे 'शारिका तु पीतपादा गोराटी गोकिराटिका' (४ कांडे ४०१ श्लो.) इत्युक्तं दृश्यते। किं चायमेव शारिकाशब्दः शुकप्रकरणादन्यत्र वैजयन्त्यामपि 'वाचाला मुखरा शारिः' इति कप्रत्ययरहिततया निर्दिष्टो दृश्यते। 'मैना' इति भाषायां तत्पक्षिनाम व्यपदिशन्ति च. [6] गौरादित्वाभिमानात्–ग. [7] रुचं–मु. [8] पारवश्यं–ग. ञ. ट. [9] परागधूलिभिः–ग.

पद्मिनीं नलिनीं सेवते उपभुङ्क्ते। यथा मद्यपानजनितेन मदेन नष्टविवेको भ्रमरः कामुकः 'मलवद्वाससा न संवदेत' (तै. सं. २–५–१) इति निषेधात् सम्भाषणोचितदशातिवर्तिनीं "या स्नाति तस्या अप्सुमारुकः" (तै. सं. २–५–१) इति निन्दया स्नानाभावात्पांसुकणच्छन्नाम्बुजसमानकान्तिं पुष्पितां ऋतुमतीं पद्मिनीं "कमलमुकुलमृद्वी फुल्लराजीवगन्धिः" इत्युक्तलक्षणां स्त्रियं निषेधमतिलङ्घ्य भुङ्क्ते, तद्वदिति शब्दशक्त्या ध्वन्यते। "भ्रमरः कामुकेऽलिनि" इति यादवः ॥ २९ ॥

एष चात्र समया सरोजिनी-
मेकतानयति चित्तचक्षुषी ।
[1]पादपैरुपगतश्चतुर्विधैः
पारिजात उदधीन्द्रसम्भवः ॥ ३० ॥

एष इति—अत्र नन्दने सरोजिनीं समया नलिनीसमीपे "अभितः परितः" (वा. १४४२) इत्यादिना द्वितीया, चतुर्विधैः मन्दारसन्तानकल्पवृक्षहरिचन्दनभेदेन चतुष्प्रकारैः [1]पादपैः उपगतः परिवृतः उदधीन्द्रसम्भवः क्षीरोदप्रभवः एष [2]पारिजातः चित्तचक्षुषी एकतानयति एकाग्रे करोति। 'तत्करोति' (ग. सू. २०४) णिच्। "एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि" इत्यमरः। [3]चित्तचक्षुषी इत्यत्र चित्तस्य प्राण्यङ्गत्वं नास्तीति नैकवद्भावः ॥ ३० ॥

पद्मरागरमणीयपल्लवं
पश्य कोमलहरिन्मणिच्छदम् ।
पुष्पभूतवरशिल्पभूषणं
तप्तहेम[4]रुचिरत्विषं तरुम् ॥ ३१ ॥

पद्मरागेति—पद्मरागरमणीयपल्लवं अरुणरत्नरूपरुचिरकिसलयं

---

[1] 'पादपैरभिगतः'–ग. अ. ग्र. दे. मु. [2] 'पारिजातश्च' इति पाठस्स्यात्. [3] चित्तेन सहिते चक्षुषी इति शाकपार्थिवादित्वात्समासो वाऽत्र बोध्यः. [4] रुचिरत्वचं–ग्र.

कोमलहरिन्मणिच्छदं मनोज्ञगारुडमणिरूपपलाशं पुष्पभूतवरशिल्पभूषणं पुष्पत्वापन्नोत्तमनिर्माणकटककेयूराद्याभरणं तप्तहेमरुचिरत्विषं प्रतप्तस्वर्णमिव रुचिरप्रभं तरुं पारिजातं पश्य ॥ ३१ ॥

नम्रतामुपगतः फलैरसौ
वल्गुभृङ्गविरुतैरभिष्टुवन् ।
आर्द्रभावसुभगो विभाव्यते
कामकिङ्कर इवोचितक्रियः ॥ ३२ ॥

नम्रतामिति—फलैः नम्रतामुपगतः प्राप्तः वल्गुभृङ्गविरुतैः मनोज्ञभृङ्गध्वनिभिः अभिष्टुवन् आर्द्रभावसुभगः मकरन्दरसार्द्रतया चक्षुष्यः [1] एष पारिजातः उचितक्रियः नम्रत्वमभिष्टुतिमार्द्रभावं च प्राप्तः पत्यौ स्निग्धः अतिशयितभृत्योचितक्रियाशाली कामकिङ्कर इव विभाव्यते प्रतीयते । उद्दीपनविभावत्वात्कामकिङ्करत्वोत्प्रेक्षा ॥ ३२ ॥

अक्षदामरचनोचितैः फलैः
देवतानुगुणपुष्पसम्पदा ।
वल्कलैश्च वसनैश्च विन्दते
वीतरागधृतरागहृद्यताम् ॥ ३३ ॥

अक्षदामेति—अक्षदामरचनोचितैः जपार्थ[2]मक्षसूत्रस्य निर्माणयोग्यैः फलैः देवातानुगुणपुष्पसम्पदा देवानामुपभोगानुकूलानां पुष्पाणां समृद्ध्या वल्कलैर्वसनैश्च वीतरागधृतरागहृद्यतां फलवल्कलैर्वीतरागाणां पुष्पवसनैः धृतरागाणां च प्रियतां विन्दते प्राप्नोति ॥ ३३ ॥

---

1 ‘असौ एष’ इति पाठस्स्यात्. 2 ‘अक्षमालया’ इति पाठस्स्यात्.

**त्वत्सगन्धतुलसीसहोदरः**
**पुण्य एष पुरुहूतपादपः ।**
**प्राणिनां यदवलोकनक्षणे**
**पूर्वजातिषु भवत्यनुस्मृतिः ॥ ३४ ॥**

**त्वत्सगन्धेति**—त्वत्सगन्धतुलसीसहोदरः तव समानसौरभायाः सपत्नीत्वेन [1]समानसंबन्धायाया वा तुलस्यास्सहोदरः अमृतमथनोद्भवत्वात् "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः, एष पुरुहूतपादपः पारिजातः पुण्यः पुण्यजनकः पुण्यशब्दात्तत्करोतीति णिचि पचाद्यच्, यदवलोकनक्षणे यस्यावलोकनसमये प्राणिनां पूर्वजातिषु अतीतजन्मस्वनुस्मृतिः भवति। तथाभूतस्य पुण्यत्वं किमुच्यत इति भावः । अत्र हरिवंशवचनम्—

स ददर्श महाबाहुराक्रीडे वासवस्य ह ।
द्रुममभ्यर्चितं देवैः पारिजातं [2]महाद्भुतम् ॥
[3]नित्यपुष्पततं हृद्यं [4]दिव्यगन्धमनुत्तमम् ।
यमासाद्य जनस्सर्वो जातिं स्मरति [5]पूर्विकाम् ॥—
(विष्णुपर्व ६०-६५-६६) इति ॥ ३४ ॥

**एष कल्पलतिकापरिष्कृतः**
**प्रत्यवेक्षयति पल्लवारुणः ।**
**सागरेन्द्रसुतया समन्वितं**
**धाम कौस्तुभमयूखरञ्जितम् ॥ ३५ ॥**

**एष इति**—कल्पलतिकया परिष्कृतः पल्लवैररुणः एष पारिजातः सागरेन्द्रसुतया श्रिया समन्वितं कौस्तुभस्य मयूखैः रञ्जितं

---

[1] पत्नीत्वेन समानबान्धवायाः—घ. ट. [2] 'महाद्रुमं' इति हरिवंशे. [3] 'नित्यपुष्पधरं' इति हरिवंशे. [4] 'पुण्यगन्धं' इति हरिवंशे. [5] पौर्विकीं—घ. ट.

अरुणीकृतं धाम परं ज्योतिः प्रत्यवेक्षयति विचारयति, सदृशत्वात्स्मारयतीत्यर्थः ॥ ३५ ॥

पश्य जालकितपल्लवाधरै-
मौक्तिकैरमृतबिन्दुनिर्मलैः ।
सूचितस्मितरुचिं सुरद्रुमं
बालचन्द्रमणिराजसोदरम् ॥ ३६ ॥

पश्येति—जालकितपल्लवाधरैः जालकिताः सञ्जातजालकाः पल्लवा एवाधरा यैस्तैः अमृतबिन्दुनिर्मलैः सुधाबिन्दुभिरिवावदातैः मौक्तिकैः सूचितस्मितं[1] दर्शितस्मितकान्तिमिति यावत्, बालचन्द्रमणिराजसादरं नित्यं बालस्य हरशिरश्चन्द्रस्य कौस्तुभस्य च सहोदरं सुरद्रुमं पश्य। हरशिरश्चन्द्रकलैव दुग्धोदादुत्पन्ना। क्षयवृद्धिशाली प्रसिद्धचन्द्रस्त्वत्रिनयनात्। उभयोर्भेदानादरादुभयत्रा[2]प्युभयोर्जन्म कविभिरुच्यत इति चन्द्रालोके जयदेवोक्तम् ॥ ३६ ॥

अस्य नूनममृताधिकैः फलैः
सेवितैरनुदिनं दिवौकसाम् ।
न प्रसक्तिरपवर्गनन्दथौ
न क्षुधा न च [3]जरा न च व्यथा ॥ ३७ ॥

अस्येति—अमृतादधिकैः रसेन अमृतादुत्कृष्टैः अनुदिनं सेव्यमानैः भुज्यमानैः अस्य फलैः दिवौकसां देवानां अपवर्गनन्दथौ मुक्त्यानन्दे नूनं न प्रसक्तिः, इच्छा नास्ति। एतत्फलाशिनां मुक्त्यानन्देऽपीच्छा न सम्भाव्यत इत्यर्थः। न क्षुधा, न च जरा, न च व्यथा एतत्फलसेवामहिम्ना क्षुधादयोऽपि न जायन्त इत्यर्थः ॥ ३७ ॥

---

[1] 'स्मितरुचिं' इति पाठः स्यात्. [2] 'प्युदधिजन्म' इत्यपि पाठः—ग.
[3] जरा च न व्यथा—घ. ट.

त्वामिह त्रिदिवदर्शनागतां
मञ्जरीभिरवनम्य भूरिभिः ।
मानयत्ययमसौ सुरद्रुमो
मन्मथोपवनदेवतामिव ॥ ३८ ॥

त्वामिति—अयमसौ सुरद्रुमः इह त्रिदिवदर्शनागतां मन्मथोपवनदेवतामिव मन्मथोद्यानस्य अधिदेवतामिव स्थितां त्वां भूरिभिः बहुभिः मञ्जरीभिः अवनम्य मानयति पूजयति । वृक्षाणां वनदेवता मान्येति भावः । दृश्यमानस्वरूपप्रकारपरामर्शतया अयमसावित्युक्तिः ॥ ३८ ॥

द्वारकापरिषदं प्रयास्यतो
दूरवर्त्मपथिकस्य मे दृशा ।
प्रातराशवदिहास्य भुज्यते
सप्तलोकतिलकस्य चारुता ॥ ३९ ॥

द्वारकेति—सप्तलोकतिलकस्य सप्तानां लोकानामलङ्कारभूतस्य पारिजातस्य चारुता द्वारकापरिषदं द्वारकाया आस्थानं प्रयास्यतः अत एव दूरवर्त्मपथिकस्य दूरमार्गस्य पथिकस्य [1]सामान्यषष्ठ्या समासः, मे दृशा मम लोचनेन प्रयाणसमये प्रातराशवत् प्रातरश्यते भुज्यत इति प्रातराशः, तेन तुल्यं यथा तथा भुज्यते । यथा दूरं गच्छतः प्रभोरनुचरैः [2]दृष्टं प्रातरशनं भुज्यते [3]तद्वदित्यादरातिशयोक्तिः ॥ ३९ ॥

गाढबद्धनयना त्वमीहसे
कामधेनुसहजन्मनि द्रुमे ।
नूनमस्य मणिभूभृता सह
स्थापनं निजनिवेशनिष्कुटे ॥ ४० ॥

गाढेति—कामधेनोः सहजन्मनि सहजे द्रुमे पारिजाते गाढ-

---

[1] 'षष्ठी शेषे' (पा. सू. २-३-५०) इति सूत्रविहितसंबन्धसामान्यषष्ठ्यन्तेनेत्यर्थः.
[2] 'मृष्टं' इति 'इष्टं' इति वा पाठः स्यात्. [3] तद्वदत्यादरा—घ.

बद्धनयना दृढनियमितलोचना त्वं नूनं प्रायः अस्य पारिजातस्य निजनिवेशनिष्कुटे स्वगृहोद्याने मणिभूभृता मणिमयेन [1] इन्द्रक्रीडाशैलेन सह स्थापनं ईहसे इच्छसि । "निष्कुटस्तु गृहोद्याने" इति विश्वः ॥ ४० ॥

[2] व्युत्थितेषु विमुखेषु वा
स्वयं निर्निमेषनयनेषु नाकिषु ।
त्वद्विवक्षितमतः परं कथं
पुष्पमस्य बिभृयात्पुलोमजा ॥ ४१ ॥

व्युत्थितेष्विति—स्वयं निर्निमेषनयनेषु स्वभावादनिमिषलोचनेषु पारिजातसंरक्षणे जागरूकेष्वित्यपि गम्यते, नाकिषु व्युत्थितेषु विरुद्धेषु विमुखेषु भीत्या उदासीनेषु वा त्वद्विवक्षितं त्वया वोढुमिष्टं अस्य पारिजातस्य पुष्पं अतः परं त्वद्विवक्षानन्तरं कथं पुलोमजा इन्द्राणी बिभृयात् । सम्भावनायां लिङ् । देवा व्युत्थिता भवन्तु विमुखा वा । त्वद्विवक्षानन्तरं पारिजातोऽत्र न स्थाप्यत इति शच्याः तत्पुष्पोपभोगसम्भावना नास्तीत्यर्थः ॥ ४१ ॥

शङ्खपद्मसुरपादपादिभिः
श्लाघितां त्रिदिवतो गुणाधिकाम् ।
माननीयचरिता मया सह
द्वारकां त्वमधिवत्स्यसि प्रिये ॥ ४२ ॥

शङ्खेति—हे प्रिये [3] शङ्खपद्मसुरपादपादिभिः शङ्खपद्मौ निधी, सुरपादपः पारिजातः, आदिशब्देन सुधर्मादयो गृह्यन्ते, तैर्हेतुभिः श्लाघितां श्लोकैरुपश्लोकितां त्रिदिवतः स्वर्गात् गुणाधिकां प्राकार-

---

[1] इन्द्रस्य क्रीडा—अ. ट. [2] व्यर्थितेषु—म्र. मु. [3] 'शङ्खचक्र' इति घ.—कोशेऽशुद्धः पाठः.

गोपुरादिसौभाग्यगुणैरधिकां द्वारकां माननीयचरिता महनीयचरित्रा त्वं मया सह अधिवत्स्यसि। 'वस निवासे' (भ्वादि—१००५) इति धातोः लृट्। 'सस्यार्धधातुके' (पा. सू. ७-४-४९) इति सकारस्य तकारः। अधिपूर्वत्वात् 'उपान्वध्याङ्वसः' (पा. सू. १-४-४८) इति अधिकरणस्य कर्मता। श्लाधितामिति क्तप्रत्ययो 'धातुसम्बन्धे प्रत्ययाः' (पा. सू. ३-४-१) इति भविष्यदर्थे साधुः ॥ ४२ ॥

दुग्धसिन्धुदुहितुस्सहोदरे
वासमेयुषि वदान्यपादपे।
शक्रदारवदनेऽपि दुर्लभां
लप्स्यते तव विहारभूः श्रियम् ॥ ४३ ॥

दुग्धेति—तव विहारभूः क्रीडाभूमिः दुग्धसिन्धोर्दुहितुः श्रियः सहोदरे वदान्यपादपे बहुप्रदे वृक्षे पारिजाते वासमेयुषि प्राप्तवति सति शक्रदारवदनेऽपि शचीमुखेऽपि दुर्लभां श्रियं लप्स्यते अवाप्स्यति। तदा शचीमुखस्य पारिजातशोभावैधुर्यादिति भावः ॥ ४३ ॥

इत्थमादिकविना समीरिता
साऽन्वभावि किल सत्यभामया।
सामरस्यमिव तेन जग्मुषी
सौकुमार्यसुभगा सरस्वती ॥ ४४ ॥

इत्थमिति—इत्थं उक्तप्रकारेण आदिकविना शास्त्रयोनित्वा-द्याद्येन कविना कृष्णेन समीरिता तेन सामरस्यं तुल्यमाधुर्यत्वं जग्मुषी गतवतीव स्थिता, कृष्णव[1]त्तस्यै रोचमानेति यावत्, सौकुमार्यसुभगा

[1] 'तस्यैव' इति घ. ट.-कोशयोरशुद्धः पाठ इति भाति.

मार्दवेन हृद्या सा सरस्वती सत्यभामया अन्वभावि अनुभूता आकर्णिता। ‘एवं किलोपाध्यायः कथयति’ इतिवत् परकृतौ किलशब्दः ॥ ४४ ॥

योजितोऽथ यदुवंशकेतुना
ख्यातकीर्तिरमृतापहारतः।
उत्क्षिपन् खगपतिस्सुरद्रुमं
पक्षपङ्क्तिविपिने न्यवीविशत् ॥ ४५ ॥

**योजित इति**—अथ यदुवंशस्य केतुना केतुवत् प्रकाशकेन कृष्णेन योजितः पारिजातमुत्क्षिपेति नियोजितः अमृतापहारतः अमृतापहारेण ख्यातकीर्तिः खगपतिः गरुडः सुरद्रुमं उत्क्षिपन् उद्धरन्नेव पक्षपङ्क्तिविपिने स्वस्य पक्षपङ्क्तिरेव विपिनं तस्मिन् न्यवीविशत् निवेशयति स्म ॥ ४५ ॥

एतमश्रुतचरं पुरन्दरः
शुश्रुवान् क्षणमुदन्तमैश्वरम्।
भीतिकोपसमवायरूपया
दोलयेव समकृष्यत द्विधा ॥ ४६ ॥

**एतमिति**—अश्रुतचरं अश्रुतपूर्वम्, [1]भूतपूर्वे चरट्, ऐश्वरं ईश्वरसम्बन्धिनं एतमुदन्तं वृत्तान्तं शुश्रुवान् पुरन्दरः भीतिकोपसमवायरूपया भयक्रोधमेलनात्मना दोलया क्षणं द्वेधा प्रकारद्वयेन समकृष्यतेव। [2]क्रोधाद्युद्धायाकृष्ट इव, भयात् प्रत्याकृष्ट इव चासीदित्यर्थः ॥ ४६ ॥

---

[1] भूतपूर्वे चरट् (पा. सू. ५-३-५३) इति सूत्रेणेति भावः. [2] क्रोधादुत्थाया—घ.

अप्रतिक्रियमपि प्रभोरिदं
चेष्टितं प्रतिचिकीर्षता तदा।
मन्युरेव शतमन्युना महा-
नागृहीतमनसाऽभ्यमन्यत ॥ ४७ ॥

अप्रतिक्रियमिति—तदा प्रतिक्रियारहितं प्रतिकर्तुमशक्यमपि प्रभोरिदं चेष्टितं प्रतिचिकीर्षता प्रतिकर्तुमिच्छता आगृहीतमनसा पारिजातविषये आग्रहयुक्तचेतसा शतमन्युना शतक्रतुना मन्युः कोप एव महान् पूजितः अभ्यमन्यत। कर्मणि लङ्। क्षमादाक्षिण्यादिना उदासीनमशक्तं मत्वा लोका न गणयन्तीति शक्रः कोपमेव श्लाघ्यममनुतेत्यर्थः। [1] आगृहीतेति कर्तरि क्तः। [2] भावप्रत्ययान्तादर्शआद्यच्प्रत्ययो वा ॥ ४७ ॥

दीप्तदृष्टचिररश्मिसन्तति-
र्वज्रघोषपरुषो मरुत्सखः।
चित्रचापशरवर्षवांस्ततः
प्रत्यदृश्यत मरुत्वदम्बुदः ॥ ४८ ॥

दीप्तेति—ततः अनन्तरं दीप्ता ज्वलिता दृष्टीनामेव अचिररश्मीनां विद्युतां सन्ततिः परम्परा यस्य स तथोक्तः "सन्ततिस्त्वन्वाये स्यात्पारम्पर्ये सुतेऽपि च" इति यादवः, वज्रस्य कुलिशस्य घोषेण परुषः रूक्षः मरुतां स्वानुचराणां देवानां सखा सहायः 'सखमित्रे सहाये च' [3] इति विश्वः, तत्पुरुषसमासत्वात् 'राजाहस्साखिभ्यष्टच्' (पा. सू. ५–४–९१) इति टच् समासान्तः, कार्यार्थमनु-

---

[1] आगृहीतेति कर्मकर्तरि क्तः–घ. ट [2] आगृहीतमिति भावक्तान्तात् 'अर्शआदिभ्योऽच्' (पा. सू. ५-२-१२७) इत्यनेन अच्प्रत्यय इत्यर्थः [3] इति विश्वयादवौ–घ. ट.

चरेषु प्राधान्यारोपेण मरुत्सख इत्युक्तिः, चित्रचापं नानावर्णमिन्द्रचापं शरवर्षं बाणवर्षं तदुभयवान् मरुत्वानेवाम्बुदः प्रत्यदृश्यत दृष्टः । अम्बुदपक्षे वज्रं अशनिः, मरुत् वायुः, शरं जलम् ॥ ४८ ॥

न्यस्तकर्बुरकुथोत्तरं निजं
वारणेन्द्रमधिरुह्य वासवः ।
नैकधातुमति रौप्यभूधरे
शोभते स्म निजरत्नशैलवत् ॥ ४९ ॥

न्यस्तेति—वासवः इन्द्रः न्यस्तेन संस्कृतेन कर्बुरेण नानावर्णेन कुथेन आस्तरणेन उत्तरं श्रेष्ठं, उक्तरूपः कुथ उत्तर उपरिस्थितो यस्य तमिति वा, " प्रवेण्यास्तरणं वर्णः परिस्तोमः [1] कुथो द्वयोः " इत्यमरः, निजं [2] वारणेन्द्रं ऐरावतं आधिरुह्य नैकधातुमति अनेकगैरिकादिनानावर्णधातुमति, एकशब्देन नसमासः, सर्वधनीत्यादिवत् कर्मधारयान्मत्वर्थीयः, रौप्यभूधरे रजताचले निजरत्नशैलवत् इन्द्रनीलाचलेन तुल्यं यथा तथा शोभते स्म ॥ ४९ ॥

अप्रतर्क्यवृजिनोत्थमासुरं
[3] भावमास्थितवता वलद्विषा ।
दुर्जयोऽपि विजिगीषितो
विभुस्सस्मितस्समरसम्मुखोऽभवत् ॥ ५० ॥

अप्रतर्क्येति ॥ अप्रतर्क्यवृजिनोत्थं अचिन्त्येन केनापि पापेनोत्थितं आसुरं भावं असुरसम्बन्धिनं भावं द्रोहाभिप्रायं आश्रितवता वलद्विषा इन्द्रेण दुर्जयः जेतुमशक्योऽपि विजिगीषितः विजेतुमिष्टः

---

[1] कुथः कुश इति हलायुधः–ग. [2] वारणेन्द्रमधिरुह्य–घ. [3] भावमाश्रितवतो वलद्विषः–अ. मु.

विभुः कृष्णः सस्मितः उपहासस्मितसहितस्सन् समरसम्मुखः युद्धाभिमुखोऽभवत् ॥ ५० ॥

देवराजयदुराजयोरिदं
द्वैरथं प्रतिभयं दिदृक्षवः ।
वेधसा सह सनन्दनादय-
स्त्यक्तसंयमधियोऽवतस्थिरे ॥ ५१ ॥

देवराजेति—प्रतिभयं भयङ्करं देवराजयदुराजयोरिदं द्वैरथं युद्धं दिदृक्षवः द्रष्टुमिच्छवः सनन्दनादयः सनन्दनसनत्कुमारप्रभृतयो दिव्ययोगिनः वेधसा स्वयमपि दिदृक्षुणा ब्रह्मणा सह त्यक्तसंयमधियः त्यक्तप्रणिधानचेतसस्सन्तः अवतस्थिरे अवस्थिताः । 'समवप्रविभ्यः स्थः' (पा. सू. १–३–२२) इत्यात्मनेपदम् ॥ ॥ ५१ ॥

भीषणप्रलयमेघसन्निभं
कृष्णमेघमथ मेघवाहनः ।
आपतन्नसुर[1]भेदकं क्षणा-
दाचकर्ष [2]ऋजुरोहितं धनुः ॥ ५२ ॥

भीषणेति—अथ अनन्तरं भीषणप्रलयमेघसान्निभं भयङ्करकल्पान्तमेघतुल्यं असुराणां भेदकं विदारकं कृष्णमेघं कृष्णो मेघ इव तं क्षणात् आपतन् प्रतिगच्छन् मेघवाहनः इन्द्रः ऋजुरोहितं ऋजुरोहिताख्यं निजं धनुः आचकर्ष आकर्षति स्म ।

ऋजुरोहितमिच्छन्ति बुधाश्शक्रशरासनम् ।

---

[1] भेदनं—ख. [2] ऋजुरोपितं—म. मु.

इत्यभिधानरत्नमाला । आचकर्ष ऋजुरोहितमित्यत्र 'ऋत्यकः' (पा. सू. ६–१–१२८) इति प्रकृतिभावः ॥ ५२ ॥

चक्रपाणिविजयाय चक्रिता-
द्भीमघोष[1]दलिताखिलश्रुतेः ।
वज्रपाणिधनुषश्शरोर्मयः
संबभूवुरुदधेरिवोर्मयः ॥ ५३ ॥

**चक्रपाणीति**—चक्रपाणेः कृष्णस्य विजयाय चक्रितात् मण्डलीकृतात् भीमेन घोषेण दलिताखिलश्रुतेः विदारितसकलजनश्रोत्रात् वज्रपाणिधनुषः इन्द्रचापात् उदधेः समुद्रात् ऊर्मय इव शरोर्मयः शरपरम्पराः संबभूवुः संभूताः । ऊर्मिशब्दः परम्परायां लाक्षणिकः ॥ ५३ ॥

वज्रिणश्शरगणस्समापत-
न्वाहने खगपतौ मुरद्विषः ।
तस्य तेजसि बभूव भस्मसा-
त्तूलराशिरिव कालपावके ॥ ५४ ॥

**वज्रिण इति**—मुरद्विषो वाहने खगपतौ गरुडे समापतन् वज्रिणः इन्द्रस्य शरगणः तस्य गरुडस्य तेजसि कालपावके प्रलयानले तूलराशिरिव भस्मसाद्बभूव [2]कार्त्स्न्येन भस्मीबभूव "विभाषा साति कार्त्स्न्ये" (पा. सू. ५–४–५२) इति सातिप्रत्ययः ॥ ५४ ॥

प्लावितो विशिखवृष्टिभिस्तदा
[3]जम्भभेदि[4]जलदप्रसूतिभिः ।

---

[1] दलितश्रुतेरिव—झ. ग्र. दे. मु. [2] 'कार्त्स्न्येन भस्म बभूव' इति घ. ट. —कोशयोर्न दृश्यते. [3] जम्भवैरिजलद—अ. ग्र. दे. मु. [4] जलदप्रहेतिभिः—झ.

अन्वदीपि गरुडः प्रतापवा-
नाज्यसिक्त इव वह्निराध्वरः ॥ ५५ ॥

प्लावित इति—तदा जम्भभेदी इन्द्र एव जलदः तस्मात्प्रसूति-र्यासां ताभिः विशिखवृष्टिभिः प्लावितः सिक्तः प्रतापवान् "प्रतापो निखिलारातिदण्डजश्चण्डिमा मतः" इति, तच्छाली गरुडः आज्य-सिक्तः आध्वरो वह्निः वैतानाग्निरिव अन्वदीपि अनन्तरं तेजसा दीप्तोऽभूत् । दीपिधातोः कर्तरि लुङ् । 'दीपजनबुध' (पा. सू. ३–१–६१) इत्यादिना चिण् ॥ ५५ ॥

वृत्रहन्तुरचमत्क्रियामिमां
विश्ववित्स्वविषये विभावयन् ।
पश्यति स्म विबुधेषु काश्यपिः
पन्नगेष्विव पराक्रमं क्षमम् ॥ ५६ ॥

वृत्रहन्तुरिति—वृत्रहन्तुः इन्द्रस्य स्वविषये स्वस्मिन् विषये इमामचमत्क्रियां इदमसामर्थ्यं विभावयन् आकलयन् विश्ववित् सर्वज्ञः काश्यपिः कश्यपस्यापत्यं गरुडः पन्नगेषु सर्पेष्विव विबुधेषु देवेषु परा-क्रमं क्षमं योग्यं पश्यति स्म । इन्द्रस्य सन्नाहे [1] विफलिते तं त्यक्त्वा तदितरान् देवानलक्ष्यभूतानपि पन्नगानिव लीलया अभिभवितुं विचारित-वानित्यर्थः ॥ ५६ ॥

तस्य देवपृतनाविधूतये
जृम्भमाणवपुषो महौजसः ।
अप्रभूतमभवज्जगत्त्रयं
बिभ्रतस्त्रिजगदेकदम्पती ॥ ५७ ॥

---

[1] विफले तं–ग. ञ.

तस्येति—देवपृतनाविधूतये सुरसेनाया विधूतनाय जृम्भमाण-वपुषः विवर्धमानशरीरस्य महौजसः महाबलस्य त्रिजगदेकदम्पती त्रिभुवनस्य [1]मुख्यदम्पती सत्यभामामाधवौ बिभ्रतः अस्य गरुडस्य जगत्त्रयमपि अप्रभूतं वपुर्[2]विजृम्भणापर्याप्तमभवत् ॥ ५७ ॥

तुङ्गपक्षतिशताङ्गशालिनो
भीमनागघटिताकृतेरभूत् ।
वाहतां च वहतस्स्वपत्तितां
सैन्यताऽस्य सुरसैन्ययोधिनः ॥ ५८ ॥

तुङ्गेति—तुङ्गपक्षतिशताङ्गशालिनः उन्नतं पक्षमूलानां शतं येषु तैः अवयवैश्शालमानस्य [3]वाहतां च वहतः सुरसैन्ययोधिनः देवसेनां योधयतः अस्य गरुडस्य सैन्यता चतुरङ्गबलत्वं अभूत् । शताङ्ग-नागवाहपत्तिशब्दैः रथगजतुरगपदातिप्रतीतेस्तथात्वारोपः । " स्त्री पक्षतिः पक्षमूलम् " " शताङ्गः स्यन्दनो रथः " इत्यमरः ' नागः पन्नगमातङ्ग-क्रूराचारेषु तोयदे ' 'पत्तिः पदातौ गमने ' इति विश्वः ॥ ५८ ॥

पारिजातपवनोर्मिबृंहितै-
र्वासुकिप्रभृतिभिर्महोरगैः ।
गाढतां हरिरथस्य बिभ्रतः
सारथिश्च तुरगाश्च साहसम् ॥ ५९ ॥

पारिजातेति—पारिजातपवनोर्मिबृंहितैः पारिजातमारुतपरम्परया पोषितैः वासुकिप्रभृतिभिः महोरगैः आभरणतया निबद्धैः गाढतां

---

[1] मुख्यौ दम्पती ग—ञ. [2] जृम्भणायापर्याप्त—घ. [3] ' भीमनागघटिता-कृतेः भीमैर्भयङ्करैः नागैस्सर्पैः घटिता संबद्धा आकृतिः आकारो यस्य तस्य वाहतां स्वपत्तितां च ' इति पाठः स्यात् .

दृढतां बिभ्रतः हरिरथस्य गरुडस्य सारथिश्च तुरगाश्च साहसं रथस्याकर्षकैस्तुरगैः सारथिना च भाव्यम् , एतस्य साहसमेव तथेति तदेव तुरगादिकमभूदित्यर्थः ॥ ५९ ॥

**गाढदीप्तगरलानलोष्मला**
**तार्क्ष्यभूषणभुजङ्गफूत्कृतिः ।**
**पीतनिर्भरसुधारसोन्मदाः**
**पाकशासनचमूरमूमुहत् ॥ ६० ॥**

**गाढेति**—गाढमत्यन्तं दीप्तेन गरलानलेन ऊष्मला औष्ण्यवती तार्क्ष्यस्य भूषणभुजङ्गानां फूत्कृतिः पीतेन निर्भरेण अतिमात्रेण सुधारसेन सुधैव रस्यते आस्वाद्यत इति रसः तेन उन्मदाः [1]उद्गतमदाः पाकशासनचमूः इन्द्रसेनाः अमूमुहद् मोहयति स्म । 'मुह वैचित्त्ये (दिवादि–११९९) इति धातोः ण्यन्ताल्लुङ् ॥ ६० ॥

**अप्रतर्क्यतरसो गरुत्मतः**
**पक्षवेगपवनेन ताडिताः ।**
**आत्मकङ्कटमपोह्य वज्रिणं**
**बभ्रमुर्दशसु दिक्षु मारुताः ॥ ६१ ॥**

**अप्रतर्क्येति**—अप्रतर्क्यतरसः अचिन्त्यवेगस्य गरुत्मतः पक्षवेगपवनेन पक्षवेग[2]प्रभववायुना ताडिताः मारुताः इन्द्रस्य सहायभूता एकोनपञ्चाशन्मारुताः आत्मकङ्कटं आत्मानो मरुत एव कङ्कटः कवचं कवचवद्रक्षका यस्य तं "उरच्छदः कङ्कटको जागरः कवचोऽस्त्रियाम्" इत्यमरः [3]वज्रिणं अपोह्य हित्वा दशसु दिक्षु बभ्रमुः भ्रमन्ति स्म ॥६१॥

---

[1] उद्धत–घ. [2] प्रभवेन वायुना–घ. ट. [3] वज्रिणमप्यपोह्य–घ. ट.

तस्य [1] पक्षमरुता निवर्तितैः
वाहिनी दिविषदामशेषतः ।
वृत्रशासनशरासनच्युतैः
प्रत्यविध्यत शरैरजिह्मगैः ॥ ६२ ॥

तस्येति—तस्य गरुडस्य पक्षमरुता निवर्तितैः परावर्तितैः वृत्रशासनशरासनात् इन्द्रचापात् च्युतैः अजिह्मगैः पत्रानिलवेगादृजुगमनैश्शरैः दिविषदां वाहिनी सेना अशेषतः कृत्स्नाऽपि प्रत्यविध्यत प्रातिलोम्येन विद्धा अभूत् ॥ ६२ ॥

वैनतेयनखरैर्विदारितो
बाह्यमान्तरमपि त्यजन्मदम् ।
शोणितैर्विरुरुचे सुरद्विपः
श्वेतशैल इव धातुनिर्झरैः ॥ ६३ ॥

वैनतेयेति—वैनतेयस्य नखरैः विदारितः पाटितः बाह्यं दानजलरूपं आन्तरं गर्वरूपमपि मदं [2] त्यजन् तदुभयरहित इत्यर्थः, "मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः" इति विश्वः, सुरद्विपः ऐरावतः श्वेतशैलः [3] रूप्याचलः धातुनिर्झरैः धातुरक्तैः प्रवाहैरिव शोणितैरुरुचे अस्रुग्भिश्शुशुभे ॥ ६३ ॥

क्ष्वेडितेन मुषिताशयानिव
प्लोषितानिव दृशा प्रदीप्तया ।
दारितानिव पतत्रमारुतैः
निर्जरानतनुतारुणानुजः ॥ ६४ ॥

[1] पक्षपवनैर्निवर्तितैः—म्र. मु. [2] त्यजन्नुभय—घ. ट. [3] रौप्याचलः—घ. ट.

[1]क्ष्वेडितेनेति—अरुणस्य अनुजः गरुडः निर्जरान् क्ष्वेडितेन सिंहनादेन मुषिताशयान् लुण्ठितचित्तानिव, प्रदीप्तया ज्वलितया दृशा प्लोषितान् दाहितानिव, पतत्रमारुतैः दारितान् पाटितानिव च अतनुत ॥ ६४ ॥

स्वासु दिक्षु समवस्थितास्तदा
दिष्टवञ्चितधियो दिवौकसः ।
तोयदा इव युगान्तभास्करं
सन्निकृष्य समवृण्वताच्युतम् ॥ ६५ ॥

स्वास्विति—तदा गरुडपराक्रमणसमये स्वासु स्वकीयासु [2]प्राच्यादिषु दिक्षु समवस्थिताः दिष्टवञ्चितधियः दिवौकसः इन्द्रवह्न्यादयो देवाः तोयदाः युगान्तभास्करं प्रलयार्कमिव संनिकृष्य संनिकृष्टा भूत्वा अच्युतं समवृण्वत संवृण्वते स्म ॥ ६५ ॥

नाजिघांसदपराधिनोऽपि तान्
नाकनायकगणान् जनार्दनः ।
आनृशंस्यमथवा न भज्यते
तस्य संश्रितजनेषु जातुचित् ॥ ६६ ॥

नाजिघांसदिति—जनार्दनः [3]नाकनायकगणान् नाकनायकास्त्रिदिवेशा देवाः तेषां समूहान् अपराधिनोऽपि नाजिघांसत् न हन्तुमैच्छत् । कथं द्रोहिष्वपि दया, तत्राह—अथवेति । तस्य कृष्णस्य संश्रितजनेषु आनृशंस्यं अहिंस्रत्वं जातुचित् कदाचिदपराधादिसमयेऽपि न भज्यते भङ्गुरं न भवति । 'भञ्जो आमर्दने' (रुधादि—१४५४) इति धातोः कर्मकर्तरि यक्प्रत्ययः । ततश्च देवा अपि भागवता इति भावः ॥ ६६ ॥

---

[1] क्ष्वेळितेन—झ. [2] प्राच्यादिदिक्षु—घ. [3] नाकनायकभटान्—ग्र. दे. मु.

तेषु शिक्षणपरश्शिलीमुखान्
प्राहिणोत्प्रभुरमर्मभेदिनः ।
अङ्कुशेन निशितेन हस्तिपो
दुर्मदान् प्रशमयन्निव द्विपान् ॥ ६७ ॥

**तेष्विति**—प्रभुः कृष्णः निशितेन उत्तेजितेन अङ्कुशेन दुर्मदान् मदोद्धतान् द्विपान् प्रशमयन् प्रशान्तान् कुर्वन् हस्तिपः आधोरण इव शिक्षणपरः तेषां शिक्षामात्रे तत्परस्सन् अमर्मभेदिनः प्राणस्थानान्यभिन्दानान् शिलीमुखान् तेषु प्राहिणोत् प्रेषयति स्म ॥ ६७ ॥

तं समेत्य निरपायतेजसं
सप्तसप्तिमिव तारकाग्रहैः ।
सद्भिरेव विबुधैरसत्समा
काऽपि दुर्ग्रहदशाऽन्वभूयत ॥ ६८ ॥

**तमिति**—विबुधैः देवैः कर्तृभिः निरपायतेजसं स्थिरतेजसं—

अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजस्समुदाहृतम् ॥

इत्युक्तलक्षणं तेजः, पराक्रमोपेतं कृष्णं समेत्य निरपायतेजसं स्थिररोचिषं सप्तसप्तिं सप्ताश्वमादित्यं समेत्य तारकाग्रहैः अश्विन्यादिगुरुशुक्रादिभिरिव सद्भिः विद्यमानैरेव असत्समा भावप्रधानो निर्देशः, अविद्यमानत्वतुल्या काऽपि [1]दुर्ग्रहदशा दुष्टग्रहाणां राह्वादीनामवस्था अदृश्य-

[1] अत्र अदृश्यमानतारूपसादृश्यप्रयोजकधर्मोपपादनार्थं दुर्ग्रहदशेत्युक्तं स्यात् । ततश्च दुर्ग्रहदशेत्यस्य अदृश्यमानावस्था, अस्तदशेति यावत्, इत्यपि विवरणं भवितुमर्हति । ततश्च यथा ग्रहाणां सूर्येण संगतौ तत्तेजोभिभूततेजस्कतया अदर्शनादस्तसंभवः, तथा श्रीकृष्णसूर्येण संगतानां देवानां तत्तेजोभिभूततेजस्कतयाऽदृश्यताऽऽसीदिति भावः.

तेतियावत्, अन्वभूयत अनुभूता। 'अदृश्यग्रहा राहुकेतवोऽन्यत्रोपरागसमयात्' इति ज्योतिर्विदः। तदाऽप्यदृश्या एव ते, भूच्छायाविशेषवैवर्ण्यमेव तेजोमण्डले दृश्यमित्यपि केचित्॥ ६८॥

अष्टभिश्च हरितामधीश्वरै-
र्यमप्रभृतिभिश्च संहतैः।
वृष्णिवीरशरखण्डितायुधै-
र्विह्वलैरजनि वीतशक्तिभिः॥ ६९॥

अष्टभिरिति—संहतैः संघीभूतैः अष्टभिर्हरितामधीश्वरैः दिक्पतिभिश्च अर्यमप्रभृतिभिः आदित्यादिभिश्च वृष्णिवीरशरखण्डितायुधैः कृष्णबाणलूननिजायुधैः वीतशक्तिभिः अपेतबलैश्च सद्भिः विह्वलैः विक्लवैः अजनि जातम्। भावे लुङ्। [1]'अष्टाभ्य औश्' (पा. सू. ७-१-२१) इति दीर्घोच्चारणात् ज्ञापकात् 'अष्टन आ विभक्तौ' (पा. सू. ७-२-८४) इत्यात्वं वैकल्पिकमिति [2]तदभावपक्षे अष्टभिरिति रूपम्॥ ६९॥

अक्रमाद्दश दिशोऽवलोकयन्
दत्तदृष्टिरभितः क्रमाद्रुषा।
स्रस्तकार्मुक[3]शिरस्त्रकञ्चुकां
प्रेक्ष्य देवपृतनामदूयत॥ ७०॥

अक्रमादिति—अक्रमाद्दश दिशोऽवलोकयन् त्रासेन युगपदेव दशापि दिशः पश्यन् अनन्तरमापातदृष्टस्वसेनावस्थाविशेषदर्शनाय

---

[1] 'अष्टाभ्य' इत्यारभ्य 'उच्चारणात्' इत्यन्तग्रन्थस्थाने 'अष्टनो दीर्घात् इत्यत्र दीर्घग्रहणात्' इति ग्रन्थेन भाव्यमिति भाति। अन्यथा यथाश्रुते अष्टन आ विभक्तावित्यस्य वैकल्पिकत्वाभावे अष्टाभ्य औशित्यत्र दीर्घोच्चारणस्य असांगत्याभावेन तस्य आत्ववैकल्पिकत्वज्ञापकत्वासंभवात्. [2] दीर्घाभाव—क. [3] शिरस्त्र-खड्गतां—ख.

क्रमादभितो दत्तदृष्टिः वृषा इन्द्रः स्रस्तकार्मुकशिरस्त्रकञ्चुकां कृष्ण-शरार्दिततया गलितचापशिरोवेष्टनकवचां देवपृतनां सुरसेनां वीक्ष्य अदूयत पर्यतप्यत ॥ ७० ॥

अस्त्रशस्त्रविनिपात[1]मोहिता-
　नर्दितानसुरवैरिसायकैः ।
सत्रपेव सपदि त्रपा जहौ
　दैन्यमीलितदृशो दिवौकसः ॥ ७१ ॥

**अस्त्रेति**—अस्त्राणामैन्द्रवारुणादीनां शस्त्राणामायुधानां च विनिपातेन मोहितान् कर्तव्यमूढतां प्रापितान् असुरवैरिसायकैः भगवद्बाणैः अर्दितान् विद्धान् दैन्येन कातर्येण मीलितदृशः दिवौकसः देवान् त्रपा लज्जा सत्रपेव तादृशेषु तेषु स्थातुं त्रपावतीव सपदि जहौ तत्याज ॥ ७१ ॥

अप्सरोनयनतोयकज्जलैः
　शोणितैश्च विभुना सुपर्वणाम् ।
आत्मकीर्तिसुधया विशोधिते
　चित्रमम्बरतले व्यलिख्यत ॥ ७२ ॥

**अप्सर इति**—विभुना कृष्णेन आत्मनः कीर्तिरेव सुधा तया विशोधिते निर्मृष्टे अम्बरतले भित्तिस्थानीये अप्सरसां नयनतोयकज्जलैः बाष्पसहिताभिर्मषीभिः सुपर्वणां निजशरखण्डितानां देवानां शोणितैश्च चित्रं व्यलिख्यत विलिखितम् । तैरम्बरं नानावर्णं कृतमित्यर्थः ॥ ७२ ॥

---

[1] मोहितानाहता—ग्र. दे. मु.

पञ्चवक्त्रवदनस्थमामिषं
[1]प्राप्तुकाम इव बालवञ्चकः ।
प्रस्थितामभिनिवेशवान् पुनः
प्रत्यपद्यत धृतिं पुरन्दरः ॥ ७३ ॥

**पञ्चवक्त्रेति**—अभिनिवेशवान् आग्रहवान् पञ्चवक्त्रवदनस्थं सिंहमुखगतं आमिषं मांसं प्राप्तुकामः बालवञ्चकः बालक्रोष्टेव स्थितः भगवद्धस्तगतपारिजातप्रेप्सुतयेति भावः, [2]"क्रोष्टृधूर्तौ तु वञ्चके" इति यादवः, पुरन्दरः इन्द्रः प्रास्थितां धृतिं गतं धैर्यं पुनः प्रत्यपद्यत प्राप । पुनरपि धैर्यमवलम्ब्य युद्धाय संनद्ध इत्यर्थः ॥ ७३ ॥

वज्रमात्तमरिहन्तृ जिष्णुना
विष्णुना च युधि चक्रमुद्यतम् ।
दृष्टवन्ति भुवनानि जज्ञिरे
कम्पितानि कलुषाणि च क्षणात् ॥ ७४ ॥

**वज्रमिति**—युधि तस्मिन् युद्धे जिष्णुना इन्द्रेण आत्तं गृहीतं अरीणां हन्तृ वज्रं, विष्णुना उद्यतं उद्धृतं चक्रं च दृष्टवन्ति भुवनानि क्षणात् सद्य एव कम्पितानि भयेन वेपितानि, कलुषाणि अप्रसन्नानि उभयोरपि पराजयस्यानिष्टतया खिन्नानि च जज्ञिरे जातानि । अरिहन्तृ इत्यनुषक्तं चक्रस्यापि विशेषणम् । सविशेषणप्रक्रमात् । तस्मिन्नरीति भिन्नं वा विशेषणम् । [3]अराः नाभिनेमिमध्यावयवाः, तद्वदित्यर्थः ॥ ७४ ॥

---

[1] प्राप्तुं कामो यस्येति विग्रहः । "तुंकाममनसोरपि" इति तुमुनो मकारलोपः. [2] "क्रोष्टुधूर्तौ तु वञ्चकौ" इति मुद्रितवैजयन्तीकोशे दृश्यते. [3] अराणि नाभि—ञ.

तौ परस्परजिगीषयोद्यतौ
वीक्ष्य निष्प्रतिमवीर्यवैभवौ ।
व्योमभित्तिलिखितैरिव स्थितं
व्यक्तविस्मयभयैस्सुरासुरैः ॥ ७५ ॥

**ताविति**—परस्परं जिगीषया जेतुमिच्छया उद्यतौ सन्नद्धौ निष्प्रतिमवीर्यवैभवौ अनुपमबलसम्पदौ तौ कृष्णपुरन्दरौ वीक्ष्य व्यक्तविस्मयभयैः [1] सुहृदोर्युद्धमिति विस्मयः, [2] जगतामयमुत्पात इति भयं च येषां तैः सुरासुरैः देवदानवैः, व्योमैव भित्तिः [3] तस्यां लिखितैरिव निर्विकारैः स्थितम् ॥ ७५ ॥

कस्य केन परिभूतिरापतेत्
कश्च वेद रणवर्तनीमिति ।
सन्दिहानमनसैव तत्क्षणं
मध्यसीम्नि विजयश्रिया स्थितम् ॥ ७६ ॥

**कस्येति**—अनयोर्मध्ये कस्य केन कृता परिभूतिः परिभवः आपतेत्, कश्च रणवर्तनीं युद्धमार्गं "वर्तन्येकपदीति च" इति मार्गपर्यायेष्वमरः, वेद जानातीति सान्दिहान[4]मनसैव विजयश्रिया कर्त्र्या तत्क्षणं तस्मिन् क्षणे मध्यसीम्नि स्थितम् । तदा कस्यापि जयः पराजयो वा विनिर्णेतुमशक्य [5]आसीदित्यर्थः । क्षणमित्यत्यन्तसंयोगे द्वितीया ॥ ७६ ॥

---

[1] इतः पूर्वं 'व्यक्ते विस्मयभये' इति पाठेन भाव्यमिति भाति. [2] जगतां यदुत्पातः—**ग. अ.** [3] तत्र लिखितै—**ग.** [4] मनसेव—**घ. प्र. दे. मु.** [5] आसीत्—**घ. ट.**

प्रेषितां हरिहयेन भीषणां
ह्रादिनीं हृतवति त्रिधामनि ।
लोलिता निववृते परस्परं
लोकपालपृतना पराङ्मुखी ॥ ७७ ॥

**प्रेषितामिति**—तदनन्तरं हरिहयेन हरयः—
त्वक्केशवालरोमाणि सुवर्णाभानि यस्य तु ।
हरिस्स वर्णतोऽश्वस्स्यात् पीतकौशेयसप्रभः[1] ॥
इत्युक्तलक्षणा हया यस्य तेनेन्द्रेण प्रेषितां भीषणां भयङ्करीं ह्रादिनीं वज्रं "ह्रादिनी वज्रमस्त्री स्यात्" इत्यमरः, त्रिधामनि [2] क्षीरोदरविबिम्बवैकुण्ठरूपस्थानत्रयवति कृष्णे हृतवति सति पराङ्मुखी जयप्रत्याशाविच्छेदात्पलायनाय पश्चान्मुखी लोकपालानां पृतना सेना परस्परं लोलिता धावनत्वरया अन्योन्यमुपरिपतनेन क्षोभिता सती निववृते निवृत्ता ॥ ७७ ॥

कान्दिशीकजितकाशिनोरिमां
व्यापृतिं विबुधवृष्णिवीरयोः ।
प्रेक्ष्य दुर्मदविवेकयोरिव
प्रस्थितेव चकिताऽमरावती ॥ ७८ ॥

**कान्दिशीकेति**—कान्दिशीकजितकाशिनोः "कान्दिशीको भयद्रुतः" "जितकाशी जितरणः" इति वैजयन्ती, तथाभूतयोः विबुधेषु वृष्णिषु च वीरयोः इन्द्रकृष्णयोः दुर्मदः दुर्गर्वः, विवेकस्तदभिभावकस्तत्त्वबोधः, तयोरिव [3] व्यापृतिं व्यापारं जितत्वजेतृत्व-

---

[1] सुप्रभः—अ. ट. [2] क्षीरोदार्कबिम्ब—ग. [3] 'इमां व्यापृतिं' इति पाठः स्यात्.

लक्षणं प्रेक्ष्य चकिता भीता अमरावती इन्द्रपुरी प्रस्थितेव पलायितव-तीव। इन्द्रपुरीनिवासिनां कात्स्न्येन पलायनं तस्याः पलायनमिवासी-दित्यर्थः ॥ ७८ ॥

तं तथा समरदैन्यविप्लुतं
शान्तदर्पमयथापुरं स्थितम्।
व्यक्तनृत्तहृदयं वलद्विषं
वीक्ष्य विश्वमखिलं व्यलज्जत ॥ ७९ ॥

तमिति—तथा तेन प्रकारेण समरदैन्यविप्लुतं युद्धकातर्येण पीडितं शान्तदर्पं अत एव अयथापुरं अयथापूर्वं स्थितं व्यक्तनृत्त-हृदयं स्फुटकम्पहृदयं वलस्य द्विषमिन्द्रं वीक्ष्य अखिलं विश्वं सकलं जगत् "विश्वं जगति सर्वस्मिन्" इति विश्वः, व्यलज्जत विलज्जते स्म-इन्द्रस्य तादृशीं दशां वीक्ष्य लोकत्रयेऽपि कृष्णसाम्याभिमानिनः सर्वे विलज्जिता इत्यर्थः। यथापुरमिति [1] पदार्थानतिवृत्तावव्ययीभावः। पुरा यथाभूतं तथाभावमनतिक्रान्तं यथापुरमुच्यते। 'अव्ययी-भावश्च' (पा. सू. २-४-१८) इति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (पा. सू. १-२-४७) इति ह्रस्वत्वम्। 'अतोऽम्' (पा. सू. ७-१-२४) इत्यमादेशश्च ॥ ७९ ॥

व्रीडया तरलितैर्विलोचनै-
[2] र्वेपमानकमलाकरोपमः।
संनतः क्षणमवैक्षि वासवः
सापहासमिव सत्यभामया ॥ ८० ॥

व्रीडयेति—व्रीडया लज्जया तरलितैः चटुलीकृतैः विलोचनैः वेपमानकमलाकरोपमः कम्पमानकमलाकरसदृशः संनतः अवाङ्मुखः

---

[1] 'अव्ययं विभक्ति' (पा. सू. २-१-६) इत्यादिसूत्रेणेति भावः. [2] वेल्लमान—झ.

वासवः सापहासमिव अपहाससहितं यथा तथा सत्यभामया अवेक्षि अवेक्षितः । इवशब्दो वाक्यालङ्कारे । 'इवैवखल्वादयो [1] वाक्यालङ्करणार्थाः' इति शृङ्गारप्रकाशिका ॥ ८० ॥

याद्वेन्द्रविबुधेन्द्रयोस्तदा
रत्नयोरिव तुलाधिरूढयोः ।
गौरवेण ददृशे समुन्नति-
र्लाघवेन च नतिस्तदद्भुतम् ॥ ८१ ॥

यादवेन्द्रेति—तदा यादवेन्द्रविबुधेन्द्रयोः कृष्णपुरुहूतयोः रत्नयोरिव तुलाधिरूढयोस्सतोः बलतारतम्यज्ञापकयोद्धृप्रतियोद्धृभा-परिग्रहस्तुलारोहणत्वेनाध्यवसितः, गौरवेण कृष्णस्य शौर्योत्कर्षेण समुन्नतिः ददृशे दृष्टा । लाघवेन इन्द्रस्य शौर्यापकर्षेण नतिः ददृश इत्यनुषङ्गः । जयपराजयौ उन्नतिर्नतिरित्यध्यवसितौ । तदद्भुतं, लोके हि तुलाधिरूढयोः गौरवेणावनतिः, लाघवेनोन्नतिश्च भवति । इदं तु तद्विपरीतमाश्चर्यमित्यर्थः ॥ ८१ ॥

यत्प्रभौ नरकमर्दनेऽभव-
द्देवदर्पदमने ततोऽधिकम् ।
पुष्यति स्म मकरन्दमेदुरं
पुष्पवर्षममृतोद्भवस्तरुः ॥ ८२ ॥

यदिति—प्रभौ कृष्णे नरकमर्दने नरकासुरस्य दमने सति यत्पुष्पवर्षमभवत् ततोऽधिकं मकरन्दैर्मेदुरं सान्द्रस्निग्धं पुष्पवर्षं कर्म देवदर्पदमने प्रभौ देवानां दर्पस्य दमने सति अमृतोद्भवः अमृत इति

---

[1] वाक्यपूरणार्थाः–ग. अ.

क्षीरोद एवोपचर्यते, तत्प्रभवः तरुः पारिजातः पुष्यति स्म उपचिनोति स्म। [1]प्रभुविषयसमयोचितसेवया विजितेषु विशेषो नावेक्षणीय इति भावः। अमृतोद्भवस्तरुरिति कर्तृनिर्देशेन इतः परं भगवदुपभोगेन स्वस्य कृतार्थता भविष्यतीति तस्य [2] हर्षाच्चाधिक[3]पुष्पवृष्टिर्व्यज्यते ॥ ८२ ॥

इत्यनाकलितपूर्वसत्कृतिं
वृक्षमात्रकलहोल्वणं विभुः।
[4]निर्जिगाय मिषतां दिवौकसा-
मात्तशस्त्रममरावतीश्वरम् ॥ ८३ ॥

इतीति—इति उक्तप्रकारेण अनाकलितपूर्वसत्कृतिं अविमृष्टप्राचीननरकमर्दननिजगृहागमनादिसत्कारं वृक्षमात्रकलहोल्वणं वृक्ष एव वृक्षमात्रं, [5]सुप्सुपेति समासः, तस्य कलहः तन्निमित्तकलहः, [6]शेषषष्ठीसमासः, तेन उत्कटं आत्तशस्त्रं युद्धाय [7]गृहीतशस्त्रं अमरावतीश्वरमिन्द्रं विभुः कृष्णः मिषतां दिवौकसां, मिषतो देवाननादृत्य, 'षष्ठी चानादरे' (पा. सू. २—३—३८) इति अनादरे षष्ठी, निर्जगाय निर्जितवान् ॥ ८३ ॥

दीप्यमानमनघेन तेजसा
देवकीसुतमवेक्ष्य देवताः।

---

[1] प्रभुविजय—ञ. [2] हर्षश्च अधिकपुष्पवृष्टि—ग. ञ. [3] पुष्पं व्यज्यते—घ. ट. [4] तृतीयतुर्यपादयोर्व्यत्यासो दृश्यते (म. मु. कोशे). [5] 'सह सुपा' (पा. सू. २-१-४) इत्यत्र सुपेति योगविभागेन तत्र सुबित्यनुवृत्त्या सुबन्तं सुबन्तेन समस्यत इत्यर्थकेन समास इत्यर्थः. [6] 'षष्ठी शेषे' (पा. सू. २-३-५०) इति सूत्रेण षष्ठ्यां तदन्तस्य 'षष्ठी' (पा. सू. २-२-८) इति सूत्रेण समास इत्यर्थः. [7] गृहीतायुधम्—ग.

अस्त्रजालमवधूय सिद्धिदा-
नञ्जलीनबिभरुः कराम्बुजैः ॥ ८४ ॥

दीप्यमानमिति—देवताः अनघेन तेजसा अनवद्येन प्रतापेन दीप्यमानं प्रज्वलन्तं देवकीसुतमवेक्ष्य अस्त्रजालमवधूय आयुधनिकरं त्यक्त्वा कराम्बुजैः सिद्धिदान् अभिमतसिद्धिप्रदान् अञ्जलीन अबिभरुः बिभ्रति स्म । 'सिजभ्यस्तविदिभ्यश्च' (पा. सू. ३-४-१०९) इति झेर्जुसादेशः ॥ ८४ ॥

सोऽथ संयति पलायनोन्मुखः
पाकशील इव पाकशासनः ।
सत्यया विहसितोऽपि सत्ववान्
प्रत्यबोधि [1] परमेष्ठिनं पुनः ॥ ८५ ॥

स इति—अथ अनन्तरं संयति युद्धे पाकशीलः अर्भकस्वभाव इव पलायनोन्मुखः [2] कृष्णमप्रसाद्यैव त्रपया पलायनाभिमुखः सः पाकशासनः इन्द्रः सत्यया विहसितोऽपि सत्ववान् भगवदनुग्रहात्तत्कालोदितसत्वगुणशाली सन् पुनः परमेष्ठिनं प्रत्यबोधि पुनरपि यथापुरं कृष्णं [3] परं ब्रह्मेति प्रतिबुद्धवानित्यर्थः । कर्तरि लुङ् । 'दीपजनबुध' (पा. सू. ३-१-६१) इत्यादिना चिण् । स्त्रीणामपहासस्य अत्यन्तत्रपाभिमानजनकतया सत्वोदयविरोधित्वमभिप्रेत्य अपिशब्दः प्रयुक्तः ॥ ८५ ॥

धिक्प्रमादमदिरां विमोहिनीं
धिक्परिग्रहविशेषमीदृशम् ।

---

[1] परमेष्ठिना पुनः—म्र. दे. मु. [2] कृष्णं प्रसाद्यैव—अ. [3] परब्रह्मेति—घ.

धिक् च मे त्रिदशराजतामिति
स्वं जगर्ह [1] मघवान् मुहुर्मुहुः ॥ ८६ ॥

**धिगिति**—विमोहिनीं मोहजननीं प्रमादः भगवत्तत्त्वे अनवधानमेव मदिरा तां धिक् सा निन्दिता, यया मोहं प्राप्य [2] भगवतेऽप्युद्युद्धमिति भावः। ईदृशं पारिजातादिरूपं, परिगृह्यत इति परिग्रहः परिच्छेदः, तद्रूपं विशेषं दृश्यपदार्थं च धिक्। यन्निमित्तोऽयं कलह इति भावः। "विशेषोऽवयवे भेदे द्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवः, मे त्रिदशराजतां देवेन्द्रतां च धिक्, ययेत्थं ममाहंकारस्सम्पादित इति भावः, इति अनेन प्रकारेण [3] मघवान् इन्द्रः मुहुर्मुहुः स्वं स्वात्मानं जगर्ह गर्हति स्म। [4] गर्ह निन्दने (चुरा. १८४६) इति धातुः ॥ ८६ ॥

तेन तत्र विहगेन्द्रवाहनो
वारणादवनतेन बिभ्यता।
निर्जितेन [5] हरिणा हरिस्स्वयं
पर्यवैक्षि शरणं प्रियासखः ॥ ८७ ॥

**तेनेति**—तत्र युद्धस्थले विहगेन्द्रवाहनः गरुडवाहनाधिरूढः हरिः कृष्णः वारणादवनतेन अधिरूढमैरावतं विहाय नमस्कृतवता, ल्यब्लोपे पञ्चमी, यद्वा—वारणादवरुह्य नमस्कृतवता, अत्र नमतिधातुरवरोहणाङ्गे नमस्कारे वर्तत इति उपात्तविषयिणी अपादाने पञ्चमी,

[1] मघवा मुहु—ग्र. मु. [2] भगवते प्राद्युद्धमिति—घ. ट. [3] मघवा—ग्र. ञ. [4] गर्ह गर्हणे—ग्र. 'गर्ह विनिन्दने' इति मुद्रितधातुपाठे दृश्यते। अस्य चाधृषीयत्वेन 'आ धृषाद्वा' (ग. सू. २०२) इति गणसूत्रेण णिचो वैकल्पिकत्वाण्णिजभावे लिटि जगर्हेति रूपं बोध्यम्. 'गर्ह कुत्सायाम्' (भ्वादि ६३६) इति गर्हतेर्भौवादिकस्यात्मनेपदित्वादेवमुक्तम्. [5] हरिणा प्रियासखः पर्यवैक्षि शरणं स्वयं हरिः—ग्र. दे. मु.

तत्र निमित्तं बिभ्यता कृतापराधोऽस्मीति त्रस्यता निर्जितेन तेन हरिणा इन्द्रेण प्रियासखः सत्यभामासहितः स्वयं शरणं पर्यवैक्षि पर्यवेक्षितः। रक्षितृत्वेन वृत इत्यर्थः। "शरणं गृहरक्षित्रोः" इत्यमरः ॥ ८७ ॥

तुष्टुवे च पुरुषं [1]पुरुष्टुतं
प्राञ्जलिः परिबृढो दिवौकसाम्।
रक्तभाव[2]विगमोज्ज्वलं मुखं
राहुमुक्तमिव चन्द्रमुद्वहन् ॥ ८८ ॥

तुष्टुव इति—रक्तभावविगमोज्ज्वलं अत एव राहुमुक्तं चन्द्रमिव स्थितं मुखमुद्वहन् दिवौकसां परिबृढः प्रभुरिन्द्रः प्राञ्जलिः प्रणीताञ्जलिस्सन्, "प्रादिभ्यो धातुजस्य" (वा. १३६०) इति बहुव्रीहिः, पुरुष्टुतं पुरुभिः बहुभिर्ब्रह्मादिभिः स्तुतं पुरुषं कृष्णं तुष्टुवे [3]स्तुवीते स्म। चकारः पूर्वश्लोकोक्तक्रियासमुच्चयार्थः। 'स्तुतस्तोमयोश्छन्दसि' (पा. सू. ७–३–१०५) इति छन्दसि षत्वविधानेऽपि छान्दसान्यपि[4] क्वचित् भाषायां भवन्तीति पुरुष्टुतमिति प्रयोगः ॥ ८८ ॥

शक्र एष शरणं प्रपद्यते
भक्तजीवित भवन्तमीश्वरम्।
मित्रभावसमुपागतं जनं
न त्यजेयमिति नाथ मन्यसे ॥ ८९ ॥

शक्र इति—भक्तजीवित भक्तानां जीवितहेतो, तद्धेतुत्वात्तद्व्यपदेशः, ईश्वरं लोकानां नियन्तारं भवन्तं एषः इदानीं

[1] पुरि स्थितं (पुरः स्थितं) अ. मु. [2] विमलोज्ज्वलं–अ. मु. [3] स्तुते–ग. [4] क्वचित् कार्याणि भवन्तीति– घ. 'पुरि स्थितं' 'पुरः स्थितं' इति पाठान्तरयोर्नाम क्लेश इति भाति.

कृतापराधः शक्रः शरणं प्रपद्यते गोप्तारं वृणीते । पदिधातो[1]र्गत्यर्थत्वाद्वरणरूपज्ञानार्थता । सर्वेश्वरे कृतापराधस्य मम काकस्येवान्यस्त्राता न सम्भवतीत्याकिञ्चन्यमधिकारिविशेषणं सूचयितुमीश्वरमित्युक्तम् । ननु कथं सद्यःकृतापराधस्य शरणागतिरङ्गीकार्येत्यत्राह—मित्रेति । हे नाथ मित्रभावसमुपागतं मित्रभावेन सम्प्राप्तं जनं न त्यजेयमिति मन्यसे । अनेन—

मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन ।
दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम् ॥

इति भगवद्वचनं च स्मारितम् । कथं सदोषेषु दोषं तिरस्कृत्य वात्सल्यमुन्मिषेत्, येन न त्यजेदित्याशङ्कय तन्मूलं दर्शितं—नाथेति । स्वामिनो हि स्वकीयेषु सदोषेष्वपि वात्सल्यं भवतीति भावः ॥ ८९ ॥

मातरं त्रिजगतां तव प्रियां
मानुषीति मनुते स्म मद्वधूः ।
तेन नूनमनुभूतमीदृशं
[2]दैन्यमेतदवशोदितं मया ॥ ९० ॥

मातरमिति—मद्वधूः मम भार्या शची त्रिजगतां त्रित्वसंमितानां जगतां मातरं जननीं तव प्रियां सत्यां मानुषीति मनुते स्म मानुषीयं दिव्यभोगानामनर्हेति मत्वा पारिजातपुष्पाण्यदत्त्वैव तस्यै स्वयमुपभुक्तवती । एवं पौराणिकी कथा—

शची च सत्यभामायै पारिजातस्य पुष्पकम् ।
न ददौ मानुषीं मत्वा स्वयं पुष्पैरलंकृता ॥

---

[1] 'गत्यर्थानां ज्ञानार्थत्वम्' इति हि वैयाकरणसमय इति भावः. [2] दैन्यमेतदवशोधितं मया—घ.

इति । तेन कर्मणा ईदृशं परिदृश्यमानप्रकारं अवशोदितं स्ववशतां विनैव कर्माधीनमद्दुर्बुद्धिमूलतया जातं एतद्दैन्यं मयाऽनुभूतम् । नूनमिति निश्चये । 'तर्कनिश्चययोर्नूनम्' इति यादवः । महदपचारः सद्यः फलतीति भावः ॥ ९० ॥

[1]निर्जितोऽहमजितेन यत्त्वया
लम्भितोन्नतिरनेन न त्रपे ।
न ह्यजय्यमिह किञ्चिदस्ति ते
सर्वनेतुरतिरिक्तमात्मनः ॥ ९१ ॥

निर्जित इति—अजितेन केनाप्यनिर्जितेन परमपुरुषेण त्वया "अजितः कमलापतिः" इति विश्वः, निर्जितोऽहमिति यत् अनेन लम्भितोन्नतिः त्वया निर्जितत्वेऽपि तव प्रतियोद्धाऽभवमिति प्रापितोच्छ्रायः न त्रपे न लज्जे । इह भुवने सर्वनेतुः अखिलनायकस्य तव आत्मनः [2]स्वस्मात् अतिरिक्तं स्वव्यातिरिक्तं किञ्चित् अजय्यं जेतुमशक्यं न ह्यस्ति । अतः कुतो मम त्रपा भवेदिति भावः । 'क्षय्यजय्यौ शक्यार्थे" (पा. सू. ६–१–८१) इति निपातः ॥ ९१ ॥

अस्तु मा स्म [3]भवदित्यनन्यया
वीक्षया जगदिदं नियच्छता ।
नाथ! निष्प्रतिघतेजसा त्वया
नन्वयं मम पराजयो जयः ॥ ९२ ॥

अस्त्विति—हे नाथ अस्तु जगदिदानीं भवतु, मा स्म भवत् इदानीं मा [3]भूदिति अनन्यया सहकार्यन्तरानिरपेक्षया वीक्षया सङ्कल्पेन इदं

---

[1] निर्जितोऽहमिति तेन—अ. [2] स्वस्मात् त्वद्व्यातिरिक्तं -घ. [3] भवदित्य-नन्यथा—झ.

जगत् नियच्छता सृष्टिसंहाराभ्यां नियमयता निष्प्रतिघतेजसा अप्रतिघातप्रभावेन त्वया अयं मम पराजयः जयो [1] ननु । पराजय एव जयवल्लोके गौरवाकर इत्यर्थः । "ननु प्रश्नेप्यऽनुनये विज्ञानेऽप्यवधारणे" इति विश्वः । मा स्म भवदिति [2] माङ्योगादडागमाभावः । [3] स्मोत्तरत्वाल्लङ् । 'उभयप्राप्तौ कर्मणि' (पा. सू. २–३–६६) इति कर्तृकर्मोभयप्राप्तौ कर्मणि षष्ठीनियमनात् त्वयेति कर्तरि तृतीया ॥ ९२ ॥

आत्मघातिभिरहम्मतिग्रहा-
न्मादृशैस्त्वदितरेषु रागिभिः ।
अव्यवस्थितजयेतरक्रमं
द्यूतमेतदघृणैर्निषेव्यते ॥ ९३ ॥

आत्मघाभिरिति—अहम्मतिग्रहात् अहङ्कारग्रासात् आत्मघातिभिः आत्मद्रोहिभिः तत्र निमित्तं त्वदितरेषु रागिभिः त्वां विहाय त्वदितरेषु [4] रिपुजयाद्येषु विषयेषु सक्तैः [5] "क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात्" इति भगवदासक्तिरहितानां आत्मघातित्वमुक्तम्, अघृणैः स्वपरनिर्दयैः मादृशैः मद्विधैर्जनैः अव्यवस्थितजयेतरक्रमं अनेकान्तजयपराजयपरिपाटीकं एतद्द्यूतं युद्धरूपमक्षदेवनं निषेव्यते । द्यूतवद्युद्धमपि बहुविधानर्थपर्यवसायीति तथात्वाध्यवसायः । एवं निन्दनेन इतः परमीदृशेषु स्वामिद्रोहेषु न प्रवर्तिष्य इति व्यज्यते ॥ ९३ ॥

आधिकारिकपदेषु ते वयं
स्वेषु यावदधिकारमाहिताः ।

---

[1] ननु पराजयो–घ. [2] 'न माङ्योगे' (पा. सू. ३-४-७४) इत्यडागमनिषेधादिति भावः. [3] 'स्मोत्तरे लङ् च' (पा. सू. ३-३-१७६) इति सूत्रेणेति भावः. [4] रिपुजयसाध्येषु–ज. [5] 'निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात्' (श्रीभागवते १०-१-४) इतीदमस्य पूर्वार्धं बोध्यम्.

**प्रापितास्तव परं पदं त्वया**
**निर्विशेम [1] निविशेमहि त्वयि ॥ ९४ ॥**

**आधिकारिकेति**—यावदधिकारं अधिकारनिवृत्तिपर्यन्तं स्वेषु आत्मीयेषु आधिकारिकपदेषु इन्द्राद्यधिकारप्रयोजनकेषु स्थानेषु त्वया आहिताः निवेशिताः ते त्वत्कृतेन शिक्षणेन अनुगृहीता वयं अहं वह्निवरुणादयश्च तव परं पदं त्वया प्रापितास्सन्तः निर्विशेम अनुभवेम । तत्र निमित्तं—त्वयि निविशेमहि । उदुम्बरे वसतीतिवत् सामीप्ये सप्तमी । त्वत्समीपे निवसेमेत्यर्थः ।

इह परत्र च ईदृग्द्रोहमकुर्वन्त एव अधिकारनिवृत्तौ—

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥
(कूर्मपुराणे पूर्वखण्डे १२—२६९)

इति स्मृत्युक्तरीत्या त्वत्पदं प्राप्य परमानन्दरूपं त्वामनुभवन्तस्त्वत्समीपे स्यामेत्यर्थः । ' यावदधिकारमवस्थितिराधिकारिकाणाम् ' (ब्र. सू. ३—३—३१) इति सूत्रार्थ इहानुसन्धेयः ॥ ९४ ॥

**न क्षिपेदपि तृणं समीरण-**
**स्त्वत्प्रयुक्तमनलो न निर्दहेत् ।**
**न प्रजापशुपती न चेतरे**
**त्वद्विपक्षमभिरक्षितुं क्षमाः ॥ ९५ ॥**

**न क्षिपेदिति**—त्वत्प्रयुक्तं त्वया निहितं तृणमपि समीरणो वायुः न क्षिपेत् क्षेप्तुं न शक्नोति । अनलो वह्निः न निर्दहेत् दग्धुं न

---

[1] ' नेर्विशः (पा. सू. १-३-१७) इत्यनेन निपूर्वाद्विशतेरात्मनेपदं बोध्यम्.

शक्नोति। उभयत्र ' शकि लिङ् च ' (पा. सू. ३–३–१७२) इति लिङ्। प्रजापशुपती सृष्टिसंहारकर्तारौ ब्रह्मरुद्रौ, द्वन्द्वान्तस्थस्य प्रत्येकं सम्बन्धः, त्वाद्विपक्षं तव परिपन्थिनं अभिरक्षितुं न क्षमाविति द्विवचनेन विपरिणामः। इतरे च तदुभयातिरिक्ता देवदानवादयोऽपि कैमुतिकन्यायेन न क्षमाः, अत्रोत्तरार्धस्यार्थः [1]काकवृद्धादिषु प्रसिद्धः। पूर्वार्धेन [2]तलवकारश्रुत्यर्थोऽनुसंहितः। तत्रैवमुपाख्यायते—देवेषु कदाचिदन्तर्यामिप्रभावायत्तेन असुरविजयेन दृप्तेषु तद्दर्पशमनाय यक्षरूपेण प्रादुर्भूतः परमपुरुषः स्वसमीपमागतमग्निं प्रति किं तव सामर्थ्यमिति पृष्ट्वा तेन सर्वमपि जगद्दग्धुं सामर्थ्ये कथिते किञ्चित् तृणं दहेति पुरतो निधाय सर्वप्रयत्नेनापि तद्दग्धुमसमर्थं व्रीडितं तं प्रतिनिवर्त्य स्वसमीपमागतं वायुं प्रत्यपि तथैव पृष्ट्वा तेन सर्वमपि जगदुन्मूलयितुं स्वस्य

---

1 अत्र ' काकवृत्तादिषु ' इति शुद्धपाठः स्यात्. 2 केनोपनिषदि तृतीयखण्ड इदमुपाख्यानं श्रूयते। तथा हि—" ब्रह्म ह देवेभ्यो विजिग्ये। अथ तस्य ह ब्रह्मणो विजये देवा अमहीयन्त। त ऐक्षन्तास्माकमेवायं महिमेति। तद्धैषां विजज्ञौ। तेभ्यो ह प्रादुर्बभूव। तन्न व्यजानत किमिदं यक्षमिति। तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति। तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वाऽहमस्मीत्यब्रवीज्जातवेदा अहमस्मीति, तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतद्दहेति। तदुपप्रयाय। सर्वजवेन तन्न शशाक दग्धुम्। स तत एव निववृते। नैतदशकं विज्ञातुं यदेतद्यक्षमिति। अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति, तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीति, वायुर्वाऽहमस्मीत्यब्रवीन्मातरिश्वा वाऽहमस्मीति। तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वमाददीय यदिदं पृथिव्यामिति। तस्मै तृणं निदधावेतदादत्स्वेति। तदुपप्रेयाय। सर्वजवेन तन्न शशाकादातुम्। स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति। अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति, तथेति तदभ्यद्रवत्तस्मात्तिरोदधे। स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति " (केनोपनिषदि तृतीयखण्डः) इति.

सामर्थ्ये कथिते तदेव तृणमिदं क्षिपेति निर्दिश्य तथैव तत्रासमर्थं तमपि प्रतिनिवर्त्य प्रशान्तगर्वान् देवानकरोत् ' इति ॥ ९५ ॥

**अग्रजे मयि दिवौकसां पितुः**
**पुत्रभावमुपसेदुषा त्वया ।**
**मानितोऽहमवमानितस्त्वयं**
**वानरानुचरितैस्स्वचेष्टितैः ॥ ९६ ॥**

**अग्रज इति**—अग्रजे ज्येष्ठे मयि सति दिवौकसां देवानां पितुः काश्यपस्य पुत्रभावं उपसेदुषा प्राप्तवता त्वया मानितः अग्रज इति पूजितोऽहं वानराणामनुचरितैः वानरचरिततुल्यैः स्वचेष्टितैः ममैव चेष्टितैः अवमानितः परिभूतः। मदपराध एव त्वत्कृतावमानहेतुरिति त्वय्यवद्यं किमपि नास्तीत्यर्थः ॥ ९६ ॥

**मद्विधा विषमवृत्तिशालिनः**
**शान्तघोरसमयातिलङ्घिनः ।**
**पोषयन्ति भवतः क्षमानिधेः**
**प्रायशः प्रहसनोचितं रसम् ॥ ९७ ॥**

**मद्विधा इति**—शान्तघोरसमयातिलङ्घिनः सात्विकराजस-वेलातिवर्तिनः मूढाख्यां तामसीं दशां प्राप्ताः अत एव विषमवृत्ति-शालिनः विरुद्धाचरणवन्तः मद्विधाः मम विधेव विधा प्रकारो येषां ते तादृशा जनाः क्षमानिधेः क्षान्तेर्निधानभूतस्य भवतः तव प्रायशः प्रायेण प्रहसनोचितं रसं प्रहसनं नाम हास्यरसप्रधानो रूपकभेदः तदु-चितरसो हास्य एव, तं पोषयन्ति, पोषमुपचितं कुर्वन्ति, पुष्यत इति पोषः, कर्मणि घञ्। ततः ' तत्करोति (गणसूत्रं २०४) इति णिच्। चुरादिण्यन्तस्तु ' पुष धारणे ' (चुरा. १७५१) इति धातुर्धारणार्थो न

पुष्ट्यर्थः, धातुनामनेकार्थकत्वमादाय स एव वाऽत्र द्रष्टव्यः, मादृशेषु मूढेषु द्रुह्यत्सु सहिष्णोस्तव कथमेषां मौढ्यमित्यपहास एव भवति। को न मूढ इति भावः ॥ ९७ ॥

अस्मदिष्टमनघास्त्रिविष्टपं
दुःखमिश्रमवधार्य दुर्गतिम् ।
त्वत्पदं परमनन्यचेतसः
संश्रयन्ति निरपायमाश्रयम् ॥ ९८ ॥

अस्मदिष्टमिति—अनघाः क्षीणपापाः पुरुषाः अस्मदिष्टं अस्माकमिष्टं दुःखमिश्रं क्षयिष्णुत्वसातिशयत्वादिदोषैः दुःखसम्भिन्नं त्रिविष्टपं स्वर्गं दुर्गतिं दारिद्र्यं नरकं वा अवधार्य निश्चित्य अनन्यचेतसः विषयान्तरव्यावृत्तमनसः सन्तः, निरपायमाश्रयं अपायरहितमावासं परं उत्कृष्टं त्वत्पदं तव स्थानं वैकुण्ठं संश्रयन्ति महता यत्नेन तदेव प्राप्नुवन्तीत्यर्थः। त्वत्पदं तव पदं चरणं भजन्ति, मोक्षायेति वा। अत्र पक्षे आश्रयशब्दश्शरण्यपरः। "[1] दुर्गतिर्नरके दैन्ये" इति विश्वः। अस्मादिष्टमिति शेषषष्ठीसमासः। 'क्तेन च पूजायाम्' (पा.सू. २-२-१२) इति समासनिषेधस्तु कृद्योगलक्षणषष्ठीविषयः। यद्वा अस्माभिरिष्टमिति भूतार्थक्तान्तस्य तृतीयासमासः ॥ ९८ ॥

अल्पमस्थिरमपायदन्तुरं
स्वर्गसौधमवधीर्य सूरयः ।
निस्तरन्ति जगदेकहेतुना
सेतुनेव भवता भवार्णवम् ॥ ९९ ॥

अल्पमिति—सूरयः विद्वांसः अल्पं मुक्तिमहानन्दापेक्षया स्वतः क्षुद्रं अस्थिरं "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" [2]इति स्मृतेः,

---

[1] दुर्गतिर्नरके निस्त्वे—ज. [2] इति श्रुतेः विनश्वरं—ग. ज.

चञ्चलं अपायदन्तुरं असुरभयमुनिशापादिविपद्भिर्विषमं स्वर्गसौधं स्वर्गस्सौध इव तं, सौधदृष्टान्तेन सौधवदुन्नतिमात्रमितो विशेषो नान्य इति व्यञ्जयति, अवधीर्य अनादृत्य जगदेकहेतुना जगतामन्यनिरपेक्षेण कर्त्रा भवता सेतुनेव भवार्णवं तरन्ति ॥ ९९ ॥

त्वत्पदैकदृढभक्तिरूपया
मुक्तिवासरविभातसन्ध्यया ।
क्षीयते जगति कस्यचित्प्रभो !
मोहसन्ततिमयी महानिशा ॥ १०० ॥

त्वत्पदेति—हे प्रभो ! त्वत्पदैकदृढभक्तिरूपया तव चरणे एकस्मिन् या दृढभक्तिः तल्लक्षणया मुक्तिरेव वासरः तस्य विभातसन्ध्यया पूर्वसन्ध्यया कर्त्र्या मोहसन्ततिमयी मोहपरम्परारूपा महानिशा महती दीर्घा रात्रिः जगति कस्यचित् अनेकजन्मसंसिद्धस्य क्षीयते नाश्यते । 'क्षि क्षये' (भ्वादि २३६) इति धातोरन्तर्भावितण्यर्थतया सकर्मकात्कर्माणि लकारः । यद्वा 'क्षि हिंसायाम्' (स्वादि १२७६) इति हिंसार्थात्सौवादिकात् कर्मणि लकारः । अस्य छान्दसधातुमध्यपातित्वेऽपि भाषायां प्रयोगोऽभियुक्तैरङ्गीकृतः । दृढशब्दस्य स्त्रीत्वविवक्षायां भक्तिशब्दस्य प्रियादिपाठेन पुंवद्भावप्रतिषेधात् दृढाभक्तीति भाव्यम् । इह तु भजनस्य दार्ढ्यमात्रं विवक्षितं न स्त्रीत्वमिति साधुता । यथाऽऽह न्यासकारोऽमुमेव शब्दमधिकृत्य 'दृढशब्दे लिङ्गविशेषस्यानुपकारकत्वात् स्त्रीत्वमविवक्षितम्, इति । भोजराजस्तु 'भक्तौ कर्मसाधना' इति सूत्रेण कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठात् भावादिभक्तिरित्यादौ पुंवद्भावप्रतिषेधात्, दृढभक्तिरित्यादौ तु भावसाधनत्वात्पुंवद्भाव इत्याह ॥ १०० ॥

देशकालगणनातिलङ्घिभिः
मातुमागमगणेन वाञ्छितैः ।
भूषितो गुणविभूतिसागरैः
त्वत्समस्त्वमितरे मिथस्समाः ॥ १०१ ॥

**देशेति**—देशेन कालेन च गणना देशकालपरिच्छेदः, देशकालौ गणना सङ्ख्या चेति वा, तदतिलङ्घिभिः आगमगणेन श्रुतिबृन्देन मातुं परिच्छेत्तुं वाञ्छितैः, न तु परिच्छिन्नैरिति भावः, गुणाः ज्ञानशक्त्यादयः, विभूतयो नित्यानित्यभेदभिन्नाः, सागरा इवापरिच्छेद्यत्वात् तैर्भूषितः, त्वं त्वत्समः तव तुल्यः, इतरे तु मिथस्समाः । इतरेषां समत्वविचारः क्रियते चेत् परस्परमेव, न त्वयेत्यर्थः ॥ १०१ ॥

का कथा तव समेऽधिकेऽपि वा
हीन इत्यपि क एव गण्यते ।
मेरुसर्षपनिदर्शनं च ते
मा स्म भूत्त्वादितरस्य चात्मनः ॥ १०२ ॥

**का कथेति**— तव समेऽधिके वा पुरुषे का कथा तव समोऽधिकश्च पुरुषो न सम्भवतीति किं वक्तव्यमित्यर्थः । हीन इत्यपि क एव गण्यते, एवकारः इवकारवद्वाक्यालङ्कारार्थः, त्वदपेक्षया हीन इत्यपि को गण्यते, त्वत्प्रतियोगिकं हीनत्वगणनमपि नार्हति, किञ्चित्प्रसक्तसाम्य एव [1]हीनताया विधेयत्वात् । इतरेषां च त्वत्तोऽतिनिकृष्टत्वादिति भावः । अतिनिकृष्टत्वमेवाह—मेरुसर्षपनिदर्शनं च मेरुसर्षपौ तुल्याविति दृष्टान्तोऽपि मा स्म भूत् । तदपि न युक्तमित्यर्थः ॥ १०२ ॥

---

[1] हीनतया—ग. घ. ज.

भूतभव्यभवदात्मनः प्रभो !
यन्निदानमखिलस्य शाश्वतम् ।
यत्प्रविश्य न पुनर्निवर्तते
यत्परं पदमुशन्ति तद्भवान् ॥ १०३ ॥

भूतेति—हे प्रभो ! भूतभव्यभवदात्मनः भूतभविष्यद्वर्तमानरूपस्य अखिलस्य विश्वस्य यच्छाश्वतं निदानं, यत्प्रविश्य पुनर्न निवर्तते जनः, यत् परं पदमुशन्ति यत् सर्वोत्कृष्टं प्राप्यमिच्छन्ति, "सोऽध्वनः पारमाप्नोति" "तद्विष्णोः परमं पदं" इत्यादिश्रुत्यभिज्ञाः, तद्भवान् तत् परं ब्रह्म त्वमेव ॥ १०३ ॥

जातिवर्णरचनाविचित्रितं
[1] विश्वचित्रमुदमीलयद्भवान् ।
[2] आत्मभित्तिनियतस्थिराश्रयः
तूलिकां त्रिगुणलक्षणां वहन् ॥ १०४ ॥

जातीति—हे प्रभो ! भवान् त्रिगुणलक्षणां त्रयो गुणास्सत्वादयो लक्षणं स्वरूपं यस्यास्तां तूलिकां कूर्चिकां वहन् सन् आत्मा त्वत्स्वरूपमेव भित्तिः, सैव नियतः स्थिरः आश्रयो यस्य स तथोक्तः, जातयः मनुष्यत्वगोत्वादयः, वर्णाः ब्राह्मणादयः, जातय एव वर्णाः नीलपीतादय इति रूपकं वा, तेषां रचनाभिर्विचित्रितं विश्वं जगदेव चित्रं उदमीलयत् उन्मीलितवान् । भवच्छब्दयोगेन युष्मदुपपदाभावात् '[3] शेषे प्रथमः' (पा. सू. १-४-१०८) इति प्रथमपुरुषः ॥ १०४ ॥

---

[1] द्वितीयतुरीयपादयोर्विनिमयः ज. म. दे. मु.–कोशेषु. [2] 'आत्मभित्तिनियताश्रयं प्रभो–ज. म. दे. मु. [3] शेषप्रथमपुरुषः–ग. ज.

अप्रयच्छति दुरत्ययक्रमे
त्वय्यशेषजगदेकधातरि ।
इष्टमन्यदुभयं च मिश्रितं
कस्य केन किमिवोपपद्यते ॥ १०५ ॥

अप्रयच्छतीति—दुरत्ययक्रमे दुर्लङ्घशक्तिके "क्रमश्शक्तौ परीपाट्याम्" इति विश्वः, अशेषजगदेकधातरि [1] सर्वेषां जगतामन्यनिरपेक्षे धारके त्वयि, इष्टं सुखं, अन्यत् अनिष्टं दुःखं, मिश्रितं परस्परसम्भिन्नं उभयं सुखं दुःखं च, अप्रच्छति सति, कस्य पुरुषस्य केनोपायेन किमिवोपपद्यते ? किं सम्पद्यते । सुखदुःख[2]संभेदेषु त्वया अदत्तं किमपि कस्यापि केनापि हेतुना न सम्भवतीत्यर्थः ॥ १०५॥

आयतन्त भुवनान्यशेषत-
स्त्वय्यतस्त्वमनुपाधिरीश्वरः ।
वर्धनीयविभवा वयं [3] पुनः
त्वत्प्रदिष्टपुरपत्तनेश्वराः ॥ १०६ ॥

आयतन्तेति—अशेषतः अशेषाणि भुवनानि त्वयि विषये आयतन्त अधीनान्यभवन् । अतो हेतोः त्वं अनुपाधिः विशेषणरहित ईश्वरः। परिच्छिन्नैश्वर्या हि क्षितीश्वरदिगीश्वरादयः क्षित्यादिभिर्विशेष्यन्ते । त्वं त्वपरिच्छिन्नैश्वर्य इत्यविशेषणीय ईश्वर इत्यर्थः । "उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे" इति विश्वः । वर्धनीयविभवाः त्वत्प्रसादोपचयैश्वर्या वयं तु त्वत्प्रदिष्टानां त्वया दत्तानां पुराणां पत्तनानां च ईश्वराः । पुरं नगरमात्रं, पत्तनं राजधानीत् युक्तामिति भेदमाहुः। अशेषत इत्या[4]द्यादित्वात्तसिः । [5]केचित् 'इतराभ्योऽपि दृश्यन्ते' (पा. सू. ५-३-१४) इति दृशिग्रहणात्तसिलित्याहुः ॥ १०६ ॥

---

[1] सर्वेषामन्य–घ. [2] सम्बन्धेषु–घ. [3] त्वत्प्रतिष्ठपुर–ग्र. दे. मु.
[4] 'आद्यादिभ्य उपसङ्ख्यानम्' (वा. ३३३९) इति वार्तिकेनेति भावः.
[5] 'दृशिग्रहणाद्भवदादियोग एव' (वा. ३२४४) इति वार्तिकेन भवदादियोग एव तसिलोऽभ्यनुज्ञानात् भवदीर्घायुरायुष्मद्देवानांप्रियशब्दानामिव भवदादित्वपरिगणनेन तद्योगस्यात्रादर्शनेन तसित् दुर्लभ इति केचिदित्यनेनास्वरसस्सूचितः

**जन्मकर्मभिरसौ निबध्यते**
**तानि यस्तव न वेत्ति तत्त्वतः।**
**त्वत्कथामृतरसं पिबन्ति ये**
**ते भवेयुरपुनस्स्तनन्धयाः ॥ १०७॥**

**जन्मेति**—असौ जन्मभिः कर्मभिश्च निबध्यते। क इत्याकाङ्क्षायामाह—तानीति। यस्तव तानि जन्मकर्माणि तत्त्वतः परमार्थरूपेण, जन्मानि लोकानुग्रहार्थमिच्छावताररूपाणि, कर्माण्यपि लोकसङ्ग्रहार्थानीति, शास्त्रसिद्धेन प्रकारेण न वेत्ति। यस्त्वेवं वेत्ति, स तैर्न निबध्यत इत्यर्थादुक्तं भवति। अत एवोक्तं गीतासु—

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥

इति। किञ्च ये त्वत्कथामेव अमृतरसं अमृतरूपमास्वाद्य पिबन्ति ते अपुनस्स्तनन्धयाः—स्तनन्धयाश्शिशवः, "नासिकास्तनयोर्ध्माधेटोः" (पा. सू. ३-२-२९) इति खश्, [1]मुमागमश्च, पुनरप्यागामिजन्मनि स्तनन्धयाः, सुप्सुपेति समासः, अतथाभूताः पुनर्जन्मरहिता भवेयुरित्यर्थः ॥१०७॥

**कथ्यते चिदचिदन्तरात्मनः**
**शास्त्रशुद्धहृदयैर्मनीषिभिः।**
**सृष्टिसंहरणरक्षणेषु ते**
**विश्वरूप ननु कर्मकर्तृता ॥ १०८ ॥**

**कथ्यत इति**—हे विश्वरूप! कृत्स्नशरीरक! शास्त्रैः शुद्धानि हृदयानि येषां तैः मनीषिभिः विद्वद्भिः चिदचिदन्तरात्मनः चेतना-

---

1 'अरुर्द्विषदजन्तस्य मुम्' (पा. सू. ६-३-६७) इति सूत्रेण मुमागम इति भावः.

चेतनात्मकसकलप्रपञ्चान्तर्यामिणः सृष्टिसंहरणरक्षणेषु कर्मकर्तृता कर्मत्वं कर्तृत्वं च कथ्यते, "तदात्मानᳶस्वयमकुरुत" (तै. उ.) इत्यादौ तस्यैव कर्मत्वेन कर्तृत्वेन च श्रवणादिति भावः। सृष्ट्याद्यनुकूलज्ञानशक्त्यादियोगेन सृष्ट्यादिकर्तुरपि प्रपञ्च[1]शरीरकतया तद्विशिष्टरूपेण [2]सृष्ट्यादिकर्मत्वं युक्तमिति दर्शयितुं सर्वान्तर्यामित्वमुक्तम् ॥ १०८ ॥

**आकुमारमनुभावमीदृशं**
**नाथ विश्वविदितं तव क्षिपन्।**
**हन्त नूनमहिमांशुमण्डलं**
**तस्करस्तमसि गोप्तुमिच्छति ॥ १०९ ॥**

**आकुमारमिति**—हे नाथ आकुमारं बालपर्यन्तं लोके विदितं प्रसिद्धं ईदृशं परिदृश्यमानवियदादिप्रकारं तव अनुभावं महिमानं क्षिपन् निरस्यन् तस्करः चोरः,

योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

(म. भा. उद्योग. ४२, ३५)

इत्यन्यथात्मवेदी [3]चोर उक्तः, तमसि अन्धकारे अहिमांशुमण्डलं सूर्यबिम्बं गोप्तुमिच्छति। नूनमित्युक्तार्थनिश्चये। तादृशस्य दुर्गतिमन्वीक्ष्य विषादे हन्तशब्दः। [4]त्वन्महिमापलापश्च तमसि सूर्यमण्डलतिरोधानेच्छावदसम्भविविषय इत्यर्थः ॥ १०९ ॥

---

[1] शरीरतया—ग. [2] सृष्ट्यादिकर्तृत्वं—घ. [3] चोरः, तमस्य—क. घ.
[4] अत्र 'त्वन्महिमापलापेच्छा तमसि सूर्यमण्डलतिरोधानेच्छावदसंभविविषयेत्यर्थः' इति पाठेन भाव्यमिति भाति.

पक्षपातपरिहारशुद्धया
पश्यति प्रणिदधानया धिया ।
यत्पृषन्ति निगमाः स्पृशन्ति तं
त्वत्प्रभावमनपायमात्मवान् ॥ ११० ॥

पक्षापातेति—निगमाः वेदाः यत्पृषन्ति यस्य बिन्दून् बिन्दुकल्पानेकदेशान् स्पृशन्ति उपरिप्लवतया प्रतिपादयन्ति, न तु बिन्दुमात्रमपि प्रविश्य यथावत्प्रतिपादयितुं शक्नुवन्तीति भावः, तं अनपायं त्वत्प्रभावं आत्मवान् प्रशस्तबुद्धिः "आत्मा यत्नो धृतिर्बुद्धिः" इत्यमरः, प्रशंसायां मतुप् , पक्षपातपरिहारशुद्धया मतान्तराभिनिवेशत्यागेन प्रसन्नया प्रणिदधानया समाधानवत्या धिया पश्यति । पक्षपातानवधानकलुषहृदयास्तु द्रष्टुं न प्रभवन्तीति भावः ॥ ११० ॥

मानुषत्वमनुगच्छता त्वया
मोहितैस्त्वमवधीर्यसे जनैः ।
तेन नस्त्रिगुणतन्त्रचेतसा-
मागतेयमसमीक्ष्यकारिता ॥ १११ ॥

मानुषत्वमिति—मानुषत्वमनुगच्छता मानुषभावमनुसरता त्वया मोहितैर्जनैः त्वं अवधीर्यसे अवमन्यसे । तेन हेतुना त्रिगुणतन्त्रचेतसां सत्वादिगुणत्रयपरतन्त्रबुद्धितया जनान्तराविशिष्टानां नः अस्माकं देवानां इयमसमीक्ष्यकारिता अविमृश्यकर्तृता आगता प्राप्ता ॥ १११ ॥

शर्वरीदिवसव[1]द्विघूर्णयन्
स्वापजागरदशा विधेरपि ।
किं पुनस्तादितरस्य तन्मया
मोहबोधविवशेन भूयते ॥ ११२ ॥

---

[1] अ. दे.—मुद्रितकोशेऽत्र 'विघूर्णते' इति पाठो दृश्यते । तत्रोत्तरत्र स्वापजागरदशेत्यस्य प्रथमैकवचनान्तता बोध्या । ततश्च त्वामिति शेषपूरणक्लेशोऽपि न भवति

शर्वरीति—विधेः ब्रह्मणोऽपि शर्वरीदिवसवत् निशादिनैस्तुल्यं यथा तथा स्वापजागरदशाः मोहबोधावस्थाः विघूर्णयन् भ्रमयन् पुनरावर्तयन्निति यावत्, त्वामिति शेषः, तदितरस्य किं पुनः विधीतरस्य मोहबोधावस्थाः विघूर्णयसीति किमु वक्तव्यमित्यर्थः। तत्तस्मान्मया मोहबोधविवशेन कदाचित् मोहेन कदाचिद्बोधेन च परवशेन भूयते ॥ ११२ ॥

योऽसि सोऽसि च यथा तथाऽसि च
त्वां त्वमेव खलु वेत्सि वा न वा।
तस्य ते न खलु तत्त्ववेदिनो
वारिधेरिव वयं तटस्थिताः॥ ११३ ॥

योऽसीति—योऽसि तत्त्वतस्त्वयं यत्स्वरूपोऽसि, सोऽसि च तत्स्वरूपोऽसि च। यथा—असीत्यनुषङ्गः, यत्प्रकारकोऽसि तथा तत्प्रकारकोऽसि च। त्वां त्वमेव खलु वेत्सि वा न वा, तत्रापि सन्देह इत्यर्थः। "यो अस्याध्यक्षः परमे व्योमन्, सो अङ्ग वेद यदि वा न वेद" इति हि श्रुतिः, तस्य एवमपरिच्छेद्यस्वरूपानुभावस्य ते वारिधेः समुद्रस्येव तटस्थाः उदासीनाः कूलगताश्च वयं न खलु तत्त्ववेदिनः तत्त्वज्ञा न भवामः। तटस्थिताः समुद्रस्य गाम्भीर्यमिव तत्त्वविचारबहिर्भूता वयं त्वत्तत्वं न जानीमह इत्यर्थः ॥ ११३ ॥

त्वत्प्रतीपचरणाद्दिवौकसां
दानवायितवतां त्वयाऽधुना।
स्थान एव परिभूतिराहिता
नासुरो न च सुरो गुणान्तरे॥ ११४ ॥

त्वत्प्रतीपेति—त्वत्प्रतीपचरणात् तव प्रतिकूलस्याचरणात्

दानवायितवतां असुरवदाचरितवतां दिवौकसां अधुना त्वया आहिता कृता परिभूतिः परिभवः स्थान एव युक्तैव । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । ननु तथापि देवानां दैवतं विष्णुः, तस्य कथं स्वाश्रितपरिभवो युक्त इत्यत आह—नासुर इति । गुणान्तरे गुणभेदे सति नासुरो न च सुरः सुरासुरविशेषो नास्तीत्यर्थः । गुणविकारे सत्यसुरवत्सुरा अपि शास्या एवेति भावः ॥ ११४ ॥

**अर्चनीयचरणाम्बुजे भव-**
**त्याततायिपदवीमुपेयुषाम् ।**
**न्यस्तशस्त्रपरिकर्मणामसौ**
**निष्कृतिस्त्वदुपसत्तिरेव नः ॥ ११५ ॥**

अर्चनीयेति—अर्चनीयचरणाम्बुजे भवति त्वयि आततायिनो गृहीतशस्त्राः तेषां पदवीं सरणिं उपेयुषां प्राप्तवतां न्यस्तशस्त्रपरिकर्मणां त्वत्कृतशिक्षानन्तरं त्यक्तान्यायुधान्येव प्रसाधनानि यैस्तेषां नः अस्माकं असौ त्वदुपसत्तिः त्वत्सम्बन्धिनी प्रपत्तिरेव निष्कृतिः प्रायश्चित्तिः' त्वदुपसत्तिरिति सम्बन्धसामान्ये षष्ठीसमासः । 'उभयप्राप्तौ कर्मणि । (पा. सू. २-३-६६) इति षष्ठ्याः 'कर्मणि च' (पा. सू. २-२-१४) इति समासनिषेधात् ॥ ११५ ॥

नन्वपराधिभिः केनचिदुपायेनेन क्षमयितव्यः प्रभुः, न तु शरणागतिमात्रेणेत्याशङ्क्य देवस्यावाप्तसकलकामतयाऽत्रानादरमाह—

**किं तदस्ति कुशलेषु यन्न ते**
**तच्च किं त्वदितरेषु यत्तव ।**
**ईदृशस्य भवतः किमीदृशा**
**तस्थुषा [1] त्रियुग जग्मुषाऽपि वा ॥ ११६ ॥**

किं तदिति—कुशलेषु मङ्गलेषु यत्ते नास्ति तत्किमस्ति, सर्व-

---

[1] त्रियुगेति कृष्णस्य संबोधनम् । ज्ञानशक्त्यादिगुणयुगलत्रयशालिन्निति तस्यार्थो बोध्यः.

मङ्गलनिदाने त्वयि अविद्यमानं मङ्गलमन्यत्र क्वापि नास्तीत्यर्थः। "कुशलं निपुणे पुण्ये पर्याप्ते मङ्गले क्षेमे" इति वैजयन्ती, यत्तव यन्मङ्गलं तवास्ति तच्च त्वदितरेषु किमप्यस्ति, तादृशमेकमप्यन्येषु नास्तीत्यर्थः । ईदृशस्य इत्थमनन्यसाधारणनिखिल[1]मङ्गलास्पदस्य भवतः ईदृशा परिदृश्यमानदैन्यास्पदेन तस्थुषा स्थावरेण जग्मुषा [2]जङ्गमेनापि वा किं, तेन किमपि साध्यं नास्तीत्यर्थः ॥ ११६ ॥

अल्पसत्वमवलेपयन्त्रितं
बल्बजेषु बहुमान[3]शालिनम् ।
त्वत्कृपैकपरिहार्यविप्लवं
प्रत्यवेक्षणपदं प्रतीहि माम् ॥ ११७ ॥

अल्पसत्वमिति—अल्पसत्वं अल्पबलं अवलेपयन्त्रितं गर्वग्रस्तं, बल्बजेषु बल्बजास्तृणविशेषाः, "उलपा बल्बजाः प्रोक्ताः" इति हलायुधः, तथा असारेषु ऐश्वर्येषु बहुमानशालिनं बहुमानं शालन्तं गच्छन्तं मां त्वत्कृपया एकया परिहार्यविप्लवं परिहरणीयावलेपाद्युपद्रवं, एकशब्दसमासानन्तरं कृपाशब्दस्य शिवभागवतवत् समासः, अत एवानन्यगतिकत्वात् प्रत्यवेक्षणपदं व्यावृत्यावलोकनस्य विषयं प्रतीहि जानीहि ॥ ११७ ॥

मृष्यतां मम विभो व्यतिक्रमः
प्रस्मृतत्वदुपकारपद्धतेः ।
[4]रुद्रकोपविवशस्य देहिनः
कस्य नाम न भवत्यपक्रिया ॥ ११८ ॥

मृष्यतामिति—हे विभो प्रस्मृतत्वदुपकारपद्धतेः अविस्मृतत्व-

---

[1] मङ्गलात्मकस्य–घ. [2] जङ्गमेनापि च किं–घ. [3] शालिनाम् -झ.
[4] क्षुद्रकोप–ग्र. दे.–मु.

त्कृतोपकारस्मरणे: मम व्यतिक्रमः [1] अपचारः मृष्यतां सह्यताम् । रुद्रकोपेन विवशस्य क्षुभितबुद्धेः कस्य नाम देहिनः अपक्रिया अपचारः न भवति । तमोऽभिभवे सति सर्वोऽपि कदाचित् अपचरेदित्यर्थः ॥ ११८ ॥

त्रातुमेव शरणागतान् [2] सुरा-
नासुरानभिजिघांसता त्वया ।
रागरोषरहितात्मना स्वयं
दैत्यशत्रुरिति नाम गृह्यते ॥ ११९ ॥

त्रातुमिति—शरणागतान् सुरान् त्रातुमेव असुरा एव आसुराः, प्रज्ञादिपाठात् स्वार्थेऽण्प्रत्ययः, तान् अभिजिघांसता अभिहन्तुमिच्छता स्वयं रागरोषरहितात्मना त्वया दैत्यशत्रुरिति नाम गृह्यते । स्वतः क्वापि रागद्वेषरहितोऽपि शरणागतानस्मान् रक्षितुमेव दैत्यानभिजिघांसन् तेषां शत्रुरिति नाम गृह्णासीति प्रतिबुद्धस्येन्द्रस्य तदुपकारानुस्मृतिः ॥ ११९ ॥

त्वद्गृहीतगुणसूत्रसन्दितान्
दारुपुत्रनयतः प्रवर्तिनः ।
निर्गुणानपि निसर्गकिङ्करान्
स्वीकुरुष्व कृपया स्वयैव नः ॥ १२० ॥

त्वद्गृहीतेति—त्वया गृहीतैः तव वशंवदैः गुणैः सत्वादिभिरेव सूत्रैः सन्दितान् बद्धान्, "बद्धे सन्दानितं मूतमुद्दितं सन्दितं सितम्" इत्यमरः, अतएव दारुपुत्रनयतः दारुप्रतिमान्यायेन

---

[1] अपराधः–अ. [2] सुरानासुरानपि जिघांसता–अ. द. मु.

प्रवर्तिनः अवश्यमनिच्छायामपि प्रवर्तमानान्, [1] आवश्यकार्थे णिनिः, निर्गुणानपि सत्त्वकार्यताप्रयोजकगुणरहितानपि निसर्गकिङ्करान् नः अस्मान् स्वया आत्मीयया कृपयैव स्वीकुरुष्व। अस्मदाजानभृत्या इति त्वत्कृपाव्यतीरेकेण स्वीकारकारणमस्मासु किमपि नास्तीत्यर्थः ॥ १२१ ॥

वासवस्य वचनं निशम्य त-
द्भावशुद्धिपरिकर्मिताक्षरम्।
दीनगुप्तिजननीं पुनर्दया-
मन्वविन्ददरविन्दलोचनः ॥ १२१ ॥

वासवस्येति—अरविन्दलोचनः कृष्णः भावशुद्ध्या अन्तःकरणस्य आर्जवेन परिकर्मितानि सञ्जातप्रसाधनान्यक्षराणि यस्य तत्तथोक्तं वासवस्य तद्वचनं निशम्य दीनानां गुप्तेः रक्षायाः जननीं दयां पुनरन्वविन्दत् अलभत ॥ १२१ ॥

उद्धृतं च विभुना सुदर्शनं
त्राणदं त्रिदिवसद्मनामभूत्।
तस्य दृप्तदमनेन दीव्यतः
शिक्षणैकनियतं हि शासनम् ॥ १२२ ॥

उद्धृतमिति—विभुना उद्धृतं सुदर्शनं च त्रिदिवसद्मनां देवानां त्राणदं रक्षाप्रदमभूत्। जिघांसयोद्धृतं कथं निवृत्तं तत्राह-तस्येति। दृप्तदमनेन दृप्तानां दान्त्यापादनेन [2] दीव्यतः क्रीडतः तस्य कृष्णस्य शासनं शिक्षणैकनियतं हि शिक्षणे एकस्मिन्नभिरतं हि, न तु हिंसाप्रवणमिति भावः ॥ १२२ ॥

---

[1] 'आवश्यकाधमर्ण्ययोर्णिनिः' (पा. सू. ३-३-१७०) इति सूत्रेणेति भावः.

[2] शान्त्यापादनेन घ.

आह चैनमनघेन चक्षुषा
शोधयन्नमृतसिन्धुशोभिना ।
स्वादुसूनृतगभीरया गिरा
पारितोषिकमिवार्पयन् प्रभुः ॥ १२३ ॥

**आहेति**—अमृतसिन्धुशोभिना प्रसादादमृताम्बुधिवच्छोभमानेन अनघेन रम्येण चक्षुषा शोधयन् अवलोकनेनेन्द्रं निरस्तसकलदोषं कुर्वन् प्रभुः स्वाद्व्या श्रवणमधुरया सूनृतया प्रियसत्यरूपया गभीरया अर्थगौरवादियुक्तया च गिरा पारितोषिकं उचितभाषिणि इन्द्रे तत्परितोषप्रयोजनकं वस्त्राभरणादिकमर्पयन्निव, तदर्पणेनेव हर्षं कुर्वन्निति यावत्, आह उवाच। आहेति उवाचार्थे निपात इति न स्मशब्दापेक्षा। चकारोऽव्यवहितपूर्वश्लोकोक्तदयासिक्तियासमुच्चयार्थः ॥ १२३ ॥

भद्रमस्तु भवते दिवस्पते !
निर्जराश्च निरपायमासताम् ।
आत्मचौर्यदुरिताकरत्यजां
माऽपहार्षुरसुराः पदानि वः ॥ १२४ ॥

**भद्रमिति**—हे दिवस्पते! दिवस्स्वर्गस्य पते 'तत्पुरुषे कृति बहुलम्' (पा. सू. ६–३–१४) इत्यलुक् [1] कस्कादित्वाद्विसर्जनीयस्य सः, भवते तुभ्यं भद्रमस्तु मङ्गलं भूयात्। "चतुर्थी चाशिष्यायुष्य" (पा. सू. २–३–७३) इत्यादिना भद्रयोगे चतुर्थी। निर्जराः देवाश्च निरपायं विपद्रहितं आसताम्। उभयत्राशिषि लोट्। आत्मचौर्यमात्मन्यन्यथाप्रतिपत्तिः, [2] तदेव दुरिताकरः सर्वपापसङ्घः—

योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

---

[1] 'कस्कादिभ्यश्च '(पा. सू. ८-३-४८) इति सूत्रेणेति भावः । [2] तदेव चौर्यमेव—अ.

इति स्मृतेः, तस्यजां तं त्यक्तवतां प्रतिबुद्धानां वः युष्माकं पदानि स्थानानि असुराः माऽपहार्षुः अपहर्तुं न प्रभवेयुरित्यर्थः। यदि तु सर्वेषामात्मभूते मयि इत्थं भवतामन्यथाप्रतिपत्तिरनुवर्तेत [1]तर्हि भवत्पदान्यसुरा अपि हरेयुरिति तात्पर्यम्। 'यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा ते पराभविष्यन्ति' इति हि छान्दोग्ये (छा. ८-८-४) देवासुरेष्वात्मज्ञानां तदितरपराभवितृत्वमुक्तम्। अतस्तदभावे तत्प्रबलैरसुरैर्देवानां पराभवस्स्यादिति ॥ १२४ ॥

मा स्म भैष्ट मयि गोप्तरि स्थिते
भावितानि [1]भवुकानि सन्तु वः।
वीतदानवपराभवाश्चिरं
त्रातुमर्हथ सुरास्त्रिविष्टपम् ॥ १२५ ॥

मा स्मेति—हे सुराः! गोप्तरि रक्षके मयि स्थिते यूयं मा स्म भैष्ट। मया रक्ष्यमाणानां कुतो भयं भवेदिति भावः। 'स्मोत्तरे लङ् च' (पा. सू. ३-३-१७६) इति चकाराल्लुङ्। वः युष्माकं भवुकानि मङ्गलानि, "भावुकं [2]भवुकं भव्यम्" इति मङ्गलपर्यायेष्वमरः। भवो वाञ्छितप्रवृत्तिरत्रास्तीति ठन्प्रत्ययः। भावितानि प्राप्तानि सन्तु। भवतेः प्राप्त्यर्थे ण्यन्तात्क्तः। किञ्च वीतदानवपराभवाः सन्तः स्वर्गं त्रातुमर्हथ ॥ १२५ ॥

मन्त्रपूतमनुपप्लवं हवि-
र्यायजूकपरिषन्निषेवितम्।
अन्तरात्मनि निविष्टमन्तरा
विन्दत स्थिरसुधारसान्तरम् ॥ १२६ ॥

मन्त्रपूतमिति—मन्त्रैः पूतं पवित्रं यायजूकानां यज्वनां

---

[1] तदा—ञ. [2] 'भविकं' इत्येव सुधादिटीकाकृत्संमतः पाठः। अत एवात्राप्युत्तरत्र भवशब्दात् ठन्प्रत्यय एवोक्तः। अतोऽत्र भवुकमिति पाठो भावुकमिति कोशगतपूर्वशब्दपाठवासनावेगाधीनलेखकप्रमादायात इति भाति.

परिषदा गोष्ठ्या निषेवितं निषेवणरूपं, भावे क्तः, अन्तरात्मनि निविष्टं प्रतिष्ठितं, अन्तर्यामिणः सर्वहविर्भोक्तृतया परमोद्देश्यत्वात् तत्पर्यन्तं स्थिरसुधारसान्तरं स्थायिसुधारसविशेषरूपं हविः चरुपुरोडाशसांनाय्यादिकं अन्तरा मध्ये अनुपप्लवं निरुपद्रवं यथा तथा विन्दत प्राप्नुत। यज्ञोपद्रवकारिणां नरकादीनां निग्रहादिति भावः। सुधैव रस्यते आस्वाद्यत इति रसः, अन्यस्सुधारसः सुधारसान्तरम्। सुप्सुपति समासः। तत्तद्देवशरीरकान्तरात्मपर्यन्तानामपि हविषां श्राद्धभोक्तृब्राह्मणन्यायेन ते ते देवा अपि मध्ये भोक्तार इति शास्त्रमर्यादाऽनेन दर्शिता ॥ १२६ ॥

जन्मतोऽपि भवतां महीयसा-
माप्तबन्धुरदितेरहं [1] सुतः।
देवकीतनयभावतोऽपि मे
सैव सम्प्रति सहोदरत्वधीः ॥ १२७ ॥

**जन्मतोऽपीति**—जन्मतो महीयसां जन्मना ज्यायसां भवतां अदितेस्सुतोऽहं आप्तबन्धुः प्रत्यासन्नबन्धुः अनुजत्वादिति भावः, सम्प्रति इदानीं देवकीतनयभावतोऽपि देवकीतनयत्वादपि मे मम सैव सहोदरत्वधीः उपेन्द्रावतारे जातेति भावः। देवक्या अप्यदित्यंशत्वादिति हृदयम् ॥ १२७ ॥

आयुधानि पुनरक्षतानि वः
सन्तु सत्वमपि दैत्यसूदनम्।
पालयन्तु बलिनो [2] जगत्त्रयीं
ते भवन्त उपपन्नपौरुषाः ॥ १२८ ॥

**आयुधानीति**—वः आयुधानि पुनरक्षतानि सन्तु पुनरपि

---

[1] सुराः-म्र. दे. मु. [2] जगत्त्रयं-घ ङ्ग.

यथापूर्वं क्षतरहितानि सन्तु । सत्वं युष्मद्बलमपि दैत्यसूदनं दैत्यानां हिंसकं अस्त्विति वचनविपरिणामेनानुषङ्गः । सूदनमिति [1] नन्द्यादित्वाल्ल्युः । बलिनः बलवन्तः ते प्रसिद्धाः भवन्तः उपपन्नपौरुषाः सम्पन्नपराक्रमास्सन्तः जगत्त्रयीं [2] पालयन्तु ॥ १२८ ॥

इत्यनाविलमनोज्ञया गिरा
निर्मलां निजदयामिवोद्वमन् ।
सौम्यदृष्टिरकरोत्सुधाभुजः
पर्यवस्थितधृतीन् परः पुमान् ॥ १२९ ॥

इतीति—इति उक्तप्रकारेण अनाविलमनोज्ञया प्रसन्नरुचिरया गिरा निजदयामुद्वमन्निव स्थितः सौम्यदृष्टिः [3]दयासान्द्रावलोकनः परः पुमान् सुधाभुजः देवान् पर्यवस्थितधृतीन् पुनरपि प्रतिष्ठितधैर्यानकरोत् ॥ १२९ ॥

ते च तेन गरुडं नियच्छता
गम्यतामिति गभीरमीरिताः ।
अग्रजातवदनन्यवत्सले
प्रश्रितास्सुमनसः प्रतस्थिरे ॥ १३० ॥

ते चेति—गरुडं नियच्छता द्वारकापुरं गन्तुमुद्युक्तं [4]गरुडमेषां प्रेषणाय स्थापयता तेन कृष्णेन गम्यतामिति गभीरंईरिताः उक्ताः अनन्यवत्सले एकान्तभक्तेषु वात्सल्यवति कृष्णे विषये प्रश्रिताः विनीताः ते सुमनसः देवाश्च अग्रजातवत् अग्रजातैस्तुल्याः पुनर्जातानिवात्मनो मन्यमानास्सन्तः प्रतस्थिरे ॥ १३० ॥

---

[1] नन्द्यादित्वादिति । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (पा. सू. ३-१-१३४) इति सूत्रेणेति भावः. [2] पालयन्तु, लोट्—ग. [3] दयनीयावलोकनः—घ. [4] गरुडं तेषाम्—अ.

गृह्यतां तरुरसाविति स्वयं
भामया भगवता च भाषिते।
आगमिष्यति पुनस्त्वया सहे-
त्याह दानवरिपुं दिवस्पतिः ॥ १३१ ॥

**गृह्यतामिति**—असौ तरुः पारिजातः गृह्यतामिति भामया सत्यभामया, नामैकदेशे नामग्रहणम्, भगवता कृष्णेन च स्वयं भाषिते स्वयमेवोक्ते सति दिवस्पतिः इन्द्रः त्वया सह पुनरागमिष्यतीति दानवरिपुं कृष्णं आह। इदानीं नेतव्यः, कालान्तरे त्वय्यागच्छति सहानेतव्य इत्युवाचेत्यर्थः। आहेत्यव्ययमुवाचार्थे ॥ १३१ ॥

शान्तगर्वगरले दिवस्पतौ
सन्निवेश्य सुरलोकसम्पदम्।
आप्तुमैच्छदनुजीविरक्षितां
स्वां पुरीमथ सुपर्णवाहनः ॥ १३२ ॥

**शान्तेति**—अथ सुपर्णवाहनः हरिः गर्वो गरलमिव गर्वगरलं शान्तं गर्वगरलं यस्य तस्मिन् शतक्रतौ सुरलोकसम्पदं निवेश्य अनुजीविभिः अमात्यादिभिः रक्षितां स्वां पुरीमाप्तुमैच्छत् ॥ १३२ ॥

आत्माधिकारमनुमत्य दिशापतीनां
वज्रं प्रदिश्य [1]पुनरप्यनघं मघोने।
दिव्यद्रुमप्रतिगतिं [2]च पुनर्विधास्यन्
दत्ताभयो दनुजशत्रुरवाप तुष्टिम् ॥ १३३ ॥

**आत्मेति**—दिशापतीनां लोकपालानां आत्माधिकारमनुमत्य स्वस्वाधिकारे अनुमतिं दत्त्वा मघोने इन्द्राय अनघं वज्रं प्राग्गृहीतं

---

[1] पुनरप्याधिकं—ग.   [2] च परं विधास्यन्—ग.

पुनरपि प्रदिश्य वितीर्य परं दूरे कालान्तरे "परं दूरान्यमुख्येषु" इति यादवः, 'दूरान्तिकार्थेभ्यो द्वितीया च' (पा.सू. २-३-३५) इति द्वितीया, दिव्यद्रुमस्य पारिजातस्य पुनः प्रतिगतिं निवृत्तिं च विधास्यन् करिष्यन् दत्ताभयः इन्द्राय वितीर्णाभयः दनुजशत्रुः कृष्णः तुष्टिमवाप [1]तुतोष, कृतकृत्यतयेति भावः ॥ १३३ ॥

अथ पदविनिकीर्णमन्दारवन्दारुवृन्दारक-
स्तुतिशतबहुमानसत्यापितेहस्स सत्यापतिः ॥
अमरसमरवेगविख्यातदाक्ष्येण ताक्ष्र्येण गां
[2]प्रतिजिगमिषितां पुरीं त्रातुमन्वक् समन्वग्रहीत् ॥ १३४ ॥

अथेति—अथ पदयोर्विनिकीर्णानि मन्दाराणि मन्दारपुष्पाणि यैस्तेषां वन्दारूणां वन्दनशीलानां बृन्दारकाणां देवानां स्तुतिशतबहुमानेन स्तुतिशतरूपेण श्लाघनेन सत्यापिता याथार्थ्येनाख्याता ईहा चरित्रं यस्य स तथोक्तः [3]सत्यायाः पतिः सः कृष्णः अन्वक् पश्चात् देवलोककार्यनिर्वृत्त्यनन्तरं गां त्रातुं भूमिं रक्षितुं पुरीं द्वारकां अमरसमरे देवैस्सह युद्धे यो वेगस्तेन विख्यातदाक्ष्येण प्रथितसामर्थ्येन ताक्ष्र्येण प्रतिजिगमिषितां प्रतिगन्तुमिष्टां समन्वग्रहीत्, प्रतिनिवृत्य गन्तव्येति स्वेच्छाविषयत्वेन [4] अनुगृहीतवान् । वृत्त्यनुप्रासश्शब्दालङ्कारः। सत्यशद्बात् 'सत्याख्याने अर्थवेदसत्यानामापुग्वक्तव्यः' (वा. १७५८) इति आपुकि 'सत्यापपाश' (पा. सू. ३-१-२५) इत्यादिना णिचि कर्मणि क्तप्रत्यये च सति सत्यापितेति रूपम् । निशेति वृत्तस्य नाम । सुषेति केचिदाहुः ॥ १३४ ॥

---

[1] 'तुतोषेति भावः'-(ग.) [2] प्रतिजिगमिषता पुरी-ग्र. दे. मु. [3] सत्या पतिः-घ. [4] अनुगृहीतवानित्यर्थः-ङ. ग. ञ.

पश्यत्यारादनिमिषगणे पारिजातापहारात्
स्रस्ताकल्पामिव यदुपतिस्स्थापयन् स्वर्गलक्ष्मीम् ।
आशापालैरवनतपदस्त्यक्तलज्जैरभीक्ष्णं
[1]रामत्रातां खगपतिरथो राजधानीं प्रतस्थे ॥ १३५ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि महाकाव्ये सप्तदशस्सर्गः.

---

पश्यतीति—आरात् समीपे अनिमिषगणे देवगणे पश्यति सति पश्यन्तं देवगणमनादृत्य पारिजातस्यापहारात् स्वर्गलक्ष्मीं स्रस्ताकल्पां च्युताभरणामिव स्थापयन् वर्तयन् त्यक्तलज्जैः युद्धे निर्जिता वयमिति लज्जां त्यक्तवद्भिः आशापालैः दिक्पालैः अभीक्ष्णं मुहुर्मुहुः अवनतपदः नमस्कृतचरणः खगपतिरथः गरुडवाहनः यदूनां [2]पतिः कृष्णः रामत्रातां बलदेवेन रक्षितां राजधानीं द्वारकां प्रति प्रतस्थे । मन्दाक्रान्तावृत्तमेतत् ॥ १३५ ॥

इति [3]श्रीमद्भरद्वाजकुलतिलक—विश्वजिद्याजि—श्रीरङ्गराजाध्वरिवरसूनुना अप्पयदीक्षितेन विरचिते यादवाभ्युदयव्याख्याने सप्तदशस्सर्गः.

---

[1] रामभ्राता खगपति—प्र. दे. मु. [2] पतिः राम—ग. घ. [3] अत्र 'श्रीमद्राजाधिराज-राजपरमेश्वर - निजभुजबलनिर्जितनिखिलभूमण्डल - पश्चातिरुवडिराय-भजन –हयपतिसप्ताङ्गहरणदेवभूदेवभूमीसहोदर – श्रीमन्महामण्डलेश्वर – श्रीरामराज–चिन्नतिम्मयदेवमहाराजनामाङ्किते' इति ङ—कोशे अधिकपाठो दृश्यते.

## अथाष्टादशस्सर्गः

अथात्मचिन्तानुचरेण यास्यन्
विहङ्गराजेन विभुः पुरीं स्वाम्।
उवाच पत्नीं दशनांशु[1]लक्ष्या-
द्वमन्निवानन्दममान्तमन्तः ॥ १ ॥

अथेति—अथ प्रस्थानानन्तरं आत्मचिन्तानुचरेण आत्मचिन्तायाः अनुचरवद्वेगातिशयाच्चिन्तानन्तरमेव चिन्तितदेशगन्त्रा विहङ्गराजेन स्वां पुरीं यास्यन् प्राप्स्यन् कृष्णः दशनांशुलक्ष्यात् दन्तकिरणव्याजात् अन्तः हृदये अमान्तं आनन्दं पारिजातहरणप्रयुक्तं हर्षं वमन्निव उद्गिरन्निव स्थितस्सन् पत्नीं सत्यां उवाच। लक्ष्मीमिति पाठेऽपि सैवोच्यते, तस्या लक्ष्म्यवतारत्वेनापि प्रसिद्धेः। यथा लक्ष्मीशतके—

उन्मीलितनरकोऽभूदुत्सङ्गे बिभ्रदच्युतो भवतीम्।
[2] तं मन्ये हृदि भजतां नरककथा नः कथं भवेद्देवि॥

इति। अत्र दशनांशुलक्ष्या[3]दित्यपह्नुत्या वमन्नित्युत्प्रेक्षणात् सापह्नवोत्प्रेक्षालङ्कारः ॥ १ ॥

वचनप्रकारमाह—

सत्ये समीक्षस्व विपारिजातां
वृत्तेन हीनामिव वेदविद्याम्।
निशामिव प्रोषितशीतभानुं
नारीमनाथामिव नाकलक्ष्मीम् ॥ २ ॥

सत्य इति—हे सत्ये! विपारिजातां विगतपारिजातां अत एव वृत्तेन हीनां आचाररहितां वेदविद्यामिव, प्रोषितशीतभानुं

---

[1] लक्षाद्वमन्—झ. ञ. [2] अत्र 'तन्मन्ये' इति पाठेन भाव्यमिति भाति। तदित्यस्य च तस्मादित्यर्थोऽत्र बोध्यः. [3] दित्यपह्नुत्या—ग.

अपगतचन्द्रां निशामिव, अनाथां अभर्तृकां नारीमिव च स्थितां [1]तद्वदशोभमानां, नाकलक्ष्मीं त्रिदिवसम्पदं पश्य । "आचारहीनं न पुनन्ति वेदाः" इति स्मृतेर्निष्फलत्वादाचारहीना वेदविद्या न शोभत इति भावः । एकस्यानेकोपमानदानात् मालोपमालङ्कारः ॥ २ ॥

**आलम्बिता नम्रमुखी भवत्या**
**हस्तेन रक्ताङ्गुलिपल्लवेन ।**
**वदान्यवृक्षस्य विभाति शाखा**
**वक्तुं वयस्येव रहः प्रवृत्ता ॥ ३ ॥**

**आलम्बितेति**—भवत्या कर्त्र्या रक्ता अङ्गुलयः पल्लवा इव यस्य तेन हस्तेन करणेन आलम्बिता गृहीता अत एव नम्रमुखी अवनताग्रा वदान्यस्य बहुप्रदस्य वृक्षस्य पारिजातस्य शाखा रहः रहसि वक्तुं प्रवृत्ता मुखमवनम्य कर्णे वक्तुमुद्यता वयस्या स्निग्धेव विभाति । उपमालङ्कारः ॥ ३ ॥

अथ मार्गे दृश्यमानं मेरुं वर्णयति—

**सुपर्णवेगानिलविप्रकीर्णैः**
**सुरद्रुमैरन्तारितस्सुमेरुः ।**
**आलक्ष्यते कालवशेन भूयः**
**[2]प्ररूढलूनैरिव पक्षजालैः ॥ ४ ॥**

**सुपर्णेति** — सुपर्णवेगानिलविप्रकीर्णैः गरुडवेगजनितेन वायुना उत्पाट्य विक्षिप्तैः सुरद्रुमैः अन्तरितः छन्नः सुमेरुः कालवशेन कालायत्ततया भूयः प्ररूढलूनैः भूयः प्ररूढैः तदनन्तरं लूनैः इन्द्रेण

---

[1] तद्वच्छोभमानां—घ. [2] प्रसूतलूनैरिव—घ. प्रलूनरूढैरिव—ग.

कुचैः 'पूर्वकाल' (पा. सू. २-१-४९) इत्यादिना समासः, पक्षाणां जालैः समूहैः अन्तरित इव आलक्ष्यते । उत्प्रेक्षालङ्कारः ॥ ४ ॥

निसर्गकल्याणतया [1] प्रतीतं
सर्वोत्तरं तत्त्वमिवैकमाद्यम् ।
अमुं प्रिये नूनमतन्द्रितानि
ज्योतींषि भक्त्या [2] परियान्त्यजस्रम् ॥ ५ ॥

निसर्गेति--हे प्रिये! निसर्गकल्याणतया स्वभावसुवर्णतया प्रतीतं विख्यातं 'मङ्गलानां च मङ्गलम्' (श्रीविष्णुसहस्रनामोपोद्घाते) इत्यादौ निसर्गमङ्गलतया प्रतीतमित्यपि गम्यते "कल्याणमक्षरे स्वर्णे कल्याणं मङ्गलेऽपि च" इति विश्वः, सर्वोत्तरं सर्वेषां मेरुं परितः स्थितानां देशानामुदीच्यम्, तत्तद्देशसूर्योदयाभिमुखस्य वामभागस्थतया सर्वोत्तरता, तथा चाहुः पौराणिकाः—"सर्वेषामुत्तरो मेरुः" इति, परमव्योमवासितया सर्वेषामुपरि स्थितमित्यपि गम्यते, अत एव आद्यं सर्वकारणतया सर्गाद्यकालवृत्ति एकं मुख्यं तत्त्वं नारायणमिव स्थितं, अमुं मेरुं [3]ज्योतींषि चन्द्रसूर्यादीनि कर्तृणि अतन्द्रितानि असञ्जातालस्यानि, सदा प्रकाशमानानीत्यौपचारिकः प्रकृतार्थः, नूनं भक्त्या अजस्रं परियान्ति प्रदक्षिणीकुर्वन्ति । ज्योतिश्चक्रभ्रमणकृतं ज्योतिषां भ्रमणं भक्तिकृतप्रदक्षिणीकरणतयोत्प्रेक्ष्यते । अत एव हेतूत्प्रेक्षा । भक्तौ निमित्तं श्लेषकृतं भगवत्साद‍ृश्यमिति तस्याः [4] श्लेषानुप्राणितोपमासङ्करः ॥ ५ ॥

---

[1] प्रदीप्तं—ग्र. दे. मु. [2] परियन्त्यजस्रम्—ङ. ग्र. दे. मु. [3] ज्योतींषि नक्षत्रचन्द्र—घ. [4] श्लेषकृतानु—ङ.

वितानवान् व्योमतलेन मेरु-
स्तारागणैराहितमौक्तिकेन ।
निविश्य मध्येक्षितिभद्रपीठं
गङ्गोदकैराद्रियतेऽभिषेकम् ॥ ६ ॥

वितानवानिति—तारागणैः नक्षत्रनिकरैः आहितमौक्तिकेन ग्रथितमुक्ताफलेन व्योमतलेन वितानवान् उल्लोचवान् मेरुः मध्येक्षिति-भद्रपीठं क्षितिरेव भद्रपीठं महाराजाभिषेकपीठं तस्य मध्ये "पारे मध्ये षष्ठ्या वा" (पा. सू. २-१-१८) इत्यव्ययीभावः, निविश्य गङ्गोदकैः उपरि पतद्भिः अभिषेकमाद्रियते बहु[1]मनुते। 'दृङ् आदरे, (तुदादि १४१२) इति धातु[2]र्दैवादिकः। [3]त्रिविक्रमावतारे तच्चरणाग्र-निर्भिन्नोर्ध्वाण्डकटाहरन्ध्रेण बहिर्जलं चतुर्मुखक्षालितचरणोदकसहितं मेरावद्यापि पतति। सा गङ्गेति पुराणप्रक्रिया। तारागणैः व्योम-तलेनेति च [4]प्रकृत्यादितृतीया, तारादेरेव मुक्ताफलत्वादिरूपणे करणत्वाद्यसम्भवात्। तद्रूपणाच्च मेरोर्नृपत्वरूपणं व्यज्यत इत्येकदेश-विवर्तिरूपकालङ्कारः। भद्रपीठलक्षणमुक्तं वास्तुशास्त्रे—

श्लक्ष्णं षडङ्गुलोत्सेधं षोडशाङ्गुलविस्तृतम्।
द्वात्रिंशदङ्गुलायामं क्षीरवृक्षसमुद्भवम्॥
पद्माङ्कितं भवेद्भद्रपीठं स्नपनकर्मणि॥ इति ॥ ६ ॥

---

[1] मन्यते—ग. [2] अत्र 'दैवादिकः' इति लेखकप्रमादाधीनः पाठः. 'तौदादिकः' इति शुद्धपाठेन भाव्यमिति भाति. [3] त्रैविक्रमावतारे—घ.
[4] 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा. १४६६) इति वार्तिकेनेति भावः.

सहस्रभानुप्रमुखैस्समन्ता-
ज्ज्योति[1]र्गणैरस्य विघूर्णमानैः ।
महीभृतामग्रसरस्य मन्ये
नीराजनं विश्वसृजा प्रयुक्तम् ॥ ७ ॥

सहस्रेति—महीभृतामग्रसरस्य पर्वतश्रेष्ठस्य, नृपश्रेष्ठस्येत्यपि गम्यते, अस्य मेरोः विश्वसृजा ब्रह्मणा समन्तात् विघूर्णमानैः परितो भ्रमद्भिः सहस्रभानुप्रमुखैः आदित्यप्रभृतिभिः ज्योतिर्गणैः नीराजनं आरात्रिकमङ्गलं प्रयुक्तमिति मन्ये । राजमूर्धन्यस्य नीराजनमुचितमिति भावः । अत्रादित्यादिषु नीराजनत्वारोपस्य राजोपचारप्रयोगकार्योपयोगात् परिणामालङ्कारः ॥ ७ ॥

प्रख्यातधाम्नामपि दिक्पतीनां
प्रासादवासादरमाक्षिपन्तः ।
अध्यासिता योगिभिरस्य नित्यं
राजन्त्यमी रत्नगुहाविशेषाः ॥ ८ ॥

प्रख्यातेति—प्रख्यातधाम्नां प्रसिद्धामरावत्यादिदिव्यनिवेशनानां दिक्पतीनां इन्द्रादीनामपि प्रासादेषु स्वकीयेषु वैजयन्तादिषु वासे आदरं इच्छां आक्षिपन्तः अपनयन्तः, ततोऽप्यभ्यर्हितत्वादिति भावः, नित्यं योगिभिः अध्यासिताः अधिष्ठिताः अस्य मेरोः अमी रत्नगुहाविशेषाः मणिकन्दररूपा दृश्यपदार्थाः राजन्ति । "विशेषोऽवयवे भेदे द्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवः । समृद्धिमद्वस्तुवर्णनरूप उदात्तालङ्कारः ॥ ८ ॥

---

[1] र्गणैरस्य—म. मु.

परिस्फुरन्त्याः क्षितिपद्ममध्ये
पार्श्वेषु हेमाचलकर्णिकायाः ।
पश्य प्रिये रत्नविशेषचित्रां
कृशोन्नतां केसरशैलपङ्क्तिम् ॥ ९ ॥

**परिस्फुरन्त्या इति**—हे प्रिये! क्षितिः पद्ममिव तन्मध्ये परिस्फुरन्त्याः भ्राजमानायाः हेमाचलः कर्णिकेव हेमाचलकर्णिका तस्याः पार्श्वेषु रत्नविशेषैः पद्मरागादिभिश्चित्रां कृशोन्नतां तन्वीमुन्नतां च केसरशैलपङ्क्तिं पश्य । भूसरोरुहकर्णिकाकारं मेरुं परितः केसराकारेण स्थिताः शीतार्तक्रौञ्चकुररीमाल्यवत्प्रभृतयः केसराचला इति पुराणेषूपवर्णितम् ॥ ९ ॥

वलीविभङ्गैरिव वर्षभेदै-
स्त्रिभिर्विभक्तं त्रिदशानुभाव्यैः ।
संदृश्यते सागरमेखलायाः
सुमध्यमे मध्यमिदं धरण्याः ॥ १० ॥

**वलीविभङ्गैरिति**—हे सुमध्यमे! शोभनावलग्ने! सागरो मेखलावत्परितस्स्थितो यस्यास्तस्या इदं धरण्या मध्यं त्रिदशानुभाव्यैः देवभोग्यैः त्रिभिर्वर्षभेदैः भूप्रदेशविशेषैः वलीविभङ्गैः उदररेखाभेदैरिव विभक्तं पृथक्कृतं संदृश्यते । "भङ्गस्तरङ्गे ऋग्वेदे भेदे जाति[1]विदीर्णयोः" इति विश्वः । इयमत्र पौराणिकी प्रक्रिया—पूर्वपश्चिमसमुद्रपर्यन्तमायतयोः नीलनिषधपर्वतयोरन्तरालं भूगोलकस्य मध्यम् । तस्मिन् दक्षिणोत्तरतया स्थितौ नील[2]निषधपर्यन्तमायतौ द्वौ पर्वतौ माल्यवान् गन्धमादन इति । तत्र पश्चिमसमुद्रमारभ्य माल्यवत्पर्यन्तं केतुमालाख्यं वर्षम् । ततो गन्धमादनपर्यन्तं इलावृतसंज्ञम् । यस्य मध्ये कर्णिका-

1 वितीर्णयोः—ग. घ.     2 निषधौ द्वौ—ग. घ.

कारो महामेरुः। गन्धमादनात् पूर्वसमुद्रपर्यन्तं भद्राश्वनामकमिति। एवमुत्तरोत्तरं प्राचीनं वर्षत्रयमिति। अनेन वर्षत्रयेण विभक्तं भुवो मध्यमेव मध्यमवलग्नं वलित्रयेण विभक्तमिव दृश्यत इत्युत्प्रेक्षा। विशेषण[1]साम्यात् भुवो नायिकात्वप्रतीतेः समासोक्तिश्च। अनयोश्च समानकालयोर्मध्यशब्दश्लेषेणाङ्गाङ्गि[2]भावेन सङ्करः ॥ १० ॥

अभञ्जनीयं [3]प्रथिमानमात्तां
स्थानेष्वरैराकलितामहार्यैः।
चराचराणां प्रभवेन धार्यां
चक्राकृतिं पश्य समुद्रनेमिम् ॥ ११ ॥

अभञ्जनीयमिति—अभञ्जनीयं भङ्क्तुमशक्यं प्रथिमानं पृथुत्वं आत्तां स्थानेषु तत्तत्प्रदेशेषु अरैः रं भयं तद्रहितैः चलनपतनादि-भयरहितैः, रलयोरैक्यात् अलैः पर्याप्तैरिति वा, "अलभूषणपर्याप्ति-शक्तिवारणेषु" (भ्वादि ५१५) इति धातोः पचाद्यच्, अहार्यैः पर्वतैः आकलितां ग्रथितां चराचराणां प्रभवेन जङ्गमस्थावरात्मकप्रपञ्चजनकेन परमपुरुषेण धार्यां चक्राकृतिं मण्डलाकारां समुद्रनेमिं समुद्रो नेमिरवधि-र्यस्यास्तां भूमिं पश्य।

नपुंसको रशब्दस्तु ध्यानव्योमान्धकुक्षिषु।
उत्तमाङ्गे च वदने [4]रुधिरे चापि साध्वसे ॥

इति एकाक्षररत्नमाला।

नेमिस्त्रिकायां कूपस्य चक्रान्ते तिनिशद्रुमे।
नेमिः कालेऽवधौ गर्ते [5]प्रकारे शङ्कुकद्रुमे ॥

इति विश्वः। प्रथिमानमित्यत्र 'पृथ्वादिभ्य इमनिज्वा' (पा. सू. ५-१-१२२) इति पृथुशब्दादिमनिच्प्रत्ययः। 'र ऋतो हलादेर्लघोः'

---

[1] सामर्थ्यात्–ङ. [2] भावसङ्करः–ग. ङ. [3] प्रथि–झ. [4] रुचिरे–घ. ञ.
[5] 'प्रकारे कैतवेऽपि च' इति मुद्रितविश्वकोशे दृश्यते.

(पा. सू. ६-३-१६१) इति ऋकारस्य रेफश्च । अत्र शब्दशक्त्या अर्थान्तरमपि प्रतीयते—अभञ्जनीयं [1]प्रथेर्नेमेर्मानं वैपुल्यं प्राप्तां अहार्यैः हर्तुमशक्यैः अरैः नाभिनेमिमध्यास्थितावयवैः आकलितां परमपुरुषेण धार्यां समुद्रनेमिं मुद्रया दुष्टनिग्रहेण जगतां मुदं रान्त्या ददानया नेम्या सहितां चक्रस्य सुदर्शनस्याकृतिं पश्येति । "स्त्री नेमिर्ना प्रथिश्चक्रप्रान्ते कुम्बा तु नाभिका । अरास्तयोस्स्थिता मध्ये" इति यादवः । मुद्रेति मुदुपपदात् 'रा दाने" (अदादि—१०५७) इति धातोः 'आतोऽनुपसर्गे कः' (पा. सू. ३-२-३) इति कः । एवमप्रकृतार्थप्रतीतौ सुदर्शने भूमण्डलस्योपमा ध्वन्यत इति शब्दशक्तिमूलोऽलङ्कारध्वनिः ॥ ११ ॥

विकल्पितानि त्रिदिवेन भूमौ
वर्षाणि दिव्यानि विलोकयेथाः ।
द्वन्द्वैरिह द्वन्द्वविषादमुक्तै-
र्निर्विश्यते यौवनमेकरूपम् ॥ १२ ॥

विकल्पितानीति—भूमौ भूलोके त्रिदिवेन विकल्पितानि

---

[1] प्रथेर्नेमेरित्यादि । चक्रप्रान्तबोधकः प्रधिशब्दः सर्वत्र कोशेषु तवर्गगततुरीय-वर्णघटित एवोपलभ्यते । अत्र च दीक्षितास्तवर्गीयद्वितीयवर्णघटितं तमभिप्रयन्ति । अन्यथा तत्प्रदर्शितप्रकृतार्थभूतभूम्यर्थानुगुण्यं न स्यात् । तत्र च प्रमाणतया 'स्त्री नेमिर्ना प्रथिश्चक्रप्रान्ते' इति यादवकोश उदाहृतः । मुद्रितयादवकोशे तु तवर्गीय-चतुर्थवर्णघटित एव प्रधिशब्दपाठो दृश्यते । समुचितश्चायमेव पाठः, यतस्तत्रैवोत्तरत्र लिङ्गसङ्ग्रहाध्याये—'प्रध्याधाः प्रादितो धोः कौ' इत्युक्तं दृश्यते । अत्र प्रथधातुनिष्पन्न औणादिकः प्रथिशब्दोऽप्यस्तीति दीक्षितानामाशयस्स्यात् । वस्तुतोऽत्र प्रकृताप्रकृतयो-रुभयोरप्यर्थयोः प्रथिमानमित्यस्य पृथुत्वरूपैकार्थाभ्युपगमेऽपि मूलस्योपपत्तेर्नेम्यर्थक-तवर्गीयद्वितीयवर्णघटितप्रथिशब्दसंपादनक्लेशो नानुभाव्य इति भाति. [2]तुम्बा—अ. 'तुम्बा तु नाभिका' इति मुद्रितयादवकोशेऽपि दृश्यते.

त्रिदिवे वा भोगिभिर्वस्तव्यं, एतेषु वर्षेषु वेति त्रिदिवेन सह सञ्जातविकल्पानि, तत्सदृशानीति यावत्, दिव्यानि मनोहराणि वर्षाणि इलावृतादीनि विलोकयेथाः पश्येः । इह वर्षेषु द्वन्द्वविषादमुक्तैः शीतोष्णादिदुःखरहितैः द्वन्द्वैः किन्नरादिमिथुनैः "द्वन्द्वं [1]युद्धं हिमोष्णादिमिथुनं कलहो रहः" इति वैजयन्ती, एकरूपं कालवशेन परिणामभेदरहितं यौवनं निर्विश्यते उपभुज्यते । अत्र उत्तरार्धार्थस्य त्रिदिवेन विकल्पितत्वे हेतुतया अन्वयात् वाक्यार्थहेतुकं [2]काव्यलिङ्गमलङ्कारः । विकल्पितानीति [3]तारकादेराकृतिगणत्वादितच् । निष्ठायां तु 'यस्य विभाषा' (पा. सू. ७-२-१५) इति इट्प्रतिषेधात् विक्लृप्तानीति स्यात् । [4]'क्लृपेस्तादर्थ्ये' (चु. १७४९) इति चुरादिपाठात् स्वार्थण्यन्ताद्वा निष्ठा ॥ १२ ॥

**इलावृतान्तां निषधादपाचीं**
**विलङ्घ्य हृद्यां हरिवर्षसीमाम् ।**
**खगेश्वरस्संश्रितहेम[5]कूटं**
**निनीषते किम्पुरुषास्पदं नः ॥ १३ ॥**

**इलावृतान्तामिति**—खगानीमाश्वरो गरुडः इलावृतान्तां इलावृतवर्षपर्यन्तां निषधादपाचीं निषधाद्दक्षिणां हृद्यां हरिवर्षसीमां हरिसंज्ञस्य वर्षस्य सीमां विलङ्घ्य अतीत्य संश्रितहेमकूटं आश्रितहेमकूटाख्यवर्षपर्वतं किम्पुरुषाणामास्पदं वर्षं नः अस्मान् निनीषते

---

[1] 'युग्मं' इति मुद्रितवैजयन्तीकोशे दृश्यते. [2] 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति तल्लक्षणं बोध्यम्. [3] 'तदस्य सञ्जातं तारकादिभ्य इतच्' (पा. सू. ५-२-३६). [4] 'भुवोऽवकल्कने क्लृपेश्च' इति धातुपाठे दृश्यते 'क्लृपेस्तादर्थ्ये, इति पाठः क्षीरस्वाम्यनुमत इति चुरादौ माधवीयधातुवृत्तौ.
[5] कूटो—क्ष.

नेतुमिच्छति । वलीविभङ्गैरिति श्लोके दर्शितस्य इलावृतादिवर्षत्रय-विभक्तस्य भूमध्यस्य दक्षिणावधिर्निषधपर्वतः । तत आरभ्य हरिवर्षम् । ततो हेमकूटः । तत आरभ्य किम्पुरुषवर्षम् । ततो हिमाचलः । तत आरभ्य भारतं वर्षमिति पुराणप्रक्रिया ॥ १३ ॥

वपुश्शुभं वाजिमुखाङ्गनानां
वक्त्रं च युञ्जन्निह किन्नरीणाम् ।
स्त्रीरत्नसंसृष्टिविधौ विधिश्चेत्त्र्यक्षः
कथं पञ्चशरस्य जेता ॥ १४ ॥

वपुरिति—इह किम्पुरुषवर्षे वाजिमुखाङ्गनानां अश्वमुखीनां शुभं सुन्दरं वपुः, किन्नरीणां शुभं वक्त्रं च, युञ्जन् संघट्टयन् सन् [1] विधिः ब्रह्मा स्त्रीरत्ननिर्माणे तत्रामुह्यन् कोऽपि न सम्भवतीति शङ्करोऽपि मदनं जेतुं न शक्नुयादित्यर्थः ॥ १४ ॥

दिदृक्षमाणस्य ममैष देशान्
सव्यापसव्येन गतिक्रमेण ।
अमोघवृत्तिर्गगने गरुत्मान्
विचेष्टते चित्तमिव द्वितीयम् ॥ १५ ॥

दिदृक्षमाणस्येति—गगने अमोघवृत्तिः अप्रतिहतसञ्चारः एषः गरुत्मान् देशान् दिदृक्षमाणस्य द्रष्टुमिच्छतो मम द्वितीयं चित्तमिव सव्यापसव्येन सव्यदक्षिणरूपेण गतिक्रमेण गतिपरिपाट्या विचेष्टते । यदा मच्चित्तं सव्ये दक्षिणे वा यस्मिन् देशे धावति, तदा स्वयमपि तदनुरोधी तस्मिन् देशे विचेष्टत इत्यर्थः । "अपसव्यं तु दक्षिणम्"

---

[1] अत्र 'विधिः ब्रह्मा स्त्रीरत्नसंसृष्टिविधौ स्त्रीरत्ननिर्माणे चेत् त्र्यक्षः त्रिलोचनः कथं पञ्चशरस्य मन्मथस्य जेता' इति पाठेन भाव्यमिति भाति.

इत्यमरः । दिदृक्षमाणस्येति "ज्ञाश्रुस्मृदृशां सनः" (पा. सू. १-३-५७) इत्यात्मनेपदम् ॥ १५ ॥

**निपत्य चोत्पत्य च लङ्घयन्ती**
**निम्नोन्नतान्वर्षविभागदेशान् ।**
**छाया [1]समेन स्वपथेन**
**यान्तं तरस्विनं तार्क्ष्यमिवातिशेते ॥ १६ ॥**

**निपत्येति**—निम्नोन्नतान् कचिन्निम्नान् काचिदुन्नतांश्च वर्षाणामिलावृतादीनां विभागदेशान् सन्धिभूतमर्यादापर्वतप्रदेशान् निपत्य चोत्पत्य च निम्नेषु निपत्य उन्नतेषूत्पत्य च लङ्घयन्ती अतिक्रामन्ती छाया कर्त्री समेन निम्नोन्नतभावरहितेन स्वपथेन स्वस्य मार्गेण आकाशेन यान्तं तरस्विनं वेगवन्तं तं तार्क्ष्यं अतिशेत इव । स्वमार्गेण गच्छता वेगवता गरुत्मता सह विषममार्गेषु निपत्योत्पत्य च गच्छतः सहत्वमतिशयो भवतीति भावः । [2]नौवेगे तदारूढ[3]साहित्यवत्, छायावद्वेगे छायासाहित्यमन्याधीनं, न तु स्वाभाविकमित्यतिशयस्य अवास्तवत्वादुत्प्रेक्षा । [4]निम्नैकदेशादिना अवयविन्येव निम्नत्वादुपचारान्निम्नोन्नतादौ समानाधिकरणसमास इति भोजराजः ॥ १६ ॥

**महीयसो वेगवशेन मध्ये**
**सीमन्तयन्नेष शरत्पयोदान् ।**
**यदृच्छया संभृतचामरश्रीः**
**संदृश्यते देवि तवौपवाह्यः ॥ १७ ॥**

**महीयस इति**—हे देवि ! महीयसः महत्तरान् शरत्पयोदान्

---

[1] समेव—झ. वस्तुतस्तत्रेदं बोध्यम्—ञ.—कोशे 'ब्रह्मा स्त्रीरत्नसृष्टिं चक्रे यदि' इति व्याख्यानदर्शनात् लिखितमूलकोशे मुद्रितमूलकोशे च 'स्त्रीरत्नसृष्टिं विदधे विधिश्चेत्' इति पाठदर्शनाच्चात्र 'स्त्रीरत्नसंसृष्टिविधौ विधिश्चेत्' इति पाठो नातीव स्वरस इति भाति। अत्र च मूलकोशदृश्यमानपाठे 'युञ्जन् विदधे' इति 'वसन् ददर्श' इतिवदुपपद्यते. [2] नौवेगेन—घ. [3] साहित्यमनन्याधीनं—घ. [4] निम्नैकदेशत्वादिना—ञ.

शरन्मेघान् वेगवशेन वेगायत्ततया मध्ये सीमन्तयन् सीमन्तवतः स्वस्य यानेन रेखावतः कुर्वन् सीमन्तशब्दो वनिताकेशमध्यरेखावाची, इह लक्षणया रेखामात्रे प्रयुक्तः, सीमन्तशब्दान्मतुबन्तात् 'तत्करोति' (ग. सू. २०४) इति णिचि [1] 'णाविष्ठवत्प्रातिपदिकस्य' (वा. ४२०८) इति इष्ठवद्भावात् 'विन्मतोर्लुक्' (पा.सू. ५-३-६५) इति मतुपो लुक्, एष तवौपवाह्यः अयं तव वाहनभूतो गरुडः यदृच्छया [2] निमित्तं विना, चामरसम्पादकयत्नं विनेति यावत्, "स्वच्छन्दमनिमित्तं च यदृच्छेत्यभिधीयते" इति हलायुधः, [3] प्रकृत्यादित्वात्तृतीया, संभृतचामरश्रीः उभयतोविभक्तैर्मेघैः संपादितचामरकान्तिः संदृश्यते ॥ १७ ॥

वियत्पयोधिं तरतां विशालं
विमानदीप्तेन गरुत्मता नः।
इयं पुरः शैलवनोपपन्ना
विश्वंभरा भाति विलोमगेव ॥ १८ ॥

वियदिति—विमानदीप्तेन दिव्ययानेनेव उज्ज्वलेन गरुत्मता विशालं वियदेव पयोधिं तरतां नः शैलैर्वनैश्च उपपन्ना युक्ता विश्वंभरा भूमिः पुरः अग्रे विलोमगा प्रतिलोमगेव भाति । निश्चलवेगया नावा समुद्रं तरतामिव [4] प्रत्यागच्छन्तीव प्रतीयत इत्यर्थः ॥ १८ ॥

शरद्धनस्तोम इवोपसीदन्
किं दृश्यते किन्नरनाथशैलः।
सन्ध्याविहारच्युतसंहतात्मा
शम्भोरिवोद्धूलनभस्मराशिः ॥ १९ ॥

शरदिति—शरद्धनस्तोम इव शरन्मेघस्तोम इव उपसीदन्

---

1 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' (२०३ ग. सू.) इति गणसूत्रेणेति भावः. 2 निर्निमित्तं चामर-अ. 3 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा. ५६१) इति वार्तिकेनेति भावः. 4 अत्र 'अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत्' इत्यार्यभटीयगोलपादगता नवम्यार्याऽनुसंधेया.

सन्निकृष्टो भवन् सन्ध्याविहारेण नटनरूपेण च्युतसंहतात्मा पुञ्जीभूतस्वरूपश्च शम्भोः उद्धूलनभस्मराशिः देहावकुण्ठनभस्मसमूह इव स्थितः किन्नराणां नाथस्य कुबेरस्य शैलः कैलासः दृश्यते किम्। प्रश्ने किंशब्दः ॥ १९ ॥

सुधायमानां धनदस्य सौधे
स्वाभाविकीमस्य गिरेरभिख्याम्।
पर्याकुलैर्विष्णुपदीतरङ्गै-
राम्रेडयन्तीव हराट्टहासाः ॥ २० ॥

सुधायमानामिति—धनदस्य कुबेरस्य सौधे सुधायमानां सुधावदाचरन्तीं 'कर्तुः क्यङ् सलोपश्च' (पा. सू. ३-१-११) इति क्यङ्प्रत्ययः, स्वाभाविकीं स्वभावसिद्धां अस्य गिरेः अभिख्यां शोभां हरस्याट्टहासाः पर्याकुलैः विष्णुपद्याः अट्टहासप्रकम्पितायाः तज्जटाजूटगङ्गायास्तरङ्गैः कर्तृभिः सह आम्रेडयन्तीव [1] बहुलयन्तीव ॥ २० ॥

अमुष्य दीप्तोन्नतदन्तभूम्नो
नक्षत्रमालार्चिततुङ्गमौलेः।
पादेषु भान्ति स्फटिकाः प्रभूता
नाकद्विपस्येव नखेन्दुबिम्बाः ॥ २१ ॥

अमुष्येति—दीप्तः उज्ज्वलः उन्नतानां दन्तानां कटकानां भूमा महिमा यस्येति तथोक्तः तस्य "दन्तोऽद्रिकटके रदे" इति यादवः, नक्षत्रमालाभिः [2] तारापङ्क्तिभिरर्चितः पूजितः तुङ्गो मौलिर्यस्येति तथोक्तः तस्य अमुष्य कैलासस्य पादेषु प्रत्यन्तपर्वतेषु प्रभूताः स्थूलाः स्फटिकाः नाकद्विपस्य ऐरावतस्य पादेषु चरणेषु नखेन्दु-

[1] बहलयन्तीव—अ. [2] तारकापङ्क्तिभिः—अ.

बिम्बाः नखचन्द्रमण्डलानीव भान्ति । ऐरावतपक्षे दन्ताः रदनाः । नक्षत्रमाला गजकुम्भविलेपनम् । 'स्थासको नक्षत्रमाला' इति गजमण्डन-प्रकरणे यादवः ॥ २१ ॥

**उदग्रवज्रव्रणकर्कशानां**
**पर्याप्तसारेण भुजार्गलानाम् ।**
**अनेन विख्यापितविक्रमं त-**
**द्रक्षः पुरा रामशरव्यमासीत् ॥ २२ ॥**

उदग्रेति—उदग्रैरुन्नतैर्वज्रव्रणैः [1] इन्द्रेण समरे वज्रप्रहारेण जातैर्व्रणैः कर्कशानां कठिनानां भुजा एवार्गलाः तासां पर्याप्तसारेण पर्याप्तबलेन, विंशतेरपि भुजानां यत्नं विना चालयितुमशक्येन अनेन कैलासेन विख्यापिताविक्रमं कैलासोऽनेन चालित इति प्रख्यापित-पराक्रमं तत् प्रसिद्धं रक्षः रावणः पुरा पूर्वं रामशरव्यं रामबाणलक्ष्यं आसीत् । क्षुद्रेष्वनापततां रामबाणानां एतच्चालनलब्धपराक्रम-प्रसिद्धिकतया रावणो लक्ष्यमासीदित्यर्थः ॥ २२ ॥

**अयं वनैश्श्यामनितम्बभागो**
**गौरस्स्वयं गैरिकसंभृतश्रीः ।**
**वलाहकग्राह्यगुणान्तरीयं**
**मदारुणं व्यञ्जयते [2] मदार्यम् ॥ २३ ॥**

अयमिति—वनैः श्यामनितम्बभागः श्यामलकटकप्रदेशः "नितम्बः पश्चिमे श्रोणिभागेऽद्रिकटके कटौ" इति वैजयन्ती, स्वयं गौरः स्वतश्शुभ्रः गैरिकैररुणधातुविशेषैः सम्भृतश्रीः सम्पादितकान्तिः अयं कैलासः वलाहकानां मेघानां ग्राह्यगुणं ग्रहणयोग्यवर्णं वर्णेन

---

[1] इन्द्रेण युद्धसमये वज्र-श्र.  [2] ममार्यं-श्र. प्र. दे. मु.

तत्सदृशमन्तरीयं परिधानं यस्य तं मदेनारुणं [1] मदार्यं ममाग्रजं व्यञ्जयते अभिनयति, तद्वद्भासते। सोऽपि स्वतश्शुभ्र इति भावः ॥ २३ ॥

अस्मिन् धनाधीश्वरराजधान्या-
माकर्णितं हैमवतीसखेन।
त्वत्कीर्त्युपघ्नं शृणु किन्नरीणां
गृहे गृहे किन्नरकण्ठि गीतम् ॥ २४ ॥

**अस्मिन्निति**—हे किन्नरकण्ठि! किन्नराणां कण्ठ इव स्निग्धः कण्ठो यस्यास्सा तथोक्ता, अस्मिन् कैलासे धनाधीश्वरस्य राजधान्यां अलकायां गृहेगृहे प्रतिगृहं तव कीर्तिरुपघ्न आश्रयो विषयो यस्य तत्तथोक्तम्, हैमवतीसखेन गौरीपतिना आकर्णितं, त्वय्यादरादिति भावः, किन्नरीणां किम्पुरुषाङ्गनानां गीतं शृणु ॥ २४ ॥

निशम्य दिव्यद्रुमसम्भवानां
नूनं रवं नूपुरमञ्जरीणाम्।
उड्डीयमानाः प्रतियान्त्यमी त्वां
मञ्जुस्वराः मानसहंसदाराः ॥ २५ ॥

**निशम्येति**—अमी मानसहंसदाराः मानसाख्यसरोवर्ति-हंसवनिताः दिव्यद्रुमसम्भवानां [2] पारिजातोद्भवानां नूपुरमञ्जरीणां पादकटकरूपाणां मञ्जरीणां रवं निशम्य उड्डीयमानाः उत्पतन्तः मञ्जुस्वराः मञ्जुलनादाश्च सन्तः त्वां प्रतियन्ति प्रत्युद्गच्छन्ति। नूपुरनिनादश्रवणात् सजातीयागमनभ्रमेणेति भावः। नूनमित्युक्तार्थ-निश्चये। उड्डीयमाना इति 'डीङ् विहायसा गतौ' (दिवादि–११३५) इति दैवादिकाद्धातोः कर्तरि शानच् ॥ २५॥

---

[1] मदार्यं पूज्यमग्रजं ङ. अ.  [2] पारिजातप्रभवानां—अ.

इतो हिरण्य[1]प्रमुखैः प्रभुक्ता
शोणाधरे शोणितराजधानी ।
आदौ समुत्खातपुनर्निखातैः
कैलासशृङ्गैरिव भाति सौधैः ॥ २६ ॥

इत इति—हे शोणाधरे! अरुणाधरे इतः इह प्रदेशे हिरण्यप्रमुखैः हिरण्यासुरप्रभृतिभिः प्रभुक्ता भोक्तुमुपक्रान्ता शोणितराजधानी [2]शोणिताख्या पुरी आदौ हिरण्यादिकाले समुत्खातपुनर्निखातैः प्रथमं समुत्खातैः पुनरत्र परिपाट्या निखातैः कैलासस्य शृङ्गैरिव सौधैः सुधाधवलितैर्गृहैर्भाति । इत इति [3]आद्यादित्वात्तसिः । [4]प्रभुक्तेत्यत्र [5]आदिकर्मणि क्तप्रत्ययः ॥ २६ ॥

मृदङ्गनादेन मृगाङ्कमौलिं
प्रसादयन् पालयतीह दैत्यान् ।
बलेरपत्यं बलिनां विजेता
बाणासुरो बाहुसहस्रशाली ॥ २७ ॥

मृदङ्गेति—इह शोणितपुरे बाहुसहस्रशाली बाहूनां सहस्रेण विकत्थमानः, बलिनां बलवतामपि जेता बलेः वैरोचनस्य अपत्यं बाण इत्यसुरः मृदङ्गस्य नादेन मृगाङ्को मौलिः किरीटं यस्य तं शम्भुं प्रसादयन् दैत्यान् पालयति रक्षति ॥ २७ ॥

---

[1] प्रमुखेोपभुक्ता—ग्र. दे. मु. [2] शोणिताख्यपुरी—घ. [3] 'आद्यादिभ्य उपसंख्यानम्' (वा २१००) इत्यनेनेति भावः । [4] प्रभुक्तेत्यादिकर्मणि—ग्र. [5] 'आदिकर्मणि क्तः कर्तरि च' (पा. सू. ३-४-२१) इति सूत्रेणेति भावः.

**रामास्त्ररन्ध्रोदितहंसयूथं**
**क्रौञ्चं गिरिं लक्षय दूरलक्ष्यम् ।**
**पीतां पुनश्श्रोत्रपथेन काले**
**भागीरथीं जह्नुमिवोद्वमन्तम् ॥ २८ ॥**

**रामास्त्रेति**—रामास्त्ररन्ध्रोदितहंसयूथं जामदग्न्यशरकृतरन्ध्रो[1]-द्गतहंससमूहं अत एव पीतां भागीरथीं श्रोत्रपथेन काले भगीरथ-प्रसादनसमये पुनरुद्वमन्तं विसृजन्तं जह्नुं जह्नुसंज्ञकं राजानमिव स्थितं दूरलक्ष्यं अत्युन्नतत्वात् दूरे दृश्यं क्रौञ्चं गिरिं लक्षय पश्य ॥ २८ ॥

**अमुष्य दूरादसिताक्षि दृष्टिं**
**दिव्ये गिरौ दातुमिहार्हसि त्वम् ।**
**मरुद्गणेन ह्यमुनोन्नतेन**
**स्वाहारसम्भूतिरमन्थि सिन्धुः ॥ २९ ॥**

**अमुष्येति**—हे असिताक्षि! अमुष्य क्रौञ्चस्य दूरात् दूरे 'दूरान्तिकार्थेभ्यो द्वितीया च' (पा. सू. २-३-३५) इति चकारात् पञ्चमी, दिव्ये मनोहरे इह दृश्यमाने गिरौ मन्दर इति [2]उत्तरवाक्या-ल्लभ्यते, त्वं दृष्टिं दातुमर्हसि । उन्नतेनामुना पर्वतेन हि मरुद्गणेन देवगणेन कर्त्रा स्वेषामा[3]हारस्य अमृतस्य सम्भूतिः उत्पत्ति[4]भूमिः सिन्धुः अमन्थि मथितः । 'अकर्तरि च कारके' (पा. सू. ३-३-१९) [5]इत्यधिकरणे क्तिन्प्रत्ययेन सम्भूतिशब्दः साधुः ॥ २९ ॥

---

[1] रन्ध्रोद्गच्छद्धंस—ञ. [2] उक्तवाक्या—घ. [3] आहारस्य संभूति—घ. [4] भूः—ङ. ञ. [5] इत्यनुवृत्त्या 'स्त्रियां क्तिन्' (पा. सू. ३-३-९४) इति सूत्रेण क्तिनिति भावः.

विलग्नदैत्येश्वरशोणितानां
वैकुण्ठकेयूरजुषां मणीनाम् ।
अयत्नशाणोपलतामपुष्य-
न्नार्द्रास्सुधाबिन्दुभिरस्य कूटाः ॥ ३० ॥

विलग्नेति—सुधाबिन्दुभिः [1]मथनसमयोत्थिताभिः आर्द्राः अस्य गिरेः [2]कूटाः शिखराणि विलग्नं दैत्येश्वराणां विदार्यमाणानां शोणितं येषु तेषां वैकुण्ठकेयूरजुषां [3]भगवदङ्गदसङ्गतानां मणीनां अयत्नशाणोपलतां सम्पादनयत्नानपेक्षघर्षणपाषाणतां अपुष्यन् अभजन्निति यावत् । अमृतमथनसमये गिरेरशैथिल्याय उपरि हस्तं निधाय तिष्ठतो वैकुण्ठस्य केयूररत्नेषु सुधाकणार्द्रशिखरघट्टनमसुरशोणितमालिन्यापनोदनाय जलसेकापनीतपारुष्यशाणोपलसङ्घर्षणमिवासीदित्यर्थः ॥ ३० ॥

लक्ष्मीसुधासञ्जननाय तूर्णं
विमथ्नता वेगमनेन दत्तम् ।
आवर्तभेदैरधुनाऽप्यगाधै-
रर्थापयन्त्यम्बुनिधेर्महौघाः ॥ ३१ ॥

लक्ष्मीति—लक्ष्मीसुधयोस्सञ्जननाय उत्पादनाय तूर्णं विमथ्नता अनेन मन्दरेण दत्तमाहितं अम्बुनिधेर्वेगं अधुनाऽपि अद्यापि महौघाः अम्बुनिधिना सम्भिद्यमानानां नदीनां महाप्रवाहाः अगाधैः अतलस्पर्शिभिः आवर्तभेदैः सम्भेदस्थलभवैर्जलभ्रमविशेषैः अर्थापयन्ति अर्थं वस्तुभूतमाचक्षते, इत्थं मथनसमये मन्दरेण भ्राम्यमाणस्य जलनिधेर्वेग आसीदिति तदनुकरणेन तस्य [4]वास्तवतां प्रकटयन्तीत्यर्थः ।

---

[1] अमृतसमयोत्थिताभिः—ङ. [2] कूटाः विलग्नं—घ. कूटाः शृङ्गाणि—ञ.
[3] भगवदङ्गदगतानां—ञ. [4] वास्तव्यतां—ङ.

'अर्थवेदसत्यानामापुग्वक्तव्यः' (वा. १७५८) इति आपुगागमः। 'सत्यापपाश' (पा. सू. ३-१-२५) इत्यादिना णिच् ॥ ३१ ॥

**अमोघबाणस्य मुनेरशोष्ये**
**फेनायमानानि यशःपयोधौ।**
**गतागतैर्हंसकुलान्यमूनि**
**च्छायापथं सञ्जनयन्त्यपूर्वम् ॥ ३२ ॥**

अमोघेति—अमोघबाणस्य अवितथबाणस्य मुनेः जामदग्न्यस्य अशोष्ये शोषयितुमशक्ये यशःपयोधौ कीर्तिसागरे फेनायमानानि फेनवदाचरन्ति तदीयशर[1]कृतकौञ्चरन्ध्रनिर्गतत्वात् कीर्तिसागरफेनत्वोत्प्रेक्षा, अमूनि हंसानां कुलानि यूथानि गतागतैः गमनागमनैः अपूर्वं दिवाऽपि दृश्यमानतया प्रसिद्धविलक्षणं छायापथं सञ्जनयन्ति सम्पादयन्ति। आबद्धपङ्क्तिकतया स्वयमेव छायापथवत् भासत इत्यर्थः। छायापथो नाम ज्योतिश्चक्रमध्यवर्ती तिरश्चीनः प्रचुरनक्षत्रगणो रेखाविशेषः। यद्यपि फेनायमानानीत्यत्र 'कर्तुः क्यङ् सलोपश्च' (पा. सू. ३–१–११) इत्यनुशासनादुपमैव प्रतीयते, तथाऽप्यशोष्य इति सामान्यप्रयोगात् यशःपयोधावित्यत्र [2] उपमितिसमासासम्भवेन रूपकसमासे स्थिते पयोधौ फेनानामौचित्यात् तत्तादात्म्यसम्भावनारूपा उपमोपक्रमोत्प्रेक्षाऽनुसन्धेया ॥ ३२ ॥

**धृतिक्षमं देवि सुरस्रवन्त्याः**
**सिद्धाश्रितं शम्भुमिव द्वितीयम्।**
**परिष्कृतिं भारतवर्षसीम्नः**
**प्राप्ता वयं पर्वतसार्वभौमम् ॥ ३३ ॥**

धृतिक्षममिति [3]—हे देवि सुरस्रवन्त्याः सुराणां स्रवन्त्याः

---

[1] कृत्त–घ. [2] उपमितसमासेति साधीयान् पाठः. [3] हे देवि सुराणां स्रवन्त्याः नद्याः–घ.

नद्याः गङ्गायाः धृतिक्षमं धारणे शक्तं सिद्धाश्रितं योगसिद्धैर्देवयोनि-विशेषैर्वा सेवितं अत एव साम्याद्द्वितीयं शम्भुमिव स्थितं भारतवर्षसीम्नः भारताख्यवर्षमर्यादायाः परिष्कृतिं अलङ्कारभूतं पर्वतानां सार्वभौमं राजानं हिमवन्तं वयं प्राप्ताः ॥ ३३ ॥

अनुप्रविष्टं गिरिजासखीभिः
पर्यन्तसंस्तम्भितभूतवर्गम् ।
अदूरतश्चैत्ररथात्प्रभूतं
वैहारिकं पश्य वनं पुरारेः ॥ ३४ ॥

अनुप्रविष्टमिति—चैत्ररथाददूरतः कुबेरोद्यानस्य समीपे 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (पा. सू. २–३–३४) इति अदूर-शब्दयोगे पञ्चमी, गिरिजायाः पार्वत्याः सखीभिः अनुप्रविष्टं पर्यन्तसंस्तम्भितभूतवर्गं प्रान्तेषु पालकतया स्थापितप्रमथगणं प्रभूतं समृद्धं पुराणामरेरीश्वरस्य वैहारिकं पार्वत्या सह विहारार्थं [1] वनं उद्यानं पश्य ॥ ३४ ॥

अभङ्गुरैराहतयोरनङ्गः
शृङ्गारदिग्धैरिह चित्रपुङ्खैः ।
अभिन्नमन्योन्यलयादकार्षी-
द्देहं द्वयोरर्धसमीक्ष्यभेदम् ॥ ३५ ॥

अभङ्गुरैरिति—इह उद्याने अनङ्गः कामः अभङ्गुरैः अभङ्गशीलैः शृङ्गारदिग्धैः शृङ्गाररसरूषितैः चित्रपुङ्खैः सायकैः आहतयोः द्वयोः उमा-शङ्करयोः देहं अन्योन्यस्मिन् लयात् अभिन्नं अविभक्तं अर्धसमीक्ष्यभेदं अर्धदृश्यभेदं अकरोत् करोति स्म । "चित्रपुङ्खो वीरशङ्कुश्शरो [2] रोप इषुर्द्वयोः" इति यादवः ॥ ३५ ॥

---

[1] वनं पश्य–घ. [2] 'रोप इषुर्न षण्' इति मुद्रितयादवकोशे दृश्यते.

दिवा महानीलमयूखजालै-
नक्तं प्रकाशेन महौषधीनाम् ।
पश्यन्त्यमुष्मिन् परिवृत्तिशून्यं
कालं सदा कर्बुरमादितेयाः ॥ ३६ ॥

दिवेति—अमुष्मिन् पर्वते आदितेयाः देवाः दिवा दिवसे महानीलमयूखजालैः इन्द्रनीलकिरणसमूहैः नक्तं रात्रौ महतीनामोषधीनां वृक्षविशेषाणां प्रकाशेन आलोकेन च, ओषधिवृक्षा रात्रौ ज्वलन्तीति प्रसिद्धिः, परिवृत्तिशून्यं निशादिवसपरिवर्तनरहितं सदा कर्बुरं सर्वदा निशादिवसोभयरूपतया विचित्रं कालं पश्यन्ति। दिवाऽपि महानीलमयूखानां तमोवद्भानात् रात्रावप्योषधिप्रकाशस्य सौरालोकवद्भानाच्चेति भावः ॥ ३६ ॥

अलुप्तमेघद्युतिरिन्द्रनीलै-
र्वज्रैरसौ नित्यतटित्प्रकाशः ।
[1] प्रवृत्तगङ्गास्तनितो दधाति
प्रावृड्गुणान् प्रीणितनीलकण्ठः ॥ ३७ ॥

अलुप्तेति—इन्द्रनीलैः अलुप्तमेघद्युतिः अनपगतमेघकान्तिः वज्रैर्नित्यतटित्प्रकाशः सदातनविद्युदालोकः प्रवृत्तगङ्गास्तानितः सञ्जातगङ्गागार्जितः, उपरिपतद्गङ्गाध्वनिः स्तनितत्वेनोपचर्यते, प्रीणितनीलकण्ठः दुहितृप्रदानेन सन्तोषितशङ्करः, सन्तोषितमयूर इत्यपि गम्यते, असौ गिरिः हिमवान् प्रावृषः वर्षासमयस्य गुणान् धर्मान् दधाति ॥ ३७ ॥

---

[1] आवृत्त–घ.

अमुष्य मूर्धन्युपपत्य निम्नै-
श्चतुर्दिशं विष्णुपदी प्रयाति ।
चतुर्भिरुन्मीलितराशिभेदा
वेधोमुखैर्वेदमयीव विद्या ॥ ३८ ॥

**अमुष्येति**—विष्णुपदी गङ्गा अमुष्य हिमवतो मूर्धनि उपपत्य निपत्य उन्मीलितराशिभेदा सञ्जातप्रवाहभेदा सती चतुर्भिर्निम्नैः चतुर्दिशं चतसृणां दिशां समाहारं प्रयाति, कथमिव वेदमयी वेदरूपा विद्या सञ्जातऋग्यजुषादिराशिभेदा सती, चतुर्भिः वेधसो मुखैरिव । सा हि ब्रह्ममुखेभ्यः पूर्वदक्षिणपश्चिमोत्तरेभ्यः क्रमादृग्यजु[1]स्सामाथर्वरूपेण निर्गत्य सर्वासु दिक्षु प्रसृतेति श्रुतिस्मृतिप्रसिद्धिः ॥ ३८ ॥

[2] सरित्सहस्रैरभिगम्यमाना
शिलोच्चयैरन्तरिता दधाति ।
प्रवालमुक्ताप्रभृतेः प्रसूतिः
पत्नी पयोधेरियमानुरूप्यम् ॥ ३९ ॥

**सरिदिति**—सरितां यमुनादीनां सहस्रैरभिगम्यमाना प्राप्यमाणा शिलोच्चयैरन्तरिता मार्गलग्नैः पर्वतैः व्यवहिता, प्रवालमुक्ताप्रभृतेः प्रसूतिः उत्पत्तिभूः इयं पयोधेः पत्नी गङ्गा आनुरूप्यं पयोधेः अनुरूपतां दधाति । पयोधिरपि सरितां प्राप्यः, पक्षशातनभीतैः पर्वतैरन्तर्गर्भे इतः प्राप्तः, विद्रुममौक्तिकादेरुत्पत्तिभूमिश्चेति भावः ॥ ३९ ॥

त्रयीमिव क्षालितविश्वपङ्कां
त्रैलोक्यलक्ष्म्या इव सत्वशुद्धिम् ।
तपोधनास्सर्वे इमां भजन्ते
धर्मस्य निश्रेणिमिव प्रभूताम् ॥ ४० ॥

**त्रयीमिति**—त्रयीं त्रैवेदीमिव क्षालितविश्वपङ्कां निरस्तनिखिल-

[1] सामाथर्वणरूपेण—घ.  [2] सरित्सहस्रैरनुगम्यमाना.—घ.

पापां त्रैलोक्यलक्ष्म्याः सत्वशुद्धिं अन्तःकरणशुद्धिमिव स्थितां लोकत्रयेऽपि निर्मलप्रवाहयोगात्तथोत्प्रेक्षा, धर्मस्य प्रभूतां विशालां निश्रेणिं अधिरोहिणीमिव स्थितां, तत्प्राप्त्युपायत्वाल्लोकत्रयवर्तिप्रवाहपर्वत्रययोगाच्च तथोत्प्रेक्षा, इमां गङ्गां सर्वे तपोधनाः भजन्ते सेवन्ते, परमपुरुषार्थहेतुत्वादिति भावः ॥ ४० ॥

प्रख्यातगोत्रप्रभवेऽपि नित्यं
परिग्रहे भूयसि वर्तमाने ।
त्वयैव मां वेत्ति कलत्रवन्तं
नाथं नदीनामनयैव लोकः ॥ ४१ ॥

प्रख्यातेति—प्रख्यातगोत्रप्रभवे प्रसिद्धान्ववायसम्भवे भूयसि बहुतरे परिग्रहे कलत्रे रुक्मिण्यादिरूपे नित्यं सदा वर्तमानेऽपि, समुद्रपक्षे प्रसिद्धकलिन्द[1]शैलादिप्रभवे भूयसि यमुनादौ परिग्रहे वर्तमानेऽपीति योज्यम्, लोकः जनः मां त्वयैव कलत्रवन्तं वेत्ति प्रत्येति । नदीनां नाथं समुद्रं अनया गङ्गयैव कलत्रवन्तं वेत्ति । सर्वत्र प्रधानेनैव व्यपदेशो भवतीति भावः । सत्यापरितोषणार्थेयमुक्तिभङ्गी ॥ ४१ ॥

पतद्ग्रहे तिष्ठति रुक्मशैले
धर्मद्रवैरात्मभुवाऽर्च्यमानः ।
अस्याः प्रसूतिः परमस्य पुंसः
पादो नभस्सागरपारदृश्वा ॥ ४२ ॥

पतद्ग्रह इति—रुक्मशैले सुवर्णाचले मेरौ पतद्ग्रहे पततः पादोदकस्य ग्राहके पात्रविशेषे तिष्ठति सति आत्मभुवा चतुर्मुखेन कर्त्रा

1 'अद्रिगोत्रगिरिग्रावाचलशैल' इति कोशाद्गोत्रशब्दः शैलार्थक इति भावः.

घर्मस्य द्रवैः द्रवीभूतघर्मरूपैः स्वकीयकमण्डलुजलैः अच्यर्मानः क्षालनेन पूज्यमानः नभस्सागरपारदृश्वा त्रिविक्रमावतारे ऊर्ध्वाण्डपर्यन्तमुत्क्षेपणेन नभस एव सागरस्य पारदर्शी परमस्य पुंसः भगवतः पादः अस्याः गङ्गायाः प्रसूतिः उत्पत्तिभूः। ' अकर्तरि च कारके ' (पा. सू. ३–३–१९) इत्यधिकरणे क्तिन् प्रत्ययः। ' दृशेः कनिन् ' (पा. सू. ३–२–९४) इति पारदृश्वशब्दस्साधुः ॥ ४२ ॥

त्रिभिस्त्रिलोकीमनघैस्स्वपूरै-
स्तारागणाम्रेडितशीकरौघैः ।
विमार्जयन्ती वृजिनात्पुनीते
विष्णोरियं विक्रमवैजयन्ती ॥ ४३ ॥

त्रिभिरिति—विष्णोर्विक्रमवैजयन्ती विक्रमणस्य पताका विक्रमणसमयकृततच्चरणक्षालनोदकतया तद्वृत्तान्तप्रख्यापकत्वात्, इयं गङ्गा, तारागणैः नक्षत्रगणैः आम्रेडिताः पुनरुक्ताः बहुलीकृताः शीकरौघाः गगनोत्थिताः शीकरसमूहा येषां तैः अनघैः मनोहरैः त्रिभिः पातालभूमिगगनेषु [1]प्रसक्तैः स्वपूरैः स्वप्रवाहैः, त्रिलोकीं विमार्जयन्ती अलंकुर्वती सती ' [2]मृजू शौचालङ्कारयोः' (चु. १८४९) इति चौरादिको धातुः, वृजिनात् पापात् पुनीते पापादुद्धृत्य शुद्धिमतीं करोति। उद्धरणाङ्कके [3]शोधने पूङ्धातुर्वर्तते। अत एव मेघाद्विद्योतते विद्युदीतिवत् उपात्तविषयं पापस्यापादानत्वम्। तारागणाम्रेडितशीकरौघैरिति अस्य पातालगङ्गाप्रवाहेऽपि पातालप्रवेशस्थलोत्थितशीकरसम्भवादुपपत्तिः। ज्योतिश्चक्रस्य ऊर्ध्वाधःपरिवृत्तिपक्षाश्रयणेन वा तदुपपत्तिः छत्रिन्यायादजहल्लक्षणया वा। यद्वा तारागणानां आम्रेडितानि पुनरुक्तरूपाः तत्सदृशाः [4]शीकरौघा येषामिति योज्यम् ॥ ४३ ॥

[1] प्रवृत्तै–ङ. [2] मृजूष्–घ. [3] शोधनेऽत्र धातु–ङ. [4] शीकरौघा इति–घ.

अभ्रभ्रभागान्तरितैः पयोभिः
[1]सम्भिद्यमानैरियमन्तरेषु ।
नगेन्द्रमूर्धन्युपयाति शोभां
नक्षत्रमालेव गजेन्द्रकुम्भे ॥ ४४ ॥

अभ्रुग्नेति—इयं गङ्गा नगेन्द्रस्य हिमवतः मूर्धनि शिखरे अभुग्नैः अनिम्नैः [2]उन्नतैः भागैः प्रदेशैः कर्तृभिः अन्तरितैः व्यवहितैः स्वभावगतिं प्रतिबध्य पार्श्वद्वये विभक्तैः अन्तरेषु अवधिषु उन्नतभागप्रान्तेषु सम्भिद्यमानैः पुनर्मिलद्भिः पयोभिः जलैः गजेन्द्रस्य ऐरावतस्य कुम्भे नक्षत्रमालेव गजमण्डनस्थासक इव शोभामुपयाति । 'स्थासको नक्षत्रमाला' इति गजमण्डनप्रकरणे यादवः । [3]तस्यामप्यवान्तररेखाभेदाः क्वचित्क्वचिद्वियुज्य पुनस्संयुज्यन्त इति साम्यम् । सम्भिद्यमानैरिति कर्मकर्तरि प्रयोगः ॥ ४४ ॥

स्रोतोभिरस्याः परिपूर्यमाणः
सुधामयं सिन्धुमिवादधानैः ।
अपां पतिर्नित्यमविन्धनेन
ज्वालावता नूनमशोषितोऽभूत् ॥ ४५ ॥

स्रोतोभिरिति—सिन्धुं समुद्रं सुधामयं सुधाव्याप्तमिव आदधानैः कुर्वद्भिः अस्यास्स्रोतोभिः नित्यं परिपूर्यमाणः अपां पतिः समुद्रः [4]अबिन्धनेन जलेन्धनेन ज्वालावता ज्वलनेन बाडबेन अशोषितोऽभूत् । नूनमिति निश्चये । सर्वदा एतत्प्रवाह[5]प्रचयेन परिपूरणाभावे समुद्रजलमात्रस्य सद्य एव बाडबज्वालया शोषो भवेदित्यर्थः । सुधासेविनः [6]केनापि शोषो न भवेदिति भावः ॥ ४५ ॥

---

1 सम्भिद्यमानैरियमन्तरेषाम्. 2 उन्नतैः प्रदेशैः—ङ. 3 तस्या अप्यवान्तरभेदाः—घ. 4 अबिन्धनेन ज्वालावता—घ. ङ. ट. 5 प्रवेशेन—ञ. 6 केनापि नाशो न—घ.

भगीरथप्रार्थित[1]सिद्धिमेनां
पृथक्प्रवाहां पृथिवीं पुनानाम् ।
भस्मीकृतानां सगरात्मजानां
प्राहुस्सुधां प्रापितदेवभावाम् ॥ ४६ ॥

भगीरथेति—भगीरथप्रार्थितस्य सगरतनयभस्मभावप्रदेशागमनरूपस्य सिद्धिं साधनीम्, करणार्थे क्तिन् प्रत्ययः, पृथक्प्रवाहां पृथिवीं पुनानां सीतालकनन्दादिभिन्नानेकप्रवाहां सतीं भूमिं पवित्रयन्तीं एनां गङ्गां कपिलेन भस्मीकृतानां सगरात्मजानां प्रापितदेवभावां सुधां प्राहुः । सुधया हि देवत्वं प्राप्यत इति भावः ॥ ४६ ॥

स्थानानुरूपं प्रसृतैः प्रवाहै-
र्महद्भिरेषा मधुरावदातैः ।
प्रालेयशैलात्प्रथितानुभावा
प्रवर्तते वागिव वश्यवाचः ॥ ४७ ॥

स्थानेति—प्रथितानुभावा प्रख्यातमाहात्म्या एषा गङ्गा प्रालेयशैलात् हिमाचलात् स्थानानुरूपं निम्नोन्नतादिस्थानसदृशं यथा तथा प्रसृतैः मधुरैः आस्वादवद्भिः अवदातैः शुभ्रैः महद्भिः प्रवाहैः वश्यवाचः वशंवदवाणीकात् महाकवेः वागिव प्रवर्तते । वागपि हि प्रथितानुभावा प्रख्यापितशृङ्गारादिरसोचितनयनान्तावलोकनादिभावसूचकधर्मा- स्थानानुरूपं वर्णनीयतत्तद्विषयानुरूपं प्रसृतैः मधुरैः माधुर्यगुणवद्भिः अवदातैर्निर्दोषैः महद्भिः प्रवाहैः शीघ्रसन्दर्भैः प्रवर्तते । प्रथितेति प्रकृतार्थे अण्यन्तात्कर्तरि निष्ठा । अन्यत्र ण्यन्तात्कर्मणि निष्ठा । "अनुभावः प्रभावे स्यान्निश्चये भावसूचने" इति विश्वः ॥ ४७ ॥

---

1 सिन्धुमेनां—झ.

उदीरितास्तार्क्ष्यजवानिलेन
त्वन्नूपुरान्नूनमधीतनादाः ।
भवन्त्यमी स्वागतवादिनस्ते
भागीरथीसैकतराजहंसाः ॥ ४८ ॥

उदीरिता इति—तार्क्ष्यजवानिलेन गरुडवेगमारुतेन उदीरिताः प्रेरिताः अमी भागीरथीसैकतराजहंसाः गङ्गापुलिनास्थिता रक्तचञ्चुचरणा हंसाः नूनं प्रायेण त्वन्नूपुरादधीतनादाः ते तव स्वागतवादिनः कुशलप्रश्नवादिनः भवन्ति । गरुडवेगानिलप्रेरितत्वात् उड्डीय शब्दायमाना राजहंसाः त्वन्नूपुरादधीतनादा इति संबन्धात्तव स्वागतवादिन इव दृश्यन्त इत्युत्प्रेक्षा ॥ ४८ ॥

[1] प्रदीयते सुन्दरि [2] दूरकृष्टैः
दिव्येन ते शेखरसौरभेण ।
मयूरपिञ्छातपवारणश्री-
र्मन्दाकिनीहेमसरोजभृङ्गैः ॥ ४९ ॥

प्रदीयत इति—हे सुन्दरि! दिव्येन मनोहरेण तव शेखरसौरभेण आपीडपारिजातमाल्यगन्धेन दूरकृष्टैः दूरमाकृष्टैः मन्दाकिनीहेमसरोजभृङ्गैः गङ्गायाः कनककमलानां भृङ्गैः मयूरपिञ्छातपवारणश्रीः मयूरबर्हकृतछत्रशोभा प्रदीयते [3] वितीर्यते ॥ ४९ ॥

वहन्नसौ काञ्चनपद्मरेणून्
व्योमापगावीचिविहारशालिः ।
विलुप्तपत्राङ्कुरमानने ते
स्वेदोद्गमं न क्षमते समीरः ॥ ५० ॥

वहन्निति—काञ्चनपद्मरेणून् कनककमलपरागान् वहन्

---

[1] प्रतीयते–ग. घ. ट. [2] दूरदृष्टैः–घ. ट. [3] ‘वितीर्यते’ इति ङ-घ-कोशयोर्न दृश्यते.

व्योमापगावीचिविहारशीलः गङ्गातरङ्गेषु विहरणशीलः असौ समीरः ते तव आनने विलुप्तपत्राङ्कुरं उन्मृष्टपत्ररेखं[1] स्वेदोद्गमं न क्षमते न सहते, अपनयतीत्यर्थः ॥ ५० ॥

अस्यास्समीरैरपनीतगन्धा-
[2]न्यलक्तकैरङ्कितसैकतानि ।
स्वैरोपभोगं सुरसुन्दरीणां
विवृण्वते तीरलतागृहाणि ॥ ५१ ॥

अस्या इति—अस्याः समीरैः अपनीतगन्धानि अपहृतसौरभाणि अलक्तकैः चरणयावकैः आङ्कितसैकतानि चिह्नितपुलिनानि [3]तरिलतागृहाणि तीरप्ररूढलतामयानि गृहाणि सुरसुन्दरीणां अमरस्त्रीणां स्वैरोपभोगं निर्यन्त्रणसम्भोगं विवृण्वते स्फुटयन्ति ॥ ५१ ॥

रहस्त्वदा[4]श्लेषरसोत्सुकस्य
त्वदेकदृष्टेरपि विश्वदृष्टेः ।
वियन्नदी लोचनयोरसौ मे
विहन्ति [5]लक्षान्तरपक्षपातम् ॥ ५२ ॥

रह इति—रहः रहसि त्वदाश्लेषरसोत्सुकस्य त्वदालिङ्गनसुखे उत्कण्ठितस्य अत एव त्वदेकदृष्टेः [6]त्वय्येकं दृष्टिर्यस्य तथाभूतस्यापि विश्वदृष्टेः सर्वज्ञतया सर्वं करतलामलकवत्पश्यतोऽपि मे लोचनयोः असौ वियन्नदी लक्षान्तरपक्षपातं दृश्यान्तरासक्तिं विहन्ति प्रतिबध्नाति । कचित् [7]दृढव्यवस्थितासङ्गस्य हि नान्यत्रासङ्गो भवति । सर्वं विषयं

---

[1] मृष्टपत्ररेखं—ग. घ. [2] न्यलक्षकै—झ. [3] तीरलतामयगृहाणि. [4] श्लेषसमुत्सुकस्य—ट. [5] लक्ष्यान्तर—घ. [6] त्वय्येकत्र—ञ. [7] दृढव्यवस्थासङ्गस्य—घ. ट.

पश्यतश्च क्वचिद्विशेषपक्षपातो विषयान्तराणामपि [1]समत्वे न भवति। तथाभूतस्यापि मम विषयान्तरकौतुकं निरुणद्धीत्युक्त्या गङ्गायाः सर्वोत्तरं सौभाग्यं दर्शितम्। त्वदेकदृष्टेरित्यत्र स्त्रीत्वाविवक्षया नपुंसकलिङ्गस्यैकशब्दस्य समासानन्तरं त्वच्छब्दस्य शिवभागवतवत्समासः। अपिशब्दस्य काकाक्षिन्यायेनोभयत्रापि सम्बन्धः ॥ ५२ ॥

दिव्यं बदर्याश्रममेतदन्ते
देवैस्स्तुतं दक्षिणतः प्रतीयाः।
निःश्रेयसं दर्शयतीव वृत्त्या
नारायणो यत्र नरेण सार्धम् ॥ ५३ ॥

**दिव्यमिति**—एतदन्ते एतस्या गङ्गाया अन्तिके "अन्तोऽस्त्र्यव[2]सिते मृत्यौ स्वरूपे निश्चयेऽन्तिके" इति वैजयन्ती, दक्षिणतः दक्षिणभागे दिव्यं मनोज्ञं देवैः स्तुतं श्लाघितं बदर्याश्रमं बदर्यः कर्कन्धूवृक्षाः तत्प्रधानं मुनिस्थानं प्रतीयाः अवगच्छेः, पश्येत्यर्थः। प्रतिपूर्वादिणो लिङ्। यत्र बदरिकाश्रमे नरेण नराख्येन स्वांशेन सार्धं नारायणः वृत्त्या स्वचरित्रेण मुनिवृत्तिधर्मानुष्ठानेन निःश्रेयसं मोक्षं दर्शयतीव हस्ते गृहीत्वा लोकाय प्रदर्शयतीव। स्वानुष्ठानेन मोक्षसाधनधर्मप्रकाशनमेव [3]अविदूरविप्रकर्षात् मोक्षप्रकाशनमुत्प्रेक्ष्यते ॥ ५३ ॥

निवृत्तरागैः परिचर्यमाणो
नाथस्स्वयं नाकनिकेतनानाम्।
अन्यैरनन्यैरनुपालनीयं
धर्मं निजं धारयतीह शुद्धम् ॥ ५४ ॥

**निवृत्तेति**—इह बदरिकाश्रमे नाकनिकेतनानां देवानां नाथः नारायणः निवृत्तरागैः मुनिभिः परिचर्यमाणस्सन् अनन्यैः उपायान्तर-

---

[1] सत्त्वे न—ङ. [2] सितौ-ञ. [3] अदूर—घ. ञ. ट.

निरपेक्षैः [1] अन्यैः प्रपन्नैः अनुपालनीयं इदं दृष्ट्वा पश्चात् स्वयमनुष्ठानेन पालनीयं शुद्धं फलाभिसन्धिदोषरहितं निजं नित्यं धर्मं स्वयं धारयति अवस्थापयति । 'धृङ् अवस्थाने' (तुदादि–१४१२) इति धातोर्णिच् । स्वयमाचरणेन लोके वीतरागैरपि कर्तव्यतया प्रतिष्ठापयतीत्यर्थः । "निजमात्मीयनित्ययोः" इति विश्वः । अनन्यैरित्यत्रापेक्षाभावो नञर्थः । तथा शृङ्गारप्रकाशिकायां अपेक्षाभावमपि नञर्थमुक्त्वा [2] अभूषितकान्तः' इत्युदाहृतम् ॥ ५४ ॥

तृतीयवर्णप्रभवे [3] निजाङ्के
क्षीरत्नमुत्पाद्य विहारयोगी ।
इहात्मसम्मोहनलालसाना-
मपत्रपामप्सरसामकार्षीत् ॥ ५५ ॥

तृतीयेति—इह बदरिकाश्रमे विहारयोगी क्रीडया योगिवेषं परिगृह्य तिष्ठन् नारायणः तृतीयवर्णस्य [4] वैश्यजातेः प्रभवे उत्पत्तिस्थाने [3] निजाङ्के ऊराविति यावत् 'ऊरू तदस्य यद्वैश्यः' (पुरुषसूक्त) इति श्रुतेः, स्त्रीरत्नं उत्तमस्त्रियं ऊर्वशीमुत्पाद्य आत्मसम्मोहनलालसानां तपोविघ्नार्थं सौन्दर्येण स्वस्य वशीकरणे लोलुपानां अप्सरसां अपत्रपां अकार्षीत् । तदतिशायिसौन्दर्योर्वशीसञ्जननेन सर्वोत्तरभोग[5]सम्पादनशक्तिसत्त्व एव निज[6]वैराग्यस्य प्रकटनादिति भावः ॥ ५५ ॥

अन्यच्च दूरादनघं तदीयं
प्राग्दाक्षिणं भाति तपोवनाग्र्यम् ।
भजन्ति यस्मिन् पदयोरमुष्य
न्यासं शुभं निश्चितयोगलक्ष्म्याः ॥ ५६ ॥

अन्यच्चेति—दूरात् दूरे प्राक्सहचरितं दक्षिणं आग्नेय्यां

---

[1] 'अन्यैः'' इति ङ–कोशे नास्ति. [2] अभूषितः कान्तः–घ. ञ.
[3] निजाङ्के–ञ. [4] वैश्यस्य प्रभवे–घ. [3] निजाङ्के–घ.ञ. [5]सम्पादनेन शक्ति–घ ञ.
[6] वैराग्यप्रकट-घ.

दिशि स्थितं अनघं अघविरोधि तदीयं भगवत्सम्बन्धि अन्यच्च तपोवनाख्यं आश्रमप्रवरं भाति। वामनाश्रम इति उत्तरश्लोकाल्लभ्यते। यस्मिन् निश्चितयोगलक्ष्याः[1] निर्णीतयोगविषयाः भगवानेव सर्वपरविद्योपास्य इति निर्णयवन्तः अमुष्य भगवतः पदयोः शुभं श्रेयस्करं न्यासं भजन्ति सेवन्ते। वामनाश्रमे भगवच्चरणन्यासः प्रतिमारूपेणाद्यापि वर्तत इति प्रसिद्धिः ॥ ५६ ॥

अत्र स्थितं श्रान्तिजुषां मुनीनां
छायालकृष्णाजिनपल्लवेन।
वैरोचनेर्दानजलावसेका-
द्वर्धिष्णुना वामनपादपेन ॥ ५७ ॥

अत्रेति—श्रान्तिजुषां संसारश्रमभाजां मुनीनां छायालकृष्णाजिनपल्लवेन छायेति मुक्तिरध्यवसीयते, [2]संसारश्रमहरत्वात्, तां लाति दत्ते इति छायालः, 'ला दान' (अदादि १०५८) इति धातोः 'आतोऽनुपसर्गे कः' (पा. सू. ३-२-३) छायालः [3]कृष्णाजिनस्य पल्लवः विस्तारो यस्य तेन "पल्लवं त्वस्त्री प्रवाले विस्तृतावपि" इति प्रकाशः, वैरोचनेः [4]विरोचनापत्यस्य बलेः दानजलस्य पदत्रयदानसलिलस्य अवसेकात् वर्धिष्णुना [5]वर्धनशीलेन वामन एव पादपः तेन अत्र आश्रमे स्थितम् ॥ ५७ ॥

---

[1] लक्ष्या.-झ. ञ. ट. ग्र.-दे.-मु. [2] संसारश्रमं हृत्वा-घ. [3] अत्र विस्तारार्थकपल्लवशब्दान्वेषणेनार्थवर्णने कृष्णाजिनवत्पादपस्य भूयःप्रसिद्धिविरहात् प्रसिद्धविस्तारार्थकपदानि परित्यज्य प्रसिद्धकिसलयार्थकपल्लवपदप्रयोगात् पल्लवितपादपे नीरन्ध्रविस्तृतशीतलच्छायोपलब्धेः उत्तरत्र वामनस्य पादपत्वरूपणेन तदानुगुण्याच्च वामनीयकृष्णाजिनस्य पल्लवत्वरूपणमेवात्र कविहृदयङ्गममिति प्रतिभाति. [4] विरोचनस्यापत्यस्य-घ. ञ. [5] वृद्धिशीलेन-ञ.

इमानि च प्रेयसि तापसाना-
मेकान्तहृद्यानि तपोवनानि ।
इहैकपादस्थितिमेतदीयां
धर्मो युगे धारयतीव तुर्ये ॥ ५८ ॥

इमानीति—हे प्रेयसि! अतिशयेन प्रिये! इमानि च तापसानां तपस्विनां 'अण् च' (पा. सू. ५-२-१०३) इति तपश्शब्दान्मत्वर्थेऽण्प्रत्ययः, एकान्तहृद्यानि सर्वदा रमणीयानि तपोवनानि पश्येति शेषः । [1]तपोवनत्वमात्रं वा विधेयम् । इह तपोवनेषु एतदीयां एतेषां तापसानां सम्बन्धिनीं एकपादस्थितिं एकपादेनावस्थानं धर्मः तुर्ये चतुर्थे युगे कलियुगे धारयतीव एतेभ्योऽभ्यस्येव बिभर्तीत्यर्थः ॥ ५८ ॥

तमो निगीर्णं सकृदेव पुंसा-
मासीदतामाश्रमहव्यवाहाः ।
[2]इहौषधादीनि हवींषि भुक्त्वा
धूमोपलक्ष्यं ध्रुवमुद्वमान्ति ॥ ५९ ॥

तम इति—इह प्रदेशे आश्रमहव्यवाहाः आश्रमेष्वाहिता वह्नयः आसीदतां आगच्छतां पुंसां सकृत् युगपदेव निगीर्णं गिलितं तमः पापं, तमोगुणं वा, औषधादीनि औषधं व्रीहियवाद्योषधिप्रभवं चरुपुरोडाशादि, आदिशब्देन पयोदध्यादीनि गृह्यन्ते, तानि हवींषि भुक्त्वा ध्रुवं नूनं धूमोपलक्ष्यं धूमरूपेण दृश्यं उद्वमान्ति उद्गिरन्ति । [3]बहु युगपन्निगीर्णवतामुद्गारो भवतीति भावः ॥ ५९ ॥

---

[1] इमानि तपोवनानीत्यङ्गुल्या निर्देश इत्यभ्युपगमे पश्येति शेषपूरणादरो नातीवावश्यक इत्यभिप्रायेणाप्याह—तपोवनत्वमात्रमिति. [2] इहौषधाद्यानि—म्र. इहौषधाख्यानि—म्र. मुं. [3] भुक्तचरस्य तमसो धूमरूपेण उद्वमनकर्मताप्रतिपादनेन औषधपदार्थपरिशीलनेन चात्र औषधादिप्रयोगेण दुष्टाहारोद्वमनं लोकप्रसिद्धमिति भावोऽत्र कव्यभिमत इति भाति.

निजाश्रमेभ्यः प्रतिनिर्जिहाना
दूरादमी दर्शितपूर्णकुम्भाः ।
सत्याशिषस्सम्प्रति साधुवाक्यै-
रभ्यर्चयन्त्याहितवह्नयस्त्वाम् ॥ ६० ॥

**निजाश्रमेभ्य इति**—निजेभ्य आश्रमेभ्यः दूरात्प्रतिनिर्जिहानाः प्रत्युद्गच्छन्तः दर्शितपूर्णकुम्भाः दर्शितमङ्गल्यपूर्णकलशाः सत्याशिषः अवितथाशीर्वादाः अमी आहितवह्नयः आहिताग्नयः सम्प्रति इदानीं सन्निकर्षसमये साधुवाक्यैः त्वां अभ्यर्चयन्ति पूजयन्ति । उभयोः पूजायामपि देव्या बहुमानाय त्वामित्युक्तिः ॥ ६० ॥

समीपवृक्षेष्विह बद्धनीडाः
शिक्षोपपन्नां श्रुति[1]मुद्गृणन्तः ।
शकुन्तयश्शोणमुखा भजन्ते
सब्रह्मचर्यं सह तीक्ष्णधीभिः ॥ ६१ ॥

**समीपेति**— इह आश्रमे समीपवृक्षेषु मुनिजनावस्थानसन्निकृष्टतरुषु बद्धनीडाः कृतकुलायाः शिक्षोपपन्नां श्रुतिमुद्गृणन्तः सदाध्ययनसान्निधानात् शिक्षाख्यवेदाङ्गोक्तलक्षणयुक्तां श्रुतिमुच्चैर्वदन्तः शोणमुखाः अरुणवक्त्राः शकुन्तयः पक्षिणः शुकाः तीक्ष्णधीभिः कुशाग्रीयबुद्धिभिस्सह सब्रह्मचर्यं समानवेदव्रतचारित्वं सहाध्यायितां भजन्ते । ब्रह्मशब्दो वेदपरस्तदध्ययननियमस्य लक्षकः, तपोवाचित्वेन [2]तस्यैव वाचको वा । 'वेदस्तत्वं तपो ब्रह्म' इत्यमरः । तस्य चर्यमनुष्ठानम् । 'गदमदचरयमश्चानुपसर्गे' (पा. सू. ३–१–१००) इति [3]यत्प्रत्ययः ॥ ६१ ॥

---

[1] मुद्गिरन्तः–घ. झ. ट. [2] तस्यापि–ङ. [3] यत्–घ.

धर्मस्य सम्भूतिरिवाग्रतस्ते
सान्दीपिनेराश्रमभूमिरेषा ।
अधीतिनो यत्र मम [1] त्रिवेद्या-
मन्तस्स्थिरालोक इवान्तरात्मा ॥ ६२ ॥

धर्मस्येति—ते तव अग्रतः पुरतः एषा धर्मस्य सम्भूतिः, अधिकरणे क्तिन्प्रत्ययः, उत्पत्तिभूरिव स्थिता सान्दीपिनेराश्रमभूमिः । यत्र भूम्यां त्रिवेद्यां त्रयाणां वेदानां समाहारे [2] अधीतमनेनेत्यधीतिनः त्रिवेदीमधीतवतः मम अन्तरात्मा अन्तर्हृदये स्थिरालोक इव स्थिरप्रकाश इव जातः । इहाश्रमे सान्दीपिनेः सकाशाद्विद्याग्रहणादहं प्रबुद्धोऽस्मीत्यर्थः ॥ ६२ ॥

समग्ररत्नौघ[3]मिवाब्धितोयं
तारागणै[4]राप्तमिवान्तरिक्षम् ।
विशङ्कटं विन्ध्यहिमाद्रिमध्यं
पुण्यं प्रिये भूषितमेतदार्यैः ॥ ६३ ॥

समग्रेति—विशङ्कटं विशालं पुण्यं पवित्रं आर्यैः सज्जनैर्भूषितं एतत् विन्ध्यहिमाद्रिमध्यं [5] आर्यावर्तस्थानं, "आर्यावर्तः पुण्यभूमिर्मध्यं विन्ध्यहिमागयोः" इत्यमरः, समग्ररत्नौघं सम्पूर्णमणिनिकरं अब्धितोयमिव, तारागणैराप्तं व्याप्तं अन्तरिक्षमिव च भातीति शेषः । "विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्" इति "महाकुलकुलीनार्यसभ्यसज्जनसाधवः" [6] इति चामरः ॥ ६३ ॥

---

[1] त्रिवेद्यामास स्थिरालोकः—ग्र. दे. मु. [2] 'इष्टादिभ्यश्च' (पा. सू. ५-२-८८) इति सूत्रेण कर्तरीनिप्रत्ययोऽत्र बोध्यः. [3] मिवास्थितोऽयम्—ग्र. [4] रात्तमिवा—घ. ट. [5] आर्यावस्थानम्—ङ. [6] इति चामरसिंहः—ङ. ग्र.

पितृक्रियानिर्वृतजामदग्न्यं
क्षिप्तैनसां क्षेत्रमिदं कुरूणाम् ।
समेयुषां संयुगदीक्षयैत-
द्देहत्यजां दक्षिणतो न पन्थाः ॥ ६४ ॥

पितृक्रियेति—पितृक्रियया क्षत्रशोणितपूरितेषु ह्रदेषु पितृतर्पणेन निर्वृतजामदग्न्यं स्वस्थपरशुरामं, "स्वास्थ्ये नाशे च निर्वृतिः" इति वैजयन्ती, क्षिप्तैनसां निरस्तपापानां कुरूणां क्षेत्रमिदं एतत् कुरुक्षेत्रं समेयुषां प्राप्तवतां संयुगदीक्षया युद्धव्रतेन देहत्यजां दक्षिणतो दक्षिणभागे पन्थाः धूमादिमार्गः पुनरावृत्तिमान् नास्ति, किन्तु ब्रह्मपदप्राप्तिहेतुः पुनरावृत्तिरहितोऽर्चिरादिरूप उत्तरतः पन्थास्तेषामित्यर्थः । अर्चिरादिधूमादिमार्गौ गगनमार्गे दक्षिणोत्तरनियतावित्यागमप्रसिद्धिः । ज्योतिर्विदस्तु अश्विन्यादितारात्रिकत्रिककृते वीथीनवके प्रत्येकं त्रिवीथिकाः पितृयानयोगियानदेवयानाख्या दक्षिणमध्यमोत्तरभागनियताः पितृलोकब्रह्मपददेवलोकप्राप्तिहेतवस्त्रयो मार्गा इत्याहुः । तदनुरोधे तु दक्षिणतो न पन्था इत्यनेन पितृपदप्राप्तिव्यावर्तनया सामान्यतः तदुत्तरपदावाप्तिर्दर्शिता ॥ ६४ ॥

सव्ये भवत्यास्सरयूसमेता
रम्येयमाभाति पुरी रघूणाम् ।
दयाविपाकेन चराचराणां
दिव्यं पदं यत्र दिदेश रामः ॥ ६५ ॥

सव्य इति—भवत्याः सव्ये वामे भागे सरय्वाख्यया नद्या समेता रम्या इयं रघूणां पुरी अयोध्या आभाति । यत्र अयोध्यायां रामः दयाया विपाकेन परिणामेन चराचराणां जङ्गमस्थावररूपाणां सर्वेषामपि प्राणिनां दिव्यं पदं दिदेश परमपदं दत्तवान् । रघूणामिति

क्षत्रियविशेषवाचिनो रघुशब्दस्य तद्वंश्येषु सर्वेषु राजसु लक्षणया बहुवचनमिति केचित्। अन्ये तु—इक्ष्वाकुनाम्नो देशस्य रघुसंज्ञाऽप्यस्तीति '[1]तस्य राजन्यपत्यवत्' (वा. २६६९) इति विहितस्य प्रत्ययस्य तद्राजसंज्ञया बहुषु लुगित्याहुः। मतद्वयमपि भोजराजेन [2]शब्दप्रकाशिकायामुक्तम् ॥ ६५ ॥

तमालषण्डैस्तमसेव दृष्टै-[3]
वामेतरो वामविलोचने नः।
वसुन्धराकुन्तलकान्तिचोरैः
कान्तैरसौ भाति कलिन्दशैलः ॥ ६६ ॥

**तमालेति**—हे वामलोचने! रुचिरनयने! "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति विश्वः, नः अस्माकं वामेतरः दक्षिणः असौ कलिन्दशैलः तमसेव दृष्टैः अन्धकारवद्दृष्टैः वसुन्धरायाः कुन्तलानां कान्तेश्चोरैः भूमेः केशैरिव प्रेक्षणीयैः कान्तैः मनोहरैः तमालषण्डैः तापिञ्छतरुसमूहैः भाति। तमसेवेत्युपमाने उपमेयविभक्तिः विशेषणे विशेष्यविभक्तेरिव [4]साधुत्वाय ॥ ६६ ॥

दिवाकरेणात्र बिलेषु नूनं
बन्दीकृतानां बहुलक्षपाणाम्।
छायाविशेषैः [5]प्रचितैस्तदर्हा-
माप्यायनामारचयन्ति वृक्षाः ॥ ६७ ॥

**दिवाकरेणेति**—अत्र कलिन्दशैले बिलेषु गुहारन्ध्रेषु दिवाकरेण बन्दीकृतानां प्रसह्य हृत्वा निवेशितानां बहुलक्षपाणां अपरपक्षरात्रीणां [6] तदर्हां तदुचितां अन्धकारातिशयसम्पादनरूपां आप्यायनां

---

[1] अस्य 'क्षत्रियसमानशब्दाज्जनपदात्' इत्यादिः. [2] शृङ्गारप्रकाशिका-घ. [3] सृष्टै-दे. मु. [4] साधुत्वात्-घ. ट. [5] रचितैः-पा. [6] कृष्णपक्षरात्रीणाम्-ङ.

पोषणं वृक्षाः प्रचितैः समृद्धैः छायाविशेषैः छायातिशयैः आरचयन्ति । नूनमित्युत्प्रेक्षायाम् । गुहासु स्थितमन्धतमसं अतिशयोक्त्या सूर्येण बन्दीकृता बहुलक्षपाः, तासां वृक्षैः निजच्छायासमृद्धिभिः दयालुभिः कारास्थित[1]पुरुषाणां तदुचिताहारप्रदानैराप्यायना क्रियत इवेत्युत्प्रेक्ष्यते । आप्यायनेति प्यायतिधातोराङ्युक्तात् ण्यन्तात् 'ण्यासश्रन्थो युच्' (पा. सू. ३–३–१०७) इति स्त्रियां युच्प्रत्ययः ॥ ६७ ॥

इतः प्रभूतात्पितुराव्रजन्ती
कालिन्द्यसौ कालियदोषमुक्ता ।
समेत्य सख्येव सुरस्रवन्त्या
सरित्पतिं शुद्धिमती प्रयाति ॥ ६८ ॥

इत इति—इतः अस्मात् कलिन्दशैलादेव प्रभूतात् समृद्धात् पितुः आव्रजन्ती आगच्छन्ती कालियस्य दोषेण विषरूपेण मुक्ता अत एव शुद्धिमती निर्मला असौ कालिन्दी यमुना सख्येव सुरस्रवन्त्या गङ्गया समेत्य सरित्पतिं समुद्रं प्रयाति । यथा समृद्धे पितृगृहे भोगान् भुक्त्वा स्थिता कुलाङ्गना [2]तत्र दैवात्सञ्जातदोषा ततस्तं त्यक्त्वा प्रायश्चित्तादिना पूता च [3]स्त्रीसाहाय्यसम्पन्ना सती पतिगृहं गच्छति तद्वदिति ध्वन्यते ॥ ६८ ॥

स्वमूलशैलस्य विभाति शृङ्गे
धातूपरक्ते सवितुस्सुतेयम् ।
महावराहस्य महीव पूर्वं
दंष्ट्राङ्कुरे दानवशोणिताङ्के ॥ ६९ ॥

स्वमूलेति—इयं सवितुस्सुता यमुना धातुभिः गैरिकादिभिः उपरक्ते स्वमूलशैलस्य स्वप्रभवस्य कलिन्दपर्वतस्य शृङ्गे पूर्वं प्रलयाव-

---

[1] पुरुषैः—ङ. [2] कुत्रचिद्दैवात्—घ. [3] स्त्रीसहाय—घ.

साने दानवशोणिताङ्के हत[1]हिरण्याक्षासुरशोणितचिह्ने वराहस्य दंष्ट्राङ्कुरे दंष्ट्राग्रे महीव विभाति ॥ ६९ ॥

**यमस्वसुस्तन्वि यथार्थनामा**
**मान्या समीपे मधुरा विभाति ।**
**सुपर्वणां यत्र सभां सुधर्मां**
**भूमेरहं भूषणतामनैषम् ॥ ७० ॥**

**यमस्वसुरिति**—हे तन्वि! यमस्वसुः यमुनायाः समीपे यथार्थनामा मनोज्ञत्वादन्वर्थनामा मधुरापुरी विभाति। यत्र मधुरायां सुपर्वणां देवानां सभां सुधर्मां अहं भूमेः भूषणतामनैषम्। [2] सुधर्माशब्दस्याकारान्तत्वं प्राक् तत्र तत्र व्युत्पादितम् ॥ ७० ॥

**पिबत्यसौ पश्चिमदक्षिणाशां**
**नूनं खगेशोऽयमनूनवेगः ।**
**विलोकितानामिह न व्यवस्था**
**नेदीयसां देवि दवीयसां वा ॥ ७१ ॥**

**पिबतीति**—अनूनवेगः समग्ररयः अयमसौ खगेशः गरुडः पश्चिमाया दक्षिणस्याश्च दिशोरन्तरालं पश्चिमदक्षिणाशा "दिङ्नामान्यन्तराले" (पा.सू. २-२-२६) इति बहुव्रीहिः, सा चासावाशा च द्वारकाधिष्ठिता दिक् तां नूनं पिबति। कथमन्यथा युगपत्पानं विना गमनेन एतावान्मार्गः क्षणेन पश्चात्क्रियेतेति भावः। इदमेवावलम्ब्याह—विलोकितानामिति। हे देवि! इह मार्गे विलोकितानां नेदीयसां अतिसन्निकृष्टानां दवीयसां अतिविप्रकृष्टानां वा व्यवस्था नास्ति। नेदीयस्त्वेन दृष्टाः शैलवृक्षा-

---

[1] हिरण्यासुर—घ. ट. [2] 'डाबुभाभ्यामन्यतरस्याम्' (पा. सू. ४-१-१३) इत्यस्य डाबन्तत्वादाकारान्तता बोध्या.

दयः क्षणेन पश्चाद्भागे दवीयांसो दृश्यन्ते । दवीयस्त्वेन दृष्टा अपि पुरतः क्षणेन नेदीयांसो दृश्यन्त इत्यर्थः । नेदीयसामिति [1]आन्तिक-शब्दादीयसुन्प्रत्ययः । 'अन्तिकबाढयोर्नेदसाधौ' (पा. सू. ५-३-६३) इति [2]नेदादेशः । दवीयसामिति दूरशब्दात् ईयसुन्प्रत्ययः । 'स्थूलदूर-युवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः' (पा. सू. ६-४-१५६) इति यणादिलोपो गुणश्च । अयमिति गरुडस्य स्वरूप-परामर्शः, असाविति प्रकारपरामर्श इति न पौनरुक्त्यम् ॥ ७१ ॥

त्रयीमयस्तन्वि तवौपवाह्यः
कालक्रमादापततो [3] धरण्याः ।
सामाभिरामध्वनिभिः समन्तात्
पक्षानिलैर्मार्जयतीव दोषान् ॥ ७२ ॥

त्रयीमय इति—हे तन्वि ! त्रयीमयः वेदत्रयरूपः तव औपवाह्यः वाहनभूतो गरुडः "औपवाह्यो राजवाहः" इति हलायुधः' सामान्येव [4]अभिरामध्वनयो येषां तैः पक्षानिलैः प्रयोज्यकर्तृभिः कालक्रमात् कालपरिपाट्या धरण्याः आपततः आपन्नान् गगने समुत्थितानां पक्षानिलानां क्रमेण भूप्रासत्त्या समन्तात् सर्वतः [5] दोषान् [6]भूगतानशुभान् मार्जयतीव शोधयतीव । हस्तादिसम्मार्जनेनेव [7]निश्शेषं कारयतीत्यर्थः । 'मृजू शुद्धौ' (अदादि १०६६) इति धातोः हेतुमण्णिच् । 'मृजूष् शौचालङ्कारयोः' (चुरादि १८४९) इति [8]धातोर्वा स्वार्थे णिच् । अस्मिन् पक्षे पक्षानिलैरिति करणे तृतीया ॥ ॥ ७२ ॥

1 'द्विवचनविभज्योपपदे तरबीयसुनौ' 'अजादी गुणवचनादेव' (५-३-५७, ५-३-५८) इतीयसुन् प्रत्यय इति भावः. 2 नेदादेश इति । अन्तिकशब्दस्येत्यादिः. 3 कालक्रमादापतितान्. 4 अभिरामा—ङ. 5 परितः—घ. 6 भूगतान्य-शुभानि—ङ. 7 'निर्दोषं' इति पाठः स्यात्. 8 धातोः स्वार्थे—घ. ढ.

आ पश्चिमादम्बुनिधेरवन्ध्या
शरत्प्रसूतैः क्षितिरस्य सस्यैः ।
दिवौकसां दर्शितभागधेया
दिशत्यसौ लोचनदिष्टवृद्धिम् ॥ ७३ ॥

**आ पश्चिमादिति**—आ पश्चिमादम्बुनिधेः पश्चिमाम्बुधिपर्यन्तं 'आङ् मर्यादाभिविध्योः' (पा. सू. २–१–१३) इति समासस्य महाविभाषया वैकल्पिकत्वादसमासः, अवन्ध्या अनिष्फला शरत्प्रसूतैः [1]शरत्काले फलितैः सस्यैः दिवौकसां दर्शितभागधेया शरदि नवान्नप्राशनात् प्राक् [2]कर्तव्य आग्रयणे हविर्भागवतां देवानां प्रदर्शितकरा "भागधेयः करो बलिः" इत्यमरः, असावस्य देशस्य क्षितिः लोचनदिष्टवृद्धिं दिशति लोचनानां भाग्यवृद्धिं प्रयच्छति ॥ ७३ ॥

सरित्प्रवाहैर्व्यतिकीर्यमाणैः
सङ्कल्पयोनेरिव शिल्पभेदैः ।
पश्य प्रिये त्वं परिवृत्य किञ्चि-
द्दिव्योपमान् जानपदान् विशेषान् ॥ ७४ ॥

**सरित्प्रवाहैरिति**—हे प्रिये ! सङ्कल्पयोनेः मन्मथस्य शिल्पभेदैः उत्तमवस्तुनिर्माणकलाकौशलविशेषैरिव स्थितैः, उद्दीपनविभावत्वात् तथोत्प्रेक्षा, व्यतिकीर्यमाणैः [3]परस्परं सङ्कीर्यमाणैः, कर्मकर्तरि प्रयोगः, सरित्प्रवाहैरुपलक्षितान् दिव्योपमान् दिव्यदेशसदृशान् जानपदान् जनपदाः कोसलादिमण्डलानि "नीवृज्जनपदौ देशविषयौ तूपवर्तनम्" इत्यमरः, तत्सम्बन्धिनः विशेषान् अवयवान् तदेकदेशभूतान् प्रदेशान्,

---

[1] शरत्कालफलितैः–घ. ट. [2] कर्तव्याग्रहायणे–घ. [3] परस्परसंकीर्यमाणैः–घ. ट.

रमणीयभागान् वा "विशेषोऽवयवे भेदे द्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवः, त्वं किञ्चित्परिवृत्य पश्चान्मुखी[1]भूय पश्य ॥ ७४ ॥

तवैष जीर्णश्चलयन् पुरस्ता-
द्विद्युन्मयीं वेत्रलतां प्रतन्वीम् ।
बिभर्ति शुद्धो धृतकञ्चुकश्रीः
[2] प्राज्ञः प्रतीहारपदं पयोदः ॥ ७५ ॥

तवेति—जीर्णः जरठः तव पुरस्तात् पुरतः प्रतन्वीं तनीयसीं विद्युन्मयीं तटिद्रूपां वेत्रलतां चलयन् कम्पयन् 'कम्पने चलिः' (घटादिः) इति[3] मित्संज्ञया ह्रस्वः, शुद्धः निर्मलः, एकत्र धवलः, अन्यत्र ऋजुमनाः, धृतकञ्चुकश्रीः धृता कञ्चुकस्य सर्पनिर्मोकस्य श्रीः कान्तिः येन, पक्षे—धृतवारवाणशोभः "कञ्चुकस्सर्पनिर्मोके कवचे वारवाणके" इति वैजयन्ती, एष पयोदः मेघश्शरत्कालिकः नूनं प्रतीहारपदं दौवारिकस्थानं बिभर्ति। जनापसरणाय तव पुरतो गच्छन् सौविदल्ल इव दृश्यत इत्युत्प्रेक्षा ॥ ७५ ॥

आदाय शालिस्तबकानदूरात्
प्राप्ता शुकश्रेणिरसौ विभाति ।
त्वदागमप्रीतशरत्प्रयुक्ता
वैहायसी वन्दनमालिकेव ॥ ७६ ॥

आदायेति—शालीनां स्तबकान् गुच्छान् आदाय मुखेन गृहीत्वा अदूरात्प्राप्ता समीपे समागता असौ शुकश्रेणिः त्वदागमेन तवागमनेन प्रीतया शरदा प्रयुक्ता कल्पिता वैहायसी विहायस्याकाशे भवा वन्दनमालिका तोरणमालेव विभाति ॥ ७६ ॥

---

[1] भूत्वा पश्य—घ. ट. [2] प्रायः—ग्र. दे. मु. [3] कम्पनार्थस्य चलेर्घटादितया 'घटादयो मितः' इति मित्संज्ञया 'मितां ह्रस्वः' इति ह्रस्व इति बोध्यम्.

आरक्तफुल्लैररविन्दिनीनां
सूनैरमी नूतनसूर्य[1]कल्पैः ।
त्वत्कान्तिमाध्वीमनुभूय [2]रक्तै-
र्नेत्रैरिवाभान्ति [3]समुद्रदाराः ॥ ७७ ॥

आरक्तेति—अमी [4]समुद्रस्य दाराः सरितः आरक्तफुल्लैः समन्तात् अरुणैर्विकसितैश्च, अत एव नूतनसूर्यकल्पैः बालसूर्यसदृशैः अरविन्दिनीनां नलिनीनां सूनैः कुसुमैः[5] त्वत्कान्तिमेव माध्वीं आसवं अनुभूय पीत्वा रक्तैर्नेत्रैरिवाभान्ति ॥ ७७ ॥

करेणुकाभिस्सह गाहमानाः
पयः प्रसन्नं शरदापगानाम् ।
अमी निमीलन्नयनाः कपोलै-
राविर्मदैराविलयन्ति नागाः ॥ ७८ ॥

करेणुकाभिरिति—प्रसन्नं अच्छं शरदापगानां शरन्नदीनां पयः करेणुकाभिः करिणीभिः सह गाहमानाः प्रविशन्तः निमीलन्नयनाः अमी नागाः गजाः आविर्मदैः अविर्भूतमदजलैः कपोलैः आविलयन्ति आविलं कुर्वन्ति ॥ ७८ ॥

स एष सप्तच्छदरेणुजालैः
क्रीडन्निवालिम्पति गन्धवाहः ।
वन्यद्विपानां व्रजतां प्रतीपं
मदप्रवाहैर्मलिनान् कपोलान् ॥ ७९ ॥

स इति—स एषः पुरोवर्तितया परिदृश्यमानः गन्धवाहः सप्तच्छदानां वृक्षविशेषाणां रेणुजालैः पुष्पपरागसमूहैः प्रतीपं व्रजतां

---

[1] कल्पाः—घ. ट. [2] रक्तै—झ. [3] समुद्रधाराः—घ. ट. [4] समुद्रस्य धाराः—घ. ट. [5] कमलैः—अ.

सप्तच्छदगन्धेन प्रतिगजभ्रमात् प्रत्यागच्छतां वन्यद्विपानां मदप्रवाहैः मलिनान् कपोलान् क्रीडन्निव आलिम्पति । यथा क्रीडन्तः प्रत्यागच्छतां [1]वयस्यादीनां अङ्गरागद्रव्यादिपरागैः क्षिप्तैर्लिम्पन्ति तद्वदिति भावः ॥ ७९ ॥

अभिन्नवर्णा गृहिणीव भव्या
वेलाटवी वारिनिधेर्विभाति ।
नित्यानुभूतामपि नव्यबुद्ध्या
रसैरसौ निर्विशतीव हृष्यन् ॥ ८० ॥

अभिन्नवर्णेति—अभिन्नवर्णा समुद्रेण समानवर्णा वारिनिधेर्वेलाटवी भव्या योग्या गृहिणी पत्नीव विभाति । ब्राह्मणत्वादिना सवर्णा हि पत्नी योग्या भवति । असौ वारिनिधिश्च नित्यानुभूतां सदोपभुक्तामप्येनां हृष्यन् रसैः जलैः, रागैरित्यपि प्रतीयते, नव्यबुद्ध्या नूतनत्वधिया निर्विशतीव उपभुङ्क्ते इव । सदा तरङ्गहस्तकृतसरभसपरिरम्भादिनेति भावः । चिरपरिचितेष्वपि वस्तुषु रागो [2]नूतनताबुद्धिं करोतीति स्थितिः ॥ ८० ॥

तरङ्गवेगात्तरलाम्बुधारी[3]
गृह्णात्यसौ गारुडरत्नवर्णः ।
वसुन्धरावारिरुहस्य पार्श्वे
सिद्धोदयां श्यामल[4]पत्रशोभाम् ॥ ८१ ॥

तरङ्गेति—तरङ्गाणां वेगात् तरलाम्बुधारी चञ्चलमम्बु धरन् गारुडरत्नवर्णः गरुडमणिरिव श्यामलवर्णः असौ समुद्रः वसुन्धरा-

[1] वयस्यादीनां गन्धद्रव्यादि. [2] नूतनतां करोतीति–घ. ट. [3] तरलाम्बुराशिः–ग्र. दे. मु. [4] पत्त्ररेखाम्–घ. ट.

वारिरुहस्य जम्बूद्वीपमण्डलरूपवसुन्धरैव वारिरुहं तस्य पार्श्वे सिद्धोदयां सम्पन्नजननां श्यामलपत्रस्य शोभां गृह्णाति । पद्मपत्रमपि तरलानम्बुकणान् धारयतीति भावः । जम्बूद्वीपमभितो मण्डलाकारेण स्थिते लवणसमुद्रे दृश्यमानद्वारकाधिष्ठितपाश्चिमभागमात्रं विषयीकृत्य पद्मपार्श्ववृत्तिपद्मपत्रशोभाशालित्वोक्तिः । लवणसमुद्रमात्रविषयत्वे तु सर्वत्र पार्श्वे परितस्सिद्धोदयां श्यामलपत्राणां निरन्तरप्ररूढानां शोभामिति व्याख्येयम् ॥ ८१ ॥

**विभाति पर्यन्तमही पयोधेः**
**फेनैरसौ वीचिकरप्रकीर्णैः ।**
**अभ्यर्चितानां त्रिदशातिथीना-**
**माहारशेषैरिव पर्युदस्तैः ॥ ८२ ॥**

**विभातीति**—असौ पयोधेः पर्यन्तमही पार्श्वभूमिः वेला वीचिकरप्रकीर्णैः तरङ्गहस्तविक्षिप्तैः फेनैः अभ्यर्चितानां मथनसमये अमृताहारेण पूजितानां त्रिदशानामेवातिथीनां पर्युदस्तैः भुक्त्वोत्थानानन्तरं ततोऽन्यत्र क्षिप्तैः आहारस्य शेषैरिव विभाति ॥ ८२ ॥

**प्रवालवह्नौ परिदीप्यमाने**
**मुञ्चन्त्यसौ मौक्तिकलाजवर्षम् ।**
**अमुष्य वेला धृतवेपथुस्ते**
**वैवाहिकीं स्मारयति स्म वेलाम् ॥ ८३ ॥**

**प्रवालेति**—परिदीप्यमाने समन्ताच्छोभमाने, ज्वलति च, प्रवालो विद्रुम एव वह्निः तस्मिन् मौक्तिकान्येव लाजाः तेषां वर्षं मुञ्चन्ती धृतवेपथुः तरङ्गाकुलतया धृतकम्पा असौ अमुष्य समुद्रस्य

वेला जलवृद्धिः [1] "वेलाऽब्धिजलवर्धनं" इति यादवः, ते तव वैवाहिकीं विवाहप्रयोजनां वेलां विवाहसमयं स्मारयति। लाजहोमस्य सात्विककम्पस्य च तदानीं सत्त्वात्। [2] स्मशब्दो वाक्यालङ्कारे॥ ॥ ८३ ॥

स्वसम्भवं सम्प्रति पारिजातं
दृष्ट्वा चिरप्रोषितसन्निवृत्तम्।
आलिङ्गनार्थीव तरङ्गहस्ता-
नाविर्मणीनुन्नमयत्युदन्वान्॥ ८४ ॥

**स्वसम्भवमिति**—उदन्वान् समुद्रः स्वसम्भवं स्वात्मजं सम्प्रति चिरप्रोषितसन्निवृत्तं चिरं पोषितं ततः प्रतिनिवृत्तं पारिजातं दृष्ट्वा आलिङ्गनार्थीव आविर्मणीन् [3] आविर्भूतान्तर्गतरत्नान् आविर्भूतकटकादिरत्नांश्च तरङ्गहस्तान् उन्नमयति उद्गमयति॥ ८४ ॥

अहीन्द्रनिश्वासमरुत्प्रणुन्नै-
रावर्तसम्भेदिभिरेष फेनैः।
उपायनं दित्सुरिवाम्बुधिस्ते
मुक्तातपत्राणि मुहुः प्रसूते॥ ८५ ॥

**अहीन्द्रेति**—एषः अम्बुधिः ते तव उपायनं उपहारं दित्सुरिव अहीन्द्रनिश्वासमरुत्प्रणुन्नैः महासर्पाणां श्वासवायुभिः प्रेरितैः आवर्तसम्भेदिभिः जलभ्रमैः सह सम्मेलनवद्भिः फेनैः मुहुः पुनःपुनः मुक्तातपत्राणि मौक्तिकच्छत्राणि प्रसूते। प्रणुन्नैरिति 'उपसर्गादसमासेऽपि' (पा. सू. ८–४–१४) इति णत्वम्॥ ८५॥

---

[1] 'पूर्णिर्वेलाम्बुवर्धनम्' इति मुद्रितकोशे दृश्यते। [2] इहशब्दो–ङ. इवशब्दो–ञ. अनेन मूले 'स्मारयतीह' इति 'स्मारयतीव' इति वा पाठोऽभिमत इति भाति। इहेति पाठे वाक्यालङ्कारताकल्पनं विनैव पदेत्यस्य अस्मिन् देशे काले वा इत्यर्थवर्णनमप्युपपन्नं भवति [3] आविर्भूतान्तर्गतरत्नांश्च–ज.

[1] वेलाचलादर्भकपञ्चवक्त्रान्
विहङ्गपातेन जिघृक्षमाणान् ।
निमज्जनोन्मज्जनवेगभूम्ना
मातङ्गयादांसि विलोभयन्ति ॥ ८६ ॥

वेलाचलादिति—मातङ्गयादांसि गजाकारास्समुद्रगता जलजन्तवः वेलाचलात् वेलास्थितात् पर्वतात् विहङ्गानां पातेन जिघृक्षमाणान् यथा [2] विहङ्गा गगनात् पतित्वा मत्स्यादीन् गृह्णन्ति, एवं वेलाचलात् पतित्वा ग्रहीतुमिच्छतः अर्भकान् शिशून् पञ्चवक्त्रान् सिंहान् निमज्जनोन्मज्जनयोः वेगभूम्ना वेगातिशयेन विलोभयन्ति प्रतारयन्ति । निमज्जनेन तेषां पातं वितथीकृत्य पुनरप्युन्मज्जनेन प्रलोभयन्तीत्यर्थः ॥ ८६ ॥

प्रवालमुक्तामणिभिः प्रदिष्टैः
प्रत्याहृतैः पत्रलताङ्कुराद्यैः ।
अन्योन्यभूषापरिवृत्तिलीलां
करोत्यसौ तीरभुवा [3] पयोधिः ॥ ८७ ॥

प्रवालेति—असौ पयोधिः प्रदिष्टैः दत्तैः प्रवालमुक्तामणिभिः विद्रुममौक्तिकैः प्रत्याहृतैः पत्रलताङ्कुराद्यैः पर्णलताप्ररोहप्रभृतीभिश्च, कूलभुवा वेलाभूम्या सह अन्योन्यभूषापरिवृत्तिलीलां परस्पर[4]भूषाविनिमयक्रियां "लीला विलासक्रिययोः" इत्यमरः, करोति । पत्रलताङ्कुराद्यैरित्यत्र [5]पत्ररेखाप्रतीतिर्न विवक्षिता । तस्याः परिवृत्त्ययोग्यत्वात् । किन्तु परिवृत्तियोग्यनायिकाभूषणोपलक्षणमात्रं पत्रादिग्रहणम् । तथैव विवक्षायां तु नायिकोचितपत्ररेखाया नायके लेखनमेव परिवृत्तिरत्रेति नेयम् ॥ ८७ ॥

---

[1] वेलाचलागर्भक–ग्र.  [2] विहङ्गमाः पतित्वा–घ.  [3] कूलभुवा–ग्र. दे. मु.
[4] भूषणविनिमयक्रीडां करोति–ग. ङ.  [5] पत्रलेखा–ङ.

[1] वर्णं महानीलमणिप्रकाशैः
सितद्युतिं मौक्तिकचन्द्रिकाभिः ।
बिम्बाधरं विद्रुमभङ्गभेदैः
व्यनक्त्ययसौ तन्वि तवाम्बुराशिः ॥ ८८ ॥

वर्णमिति—हे तन्वि ! असौ अम्बुराशिः महानीलमणिप्रकाशैः इन्द्रनीलमणिविशेषणामालोकैः तव वर्णं, मौक्तिकचन्द्रिकाभिः मुक्ताफलप्रभाभिः तव स्मितद्युतिं, विद्रुमभङ्गानां भेदैर्विशेषैः उत्तमप्रवालशकलैः बिम्बाधरं बिम्बसदृशमधरं च व्यनक्ति । इह महानीलमणिप्रकाशादयः त्वत्कान्त्यादिव[2]द्भ्राजन्त इत्यर्थः ॥८८॥

विवृण्वती बाडववह्निदीप्तिं
विद्योतते विद्रुमपङ्क्तिरेषा ।
देवेन सम्पीडितयोस्त्रिधाम्ना
दैत्येन्द्रयोरान्त्रपरम्परेव ॥ ८९ ॥

विवृण्वतीति—बाडवस्य बडबामुखप्रभवस्य वह्नेर्दीप्तिं विवृण्वती प्रकाशयन्ती [3]तद्वत्प्रकाशमानेति यावत्, एषा विद्रुमाणां पङ्क्तिः त्रिधाम्ना देवेन नारायणेन सम्पीडितयोः [4]समुद्रमध्ये मृदितयोः दैत्येन्द्रयोः मधुकैटभयोः आन्त्राणां पुरीतदाख्यानां मांसानां परम्परेव विद्योतते । "अन्त्री पुरीतदान्त्रं स्यात्" इति वैजयन्ती ॥ ८९ ॥

महावराहस्य खुराभिघातैः
क्षुण्णः प्रविद्धो रघुवीरबाणैः ।
विसंस्थुलद्वीपतयोपलक्ष्यै-
र्वीरव्रणैरेष विभाति रूढैः ॥ ९० ॥

---

[1] ग. ङ. ञ.–कोशेषु 'विवृण्वती' इत्युत्तरश्लोकानन्तरं 'वर्णं महानीलमणि' इत्ययं श्लोको व्याख्यातः परिदृश्यते. [2] भ्राजन्त–ङ. [3] तद्वत्प्रतीयमानेति–ङ. ञ. [4] समरमध्ये–घ.

महावराहस्येति—महावराहस्य खुराभिघातैः खुरप्रवराभिघातैः क्षुण्णः चूर्णितः रघुवीरस्य रघुश्रेष्ठस्य बाणैः राक्षसेषु मुक्तैः प्रविद्धः एषः समुद्रः विसंस्थुलद्वीपतया निम्नोन्नतान्तरीपतया "स्थपुटं तु विसंस्थुलम्" इति शब्दरत्नाकरः, उपलक्ष्यैः दृश्यैः रूढैः वीरव्रणैः वीराणामायुधवेधप्रभवा व्रणा वीरव्रणाः तैर्विभाति । महावराहखुराभिक्षुण्णस्य रघुनाथबाणविद्धस्य चास्य मध्ये मध्ये [1] विसंस्थुला द्वीपा वीरव्रणवत् भान्तीत्यर्थः ॥ ९० ॥

सम्भृत्य तोयं सहसोज्जिहानान्
सेन्द्रायुधान् पश्य घनान् सनादान् ।
उदन्वता दुर्जयमन्तरिक्षं
जेतुं प्रवृत्तानिव तस्य पुत्रान् ॥ ९१ ॥

सम्भृत्येति—तोयं सम्भृत्य समाहृत्य सहसा शीघ्रं उज्जिहानान् उद्गच्छतः सेन्द्रायुधान् इन्द्रचापसहितान् सनादान् गर्जितसहितान् अत एवोदन्वता दुर्जयं आक्रमितुमशक्यमन्तरिक्षं जेतुं आक्रमितुं प्रवृत्तान् तस्य उदन्वतः पुत्रानिव स्थितान् घनान् मेघान् पश्य । मेघास्तावदाकारतः समुद्रपोता इव, ते च परराष्ट्राक्रमणप्रवृत्ता इव, तदुपयोगि सम्भरणीयं सम्भृत्य आयुधगर्जितादियोगेन समुद्रात् गगनं प्रत्युद्गच्छन्तीत्युक्तरूपोत्प्रेक्षा कृता ॥ ९१ ॥

[2] अपां तरङ्गैरयमन्तरङ्गै-
राप्लावयिष्यन् समये धरित्रीम् ।
समीनयूथस्तनुते सरस्वान्
सन्नाहगन्धीनि गतागतानि ॥ ९२ ॥

अपामिति—अन्तरङ्गैः स्वान्तर्गतावयवरूपैः अपां तरङ्गैः समये प्रलयकाले धरित्रीं आप्लावयिष्यन् निमज्जयिष्यन् अयं सरस्वान्

---

[1] विसंस्थुलद्वीपा—घ. [2] आपां तरङ्गैरयमन्तरङ्गैस्संभावयिष्यन्—झ.

समुद्रः समीनयूथः मीनसङ्घेन सहितस्सन् सन्नाहगन्धीनि सन्नाहलेशवन्ति गतागतानि तनुते । यथा अन्तरङ्गैराप्तैः स्वरक्षिवर्गैः सह परराष्ट्रमाक्रमिष्यन् राजा ततः प्रागपि अन्यापदेशेन सभृत्यगणः किञ्चित् सन्नाहेन गतागतानि [1] करोति निजसेनासन्नाहस्थितिदर्शनाय तद्वदिति ध्वन्यते । "गन्धो गन्धक आमोदे लेशे [2] सम्बन्धगर्वयोः" इति विश्वः ॥ ९२ ॥

**असौ परप्रेमपदं स्वभावा-**
**दापूर्यमाणो महता रसेन ।**
**आत्मेव दृष्टस्सहसा प्रजाना-**
**मदर्शनेच्छामितरेषु दत्ते ॥ ९३ ॥**

**असाविति**—स्वभावात् शयनस्थानतया [3] स्वत्वात् परप्रेमपदं परस्य परमात्मनो नारायणस्य प्रीतिगोचरः महता रसेन गङ्गादिजलेनापूर्यमाणः असौ समुद्रः दृष्टस्सन् प्रजानां प्राणिनां सहसा शीघ्रं इतरेषु अदर्शनेच्छां दर्शनेच्छाभावं दत्ते । अत्याश्चर्यवत्त्वात् स्वयं दृष्टो विषयान्तरेषु कौतुकमपनयतीत्यर्थः । क इव आत्मेव, आत्मा परमात्मा नारायणः, सोऽपि परमानन्दरूपतया स्वभावात् निसर्गतः पुरुषार्थान्तरहेतुत्वोपाधिं विना परप्रेमपदं [4] उत्कृष्टप्रीतिगोचरः, महता रसेन रस्यते आस्वाद्यत इति रसः तेन अप्राकृतविषयभोगेन आपूर्यमाणश्च भवतीति [5] दृष्टस्सन् जनानां विषयान्तरेच्छामपनयति च । "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" (भगवद्गीता २–५९) इति [6] स्मृतेः ॥ ॥ ९३ ॥

**गरुत्मतः कम्पितदिव्यवृक्षं**
**पक्षानिलं पातुमुपेत्य नागाः ।**

---

[1] करोति, जनेन संनाह -ङ. [2] सम्बन्धिगर्वयोः—ङ. [3] 'स्वत्वात्' इति घ.–कोशे नास्ति. [4] उत्कृष्टप्रेमगोचरः–ग. [5] दृष्टस्सन् प्रजानाम्–घ. [6] स्मृतिः—ङ.

वितन्वतेऽबालमणिप्रकाशै-
रसूर्यबालातपमन्तरिक्षम् ॥ ९४ ॥

**गरुत्मत इति**—नागाः समुद्रवासिनः काद्रवेयाः कश्चित-दिव्यवृक्षं आधूतपारिजातं पक्षानिलं पातुमुपेत्य अबालमणिप्रकाशैः प्रौढानां फणामणीनां आलोकैः अन्तरिक्षं असूर्यः सूर्यानपेक्षः बालातपः यस्मिन् तथा भूतं वितन्वते। अभूषितः कान्त इतिवत् असूर्येत्यत्र नैरपेक्ष्ये नञ्। नागा गरुत्मतः पक्षानिलं विरुद्धमपि पारिजात[1]सौरभ-लोभात् पिपासन्तीति भावः ॥ ९४ ॥

मरुद्भिराघूर्णितसाद्रिनागै-
र्वेगोद्भवैरस्य विमथ्यमानः।
उत्क्षिप्तशङ्खप्रकरापदेशात्
भूयस्सुधामुद्गिरतीव सिन्धुः ॥ ९५ ॥

**मरुद्भिरिति**—आघूर्णिताः भ्रमिताः साद्रयः अद्रिभिस्सहिता नागा ऐरावताद्या दिग्गजा यैस्तैः, अस्य गरुडस्य वेगोद्भवैः मरुद्भिः वायुभिः विमथ्यमानः क्षोभ्यमाणः, भ्रमितमन्दराद्रिसहितवासुकिनागैः मरुद्भिः देवैः विमथ्यमान [2]इत्यपि प्रतीयते, सिन्धुः समुद्रः उत्क्षिप्त-शङ्खप्रकरापदेशात् उदस्तशङ्खनिकरव्याजात् भूयः पुनरपि सुधां उद्गि-रतीव [3]उद्वमतीव, जनयतीवेत्यर्थः ॥ ९५ ॥

दोधूयमानं विविधोर्मियोगात्
छायागरुत्मन्तमवेक्ष्य भीताः।

---

[1] सौरभात्—ग. ङ. [2] इति प्रती—ग.घ. ञ. [3] 'उद्वमतीव' इति ग. घ. ञ.—कोशेषु नास्ति.

आवर्तशैलीमभिनेतुमिच्छ-
न्त्यङ्गैरमी कुण्डलितैर्भुजङ्गाः ॥ ९६ ॥

दोधूयमानमिति—विविधोर्मियोगात् गतप्रत्यागतशालिनानाविधवीचिसम्पर्कात् दोधूयमानं [1]पुनःपुनः कम्पमानं, कम्पनेन हिंसार्थं [2]सम्भ्रमेणागच्छन्तमिव स्थितामिति भावः, छायागरुत्मन्तं छायारूपं गरुडं अवेक्ष्य भीताः अमी भुजङ्गाः समुद्रवासिनः कुण्डलितैः वेष्टितैः अङ्गैः आवर्त[3]शैलीं जलभ्रमभङ्गीं [4]अभिनेतुं अनुकर्तुमिच्छन्ति। जलभ्रमधियाऽस्मान् गरुडस्त्यजत्विति हृदयेनेति भावः ॥ ९६ ॥

सफेनहासो जटिलः प्रवालै-
रुद्वर्तयन्नूर्मिभुजैर्भुजङ्गान्।
विडम्बयत्येष [5]निसर्गभीमः
कस्यापि कल्पान्तनटस्य लीलाम् ॥ ९७ ॥

सफेनेति—सफेनहासः फेना एव हासाः अट्टहासाः तैस्सहितः प्रवालैः विद्रुमैः जटिलः जटावान् ऊर्मय एव भुजाः तैः भुजङ्गान् उद्वर्तयन् उपमृद्नन्, रुद्रपक्षे—भुजङ्गाः भूषाभुजङ्गाः, निसर्गभीमः स्वभावाद्भयङ्करः एषः समुद्रः कस्यापि अमेयमहिम्नः कल्पान्तनटस्य प्रलयनटस्य संहाररुद्रस्य लीलां विडम्बयति अनुकरोति ॥ ९७ ॥

---

[1] पुनःपुनः प्रकम्पमानम्–ग. ङ. अ. [2] 'सम्भ्रमेण' इति ग. घ.–कोशयोर्नास्ति. [3] शैलीमन्भ्रमभङ्गीं–घ. [4] अभिनेतुमिच्छन्तीति–अ. [5] निसर्गभीमाम्–अ.

अशेषतस्सोऽयमचिन्त्यभूमा
कुम्भीकुमारेण निपीतवान्तः ।
सिष्णासया सम्पततोऽपि दृष्ट्वा
द्विजाधिपान् वेपत इत्यवैमि ॥ ९८ ॥

**अशेषत इति**—अचिन्त्यभूमा अतर्क्यमहिमा सोऽयं सागरः कुम्भीकुमारेण अगस्त्येन अशेषतः शेषाभावेन कार्त्स्न्येन निपीतवान्तः निपीतः तदनन्तरं उज्झितश्च सन् सिष्णासया स्नातुमिच्छया सम्पततः आगच्छतोऽपि द्विजाधिपान् ब्राह्मणप्रवरान् दृष्ट्वा वेपते एतेऽपि तद्वत्पास्यन्तीति भिया कम्पत इत्यवैमि ॥ ९८ ॥

प्रदर्शितात्मभ्रमणेन नूनं
प्रत्यायितां मन्दरनर्तकेन ।
सव्यापसव्यैर्भ्रमणैस्तरस्वी
रम्यामसौ पुष्यति रासलीलाम् ॥ ९९ ॥

**प्रदर्शितेति**—असौ सागरः प्रदर्शितात्मभ्रमणेन प्रदर्शितस्वभ्रमणेन मन्दरनर्तकेन [1]मन्दराचल एव नर्तकः तेन प्रत्यायितां ज्ञापितां रम्यां रासलीलां रासाख्यनृत्तविशेषरूपां क्रीडां तरस्वी जवनस्सन् सव्यापसव्यैः वामदक्षिणैर्भ्रमणैः नानामुखतरङ्गगतप्रत्यागतरूपैः पुष्यति उपचिनोति । नूनमित्युत्प्रेक्षायाम् ॥ ९९ ॥

तैस्तैरसौ निर्मथितो विधूत-
स्संक्षोभितो बन्धनपीडनाद्यैः ।
प्रसादगाम्भीर्यनिधिः प्रथिम्ना
क्षमान्वयं नोज्झति शीतलात्मा ॥ १०० ॥

**तैस्तैरिति**—तैस्तैः देवादिभिः निर्मथितः विधूतः बन्धनपीड-

---

[1] मन्थाचल—क. अ.

नाथैः संक्षोभितः प्रसादस्य अकलुषतायाः गाम्भीर्यस्य अगाधतायाश्च निधिः शीतलात्मा शीतलस्वभावः असौ सागरः प्रथिम्ना पृथुतया स्वविस्तारेण [1]क्षमान्वयं भूसम्बन्धं नोज्झति। ये प्रसन्ना अकोपना गम्भीरा मुखचापलरहिताः शीतलाः कृपामृदवो महापुरुषाः ते परैः क्रियमाणेऽपि निष्पीडनादौ प्रथिम्ना स्वगौरवेण क्षान्तिसमन्वयं न त्यजन्तीति भावः। समुद्रो देवैर्निर्मथितः, आदिवराहेण विधूतः, विलोलनेन कम्पितः, रघुनाथेन सेतुबन्धनेन संक्षोभितः, जामदग्न्येन परशुना पीडनेन संक्षोभितः, आदिशब्देन अगस्त्येन पानेन, बडबाग्निना शोषणेन संक्षोभित इत्यादि समुच्चीयते। सर्वत्र संक्षोभणं प्रकृतिविपर्यासनमनुगतम् ॥ १०० ॥

**विमथ्य विश्राणितमेतदीयं**
**दैत्यद्विषा देवि मरुत्वदाद्याः।**
**सारं पिबन्तस्त्रिदशाः कदाऽपि**
**द्राघीयसीं नानुभवन्ति निद्राम् ॥ १०१ ॥**

**विमथ्येति**—हे देवि! दैत्यद्विषा नारायणेन विमथ्य विश्राणितं दत्तं एतदीयं सारं अमृतं पिबन्तः मरुत्वदाद्याः इन्द्रमुखाः त्रिदशाः द्राघीयसीं दीर्घतरां निद्रां मृतिं कदाऽपि नानुभवन्ति। अमृतस्य जरामरणहारित्वादिति भावः। द्राघीयसीमिति दीर्घशब्दादीयसुन् प्रत्ययः। 'प्रियस्थिर' (पा. सू. ६-४-१५७) इत्यादिना द्राघादेशः ॥ १०१ ॥

**कलत्रवन्तं पुरुषं पुराणं**
**कपालिनं चन्द्रकलावतंसम्।**

---

[1] 'क्षमान्वयं' इत्यादिः 'समुद्र' इत्यन्तो ग्रन्थो ङ-कोशे दृश्यमानो ग. घ. कोशयोर्गलित इति भाति.

ऐरावताद्यैः प्रचितानकार्षी-
द्वैमानिकानेष महावदान्यः ॥ १०२ ॥

कलत्रवन्तमिति—एष महावदान्यः अत्यन्तबहुप्रदस्सागरः पुराणं पुरुषं नारायणं कलत्रवन्तं, कपालिनं शिवं चन्द्रकलावतंसं, वैमानिकान् विमानेन चरत इन्द्रादीन् ऐरावताद्यैः ऐरावतोच्चैश्श्रवः-प्रभृतिभिः प्रचितान् समृद्धान् अकार्षीत् करोति स्म। अत्र पुराणपुरुष-कपालिवैमानिकशब्दैर्नारायणादीनां वृद्धत्वदरिद्रत्ववाहनान्तररहितत्व-प्रतीतेः तेषां कलत्रवत्त्वादिसम्पादनेन महावदान्यत्व[1]मुपदर्शितम्॥१०२॥

इदं जगद्दर्शिततारतम्यं
यद्भ्रूलतालास्यविशेषनिघ्नम्।
प्रजापतीनां जननीमजन्यां
तामेष देवीमनघामसूत ॥ १०३ ॥

इदमिति—इदं जगत् यस्या देव्याः भ्रूलताया लास्यविशेष-निघ्नं चलनभेदाधीनं सत् दर्शिततारतम्यं प्रदर्शितन्यूनाधिकभावं वर्तत इति शेषः, तां प्रजापतीनां प्रतिकल्पं भिन्नानां ब्रह्मणां जननीं मातरं अजन्यां अजां अनघां अनवद्यां श्रियं देवीं एषः समुद्रः असूत जनयामास। '[2]भव्यगेय' (पा. सू. ३-४-६८) इत्यादिसूत्रेण कर्तरि जन्यशब्दस्साधुः ॥ १०३ ॥

वराय दत्त्वा निरवद्ययूने
कन्यामसौ कौस्तुभयौतकं च।
महोत्सवे वाहनभोजनाद्यै-
रानर्च देवानितरान् यथार्हम् ॥ १०४ ॥

वरायेति—असौ समुद्रः निरवद्ययूने निर्दोषतरुणाय वराय

---

[1] मुपपादितम्—अ. [2] 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' (पा. सू. ३-४-६८) इति सूत्रेणेत्यर्थः.

जामात्रे नारायणाय कन्यां श्रियं कौस्तुभरूपं यौतकं विवाहसमये युतयोर्वधूवरयोः देयधनं च दत्त्वा महोत्सवे महति तस्मिन् विवाहोत्सवे इतरान् देवान् इन्द्रादीन् यथोचितं वाहनभोजनाद्यैः ऐरावतसुधाप्रभृतिभिः आनर्च पूजयामास । "कन्यादाने तु यद्दत्तं यौतकं युतकं च तत्" इति वैजयन्ती ॥ १०४ ॥

**जगन्त्यशेषाणि यदेकदेशे**
**[1]पर्यङ्कतां तस्य गतः प्रथिम्ना ।**
**अलङ्घनीयं महिमानमन्यै-**
**र्भजत्यसौ भावितशेषभावः ॥ १०५ ॥**

जगन्तीति—अशेषाणि जगन्ति यस्य भगवतः एकदेशे जठररूपे अवयवे वर्तन्त इति शेषः, तस्य पर्यङ्कतां शयनस्थानतां प्रथिम्ना विस्तारेण गतः प्राप्तः अत एव भावितशेषभावः प्राप्ततदुपसर्जनभावः, प्राप्तानन्तोरगभाव इत्यपि गम्यते, सोऽपि भगवतः पर्यङ्कः, "[2]ना नागेशाप्रधानयोः" इति शेषशब्दनानार्थे वैजयन्ती, असौ समुद्रः अन्यैरलङ्घनीयं लङ्घितुमशक्यं महिमानं महत्त्वं विस्तारं भजति । अनेन भगवच्छेषत्वं भावयन् अनुसन्दधानो भागवत इतरैर्दुराधर्षमाहात्म्यं भजतीत्यपि गम्यते[3] । अनन्तपक्षे [4]महेर्भुवो मानं परिमाणं विस्तारं भजति धारणेन सेवते । 'शुचिं च पूर्लिं महिपल्लिवल्लीः' इति [5]महिशब्दमिकारान्तेष्वपि रामदासः [6]पपाठ ॥ १०५ ॥

---

[1] पर्यङ्कतां भावितशेषभावः । भजत्यसौ तस्य गतः प्रथिम्नाऽप्यलङ्घनीयं महिमानमन्यैः—घ. [2] 'अथ शेषः स्यात्त्रिष्वन्यस्मिन्नुपयुक्ततः । माल्याक्षतादिदाने स्त्री ना नागेशाप्रधानयोः' इति यादवप्रकाशीयवैजयन्तीकोशे । अत एव शेषापटीति प्रयोगो मूलकृद्भिराचार्यैस्तत्रतत्र प्रयुज्यते. [3] व्यज्यते—ग. ङ. [4] महेर्भूमेर्मानं —ङ. ञ. [5] 'महीमहिश्च तुल्यार्थे' इति द्विरूपकोशे श्रीहर्षश्च । [6] 'पपाठ' इति ङ—कोशे न दृश्यते.

**अनर्घमाद्यं हरिनीलरत्नं**
**लक्ष्मीदृशा नित्यनिदर्शनीयम् ।**
**नभःप्रतिच्छन्दनिभेन नून-**
**मन्तर्गतं व्यञ्जयति स्वधाम्ना ॥ १०६ ॥**

**अनर्घमिति**—लक्ष्मीदृशा कमलाया नेत्रेण नित्यनिदर्शनीयं रमणीयत्वात्सदाऽनुभाव्यं अनर्घं अमूल्यं आद्यं आदिमं श्रेष्ठं वा हरिमेव नीलरत्नं, इन्द्रनीलरत्नमित्यपि गम्यते, नभःप्रतिच्छन्दनिभेन गगनप्रतिबिम्बसदृशेन स्वधाम्ना स्वतेजसा नूनमन्तर्गतं व्यञ्जयति स्फुटयति । अन्तर्निद्राणस्य भगवतो देहकान्त्यैव श्यामलिमानं बिभर्तीति भावः । नित्यनिदर्शनीयमित्यत्र निदर्शनशब्दस्य उपमानरूढ्यनुसारेण तु नित्योपमेय[1]मित्यर्थपर्यवसानाद्धरिनलिरत्नमित्यत्र मत्स्यावताररूपेण समुद्रनिकेतनो हरिर्विवक्षणीयः । मत्स्यस्य नित्य[2]चटुलतया सदा लक्ष्मीलोचनसाम्यात् ॥ १०६ ॥

**मधुद्विषो वर्णमुषां मणीनां**
**त्रासव्यपायेऽपि तिरोहितानाम् ।**
**उदन्तमाख्यातुमिवोर्मिमाली**
**करानसौ कर्षति वीचिहस्तैः ॥ १०७ ॥**

**मधुद्विष इति**—असौ ऊर्मिमाली समुद्रः मधुद्विषः नारायणस्य वर्णमुषां श्यामलिम्नो मोषकाणां, वर्णसाम्यात् तदध्यवसायः, त्रासव्यपायेऽपि रत्नौज्ज्वल्यतिरोधायकदोषाभावेऽपि, जलान्तर्गततया तिरोहितानां साहसिकतया निर्भयत्वेऽपि, मुषितार्थसंरक्षणाय क्वचिन्निलीनानामिति मोषकपक्षे प्रतीयते, मणीनां इन्द्रनीलरत्नानां उदन्तं मुषित्वा अन्तर्वासवृत्तान्तं आख्यातुमिव करान् तेषां किरणानेव करान् हस्तान् वीचिहस्तैः कर्षति ॥ १०७ ॥

---

[1] मित्यर्थः । पर्यवसाना—घ.  [2] चटुलतया लक्ष्मी—घ.

पश्यामि सौहार्दवतां तवाक्ष्णा
तरङ्गनिम्नोन्नतलङ्घनेन ।
उद्वर्तितानां महसां मणीना-
मूर्ध्वं प्रसर्पन्तमिवोर्मिमन्तम् ॥ १०८ ॥

पश्यामीति—तव अक्ष्णा लोचनेन सौहार्दवतां सादृश्यवतां तरङ्गाणां निम्नोन्नतेषु प्रदेशेषु लङ्घनेन हेतुना उद्वर्तितानां तदभिघातादुत्क्षिप्तानां मणीनां महानीलरत्नानां महसा तेजसा ऊर्मिमन्तं समुद्रं ऊर्ध्वं प्रसर्पन्तमिव पश्यामि । तरङ्गोत्क्षिप्तमणिमहसामुपरि प्रसर्पणं समुद्रस्यैवोर्ध्वं प्रसर्पणमिव भातीत्यर्थः ॥ १०८ ॥

अन्वेषयन् दित्सितदक्षिणोऽह-
माचार्यसान्दीपिनिसूनु[1]वृत्तम् ।
आविष्टशङ्खासुरसन्निवेशं
प्राञ्चं महाशङ्खमिहान्वविन्दम् ॥ १०९ ॥

अन्वेषयन्निति—दित्सितदक्षिणः विद्याग्रहाणानन्तरं सान्दीपिनये दित्सिता दातुमिष्टा गुरुदक्षिणा येन स तथोक्तः आचार्यसान्दीपिनिसूनुवृत्तमन्वेषयन् [2]ममाचार्येण सान्दीपिनिना प्रभासे समुद्रेण हृतस्य स्वसूनोः प्रत्यानयनं गुरु[3]दक्षिणेति वृते तस्य सूनोर्वृत्तान्तं गवेषयन् अहं आविष्टः प्राप्तः शङ्खासुरस्य शङ्खरूपस्य पञ्चजननाम्नोऽसुरस्य सन्निवेशस्संस्थानं येन तं प्राञ्चं अनादिसिद्धं महाशङ्खं इह समुद्रप्रदेशे अन्वविन्द लब्धवान्[4] ॥ १०९ ॥

---

[1] वृत्ति–ग्र. मु. [2] ममाचार्यसान्दीपिनिना–घ. [3] दक्षिणेत्युक्ते–घ.
[4] आप्तवान्–ङ.

यादो[1]निधाने यदुराजधान्याः
सम्प्राप्तये सेतुरिहोपक्लृप्तः ।
रामेण सीतापतिना निबद्धे
लङ्कापथे लाघवमादधाति ॥ ११० ॥

याद इति—यादसां निधाने समुद्रे इह प्रदेशे यदूनां राजधान्याः द्वारकायाः सम्प्राप्तये क्लृप्तः रचितः सेतुः सीतापतिना रामेण निबद्धे लङ्कापथे लङ्कामार्गे सेतौ लाघवं लघुत्वं अविस्मयनीयत्वं आदधाति । तदपेक्षया [2]अयमेव महान्, अयत्नरचितश्चेति भावः ॥ ११० ॥

अमूनि कैलासनिभान्यदूरात्
सिद्धाङ्गनासेव्यलतागृहाणि ।
पुण्यानि सत्ये पुलिनानि सिन्धो-
श्चिरेण दृष्टिं चरितार्थयन्ति ॥ १११ ॥

अमूनीति—हे सत्ये! अदूरात् समीपे कैलासनिभानि सिद्धा देवयोनिविशेषाः तदङ्गनानां सेव्यानि लतागृहाणि येषु तानि सिन्धोः समुद्रस्य [3]अमूनि पुलिनानि सैकतानि चिरेण बहोः कालात् दृष्टिं नयनं चरितार्थयन्ति कृतार्थयन्ति ॥ १११ ॥

तटप्रदेशेषु तरङ्गहस्तैः
प्रसारयन् सम्प्रति फेन[4]पङ्क्तिम् ।
सभाजनार्थं तनुते भवत्याः
प्रायः पदन्यासपटीमुदन्वान् ॥ ११२ ॥

तटेति—तटप्रदेशेषु तरङ्गैरेव हस्तैः फेनपङ्क्तिं सम्प्रति प्रसारयन् उदन्वान् प्रायः नूनं भवत्याः सभाजनार्थं आननन्दनार्थं पदन्यासपटीं

---

[1] निदाने–घ. [2] अयमेव यत्नरचित–घ. [3] इतः पूर्वं 'पुण्यानि पावनानि' इति ग्रन्थेन भाव्यम्. [4] पङ्क्तीः ग्र. दे. मु.

चरण[1]न्यासस्य पटीं तनुते विस्तारयति । '[2]आनन्दनं सङ्गतं स्याद[3]-प्रच्छन्नं सभाजनम्' इति यादवः ॥ ११२ ॥

विलङ्घयन् व्योमपथेन सिन्धुं
त्वद्दर्शने दीप्तकुतूहलानाम् ।
रथस्तवासौ त्वरयाऽतिशेते
मनोरथं विष्णुपदीवधूनाम् ॥ ११३ ॥

विलङ्घयन्निति—व्योमपथेन गगनमार्गेण सिन्धुं समुद्रं विलङ्घयन् असौ तव रथः गरुडः त्वद्दर्शने दीप्तकुतूहलानां तीव्रकौतुकानां विष्णुपदीवधूनां द्वारकाङ्गनानां मनोरथं अतिशेते । तीव्रकौतुकानां मनोरथः अत्यन्तजवनः, ततोऽप्यधिकेन जवेन गच्छतीत्यर्थः । "प्रोक्ता विष्णुपदी गङ्गासङ्क्रान्तिद्वारकासु च" इति विश्वः ॥ ११३ ॥

सुरद्रुमस्त्वद्विरहालसानां
तवागमं सूचयितुं सखीनाम् ।
मधुव्रतीनां मधुरैः प्रणादैः
प्रियंवदं प्रेषयतीव गन्धम् ॥ ११४ ॥

सुरद्रुम इति—सुरद्रुमः पारिजातः त्वद्विरहेणालसानां खिन्नानां सखीनां तवागमं सूचयितुं मधुव्रतीनां भ्रमरीणां मधुरैः मनो-

---

[1] न्यासपटीं—घ. [2] 'आनन्दनसभाजने' इत्यमरः—घ. [3] अत्रत्या-प्रच्छन्नपदस्य सभाजनपर्यायत्वं मत्वा मुद्रितयादवकोशगताङ्गलभाषाप्रतिपदार्थसूचन्यां सभाजनमिति तदर्थः प्रदर्शितः । वस्तुतो नेदमप्रच्छन्नपदं सभाजनपदपर्यायभूतम्, किंतु आनन्दनविशेषणतया प्रयुक्तम् । ततश्च अप्रच्छन्नमानन्दनं प्रकाशितमानन्दनं सभाजनमित्युच्यत इत्यर्थः स्वरसतः प्रतीयते । कोशेऽस्मिन् प्रायः कोशान्तरेष्वापाततः पर्यायतया प्रतीयमानानां विशेषार्थोपवर्णनैदंपर्यस्य दर्शनात् । तेन च प्रच्छन्नमानन्दनं संगतमित्यत्र प्रथमपादार्थः फलति । लोके सभाजनरूपेऽर्थे अप्रच्छन्नपदप्रयोगस्य गवेषणीयत्वाच्च । यद्वाऽत्र अमरकोशानुरोधेनाप्रच्छन्नपदपाठेन भाव्यमिति प्रतिभाति.

हृरैः प्रणादैः झङ्कारैः प्रियंवदं प्रियवचनं वदन्तं गन्धं सौरभं प्रेषयतीव। पारिजातेन [1]प्रेषित इव गन्धस्त्वत्सखीनां सविधं गच्छतीत्यर्थः ॥ ११४ ॥

विजित्य सङ्ख्ये नरकं सनाकं
प्रत्यागतं मां प्रतिगन्तुकामाः ।
पौराः प्रहर्षोपनतैः प्रणादै-
रम्भोनिधेरन्तरयन्ति घोषान् ॥ ११५ ॥

विजित्येति—सनाकं नाकेन नाकवासिसुरजनेन सहितं नरकं नरकासुरं सङ्ख्ये युद्धे विजित्य प्रत्यागतं मां प्रतिगन्तुं कामो येषां ते पौराः द्वारकापुरे भवा जनाः प्रहर्षोपनतैः प्रमोदसञ्जातैः प्रणादैः शब्दैः अम्भोनिधेर्घोषान् अन्तरयन्ति तिरस्कुर्वन्ति ॥ ११५॥

विधाय तार्क्ष्यं गगनाब्धिपोतं
सार्धं मया देवि समाव्रजन्तीम् ।
प्रत्युद्गतेव प्रतिभाति [2]भव्या
दूरादियं द्वारवती पुरी त्वाम् ॥ ११६ ॥

विधायेति—हे देवि! तार्क्ष्यं गगनस्यैवाब्धेः पोतं विधाय यानपात्राख्यं तरणसाधनं कृत्वा [3]"यानपात्रे शिशौ पोतः" इत्यमरः, मया सार्धं समाव्रजन्तीं त्वां भव्या शुभा इयं द्वारवती पुरी दूरात्प्रत्युद्गतेव प्रतिभाति। अतिदूरतया प्रागदृष्टाया गरुडवेगवशात् सद्यस्सन्निधाने सति झडिति अतर्कितमत्युन्नतत्वेन दर्शनं [4]प्रागुपविष्टतया उल्लिखितायाः सद्यः प्रत्युत्थानतयोत्प्रेक्ष्यते ॥ ११६ ॥

---

[1] प्रेरितः—क. [2] भव्यां—प्र. दे मु. [3] 'यानपात्रं तु पोतः' इत्यमरः—घ.
[4] प्रागुपविष्टतया निलीनायाः—क.

[1] **निबद्धजैत्रध्वजपङ्क्तिरम्या**
**पुष्पैरसौ [2] पूजितराजमार्गा ।**
**सदामजाम्बूनदतोरणश्रीः**
**सौधत्विषा सूचयतीव हर्षम् ॥ ११७ ॥**

**निबद्धेति**—निबद्धया जैत्रया जयशालिया ध्वजपङ्क्त्या रम्या पुष्पैः विकीर्णैः कुसुमैः पूजितराजमार्गा मनोज्ञराजपथा सदामजाम्बूनदतोरणश्रीः [3]दामसंहितानां जाम्बूनदतोरणानां श्रीः शोभा तया सहिता, तोरणस्तम्भैरिव तोरण[4]दामभिरविरततया शोभमानैर्युक्तेत्यर्थः, असौ द्वारवती सौधत्विषा स्मितप्रभास्थानीयया हर्षं त्वदागमनप्रयुक्तं सूचयतीवेत्युत्प्रेक्षा । जेतृशब्दात् प्रज्ञादिपठितात् स्वार्थे अण्प्रत्यये सति जैत्रशब्दस्साधुः ॥ ११७ ॥

**पदे परस्मिन्निव नित्यमस्यां**
**शुद्धेन सत्त्वेन विभूषितायाम् ।**
**धर्मस्य वासाः प्रथिताः पृथिव्यां**
**सारित्पतौ गोष्पदवद्भवन्ति ॥ ११८ ॥**

**पद इति**—परस्मिन् पदे परमपद इव शुद्धेन रजस्तमोऽनभिभूतेन सत्वेन विभूषितायां, क्षेत्रमाहात्म्यादत्रत्यास्सर्वे शुद्धसत्वपरिष्कृता इति भावः, परस्मिन् पद इत्युपमाने उपमेयविभक्तिः साधुत्वार्था, अस्यां [5]द्वारकायां विषये पृथिव्यां प्रथिताः प्रसिद्धाः धर्मस्य वासाः अन्यानि पुण्यक्षेत्राणि सारित्पतौ विषये गोष्पदवत् गोखुर[6]परिमित-

---

[1] अयं श्लोक उत्तरश्च ग्र. दे. मु.—कोशयोः स्वरश्मि' इति श्लोकानन्तरं दृश्यते. [2] पूरित—ड. [3] दामसहितानां—घ. [4] दामभिरपि रत्नभरिततया—ङ. [5] द्वारकायां ये—ग. घ. [6] खुरमितश्वभ्राणीव—ग. घ.

श्वभ्राणीव भवन्ति। सरित्पतेर्गोष्पदानां च यावत्तारतम्यं [1] तावदस्याः पुण्यक्षेत्राणां चेत्यर्थः । 'गोष्पदं सेवितासेवितप्रमाणेषु' (पा. सू. ६-१-१४५) इति निपातनादत्र प्रमाणे गोष्पदशब्दस्साधुः ॥ ११८ ॥

**स्वरश्मिनिष्पादितसूर्यभेदा-**
**मर्चिर्मुखै[2]रञ्चितभव्यभागाम् ।**
**निवृत्तिधर्मे नियतास्थितीनां**
**नैश्श्रेयसीं पद्धतिमाहुरेनाम् ॥ ११९ ॥**

**स्वरश्मीति**—स्वरश्मिभिः स्वकीयमणिकिरणैः निष्पादितसूर्यभेदां सम्भृत(संभृत)सूर्यविशेषां, प्रतिसूर्यकल्पान् प्रभापुञ्जान् निष्पादयन्तीमिति यावत्, अर्चिर्मुखैः अर्चिरभिः "तेऽर्चिषमभिसम्भवन्ति (छा. ४-१५-५) इति श्रुतौ [3] तत्र प्रयोगात्, अर्चिर्मुखा अभिमुखा देवाः तैरस्मद्दर्शनार्थमागतैः अञ्चितभव्यभागां पूजितशुभप्रदेशां एनां द्वारकां निवृत्तिधर्मे [4] मोक्षोपयोगिनिवृत्तिरूपे धर्मे नियतस्थितीनां नियतावस्थानानां मुमुक्षूणां नैश्श्रेयसीं निश्श्रेयससम्बन्धिनीं पद्धतिं मार्गं उपायं आहुः। नैश्श्रेयसीं पद्धतिमित्यनेन अर्चिरादिमार्गरूपताऽपि प्रतीयते । तत्रैवं विशेषणयोजना—स्वरश्मिभिः स्वसम्बन्धिभी रश्मिभिः सम्पादितसूर्यसम्भेदां 'अथ यत्रैतस्माच्छरीरा[5]दुत्क्रामति, अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा. ८-६-५) इति श्रुतौ अर्चिरादिपर्वणा परमं पदं गच्छतो रश्म्यनुसारित्वमुक्तम्, तेषां च रश्मीनां 'आभ्यो नाडीभ्यः प्रतीयन्ते, तेऽमुष्मिन्नादित्ये सृप्ताः' (छा. ८-६-२) इति श्रुत्या सूर्यसम्भेदोऽपि दर्शितः, स इह प्रथमविशेषणार्थः, अर्चिर्मुखैः अर्चिरहरापूर्यमाणपक्षादिभिरातिवाहिकदेवता-

---

[1] तावत्तस्याः—घ. [2] रर्चित—प्र. मु. [3] तत्प्रयोगात्—घ. [4] मोक्षोपाये निवृत्ति—घ. [5] 'दुत्क्रामदथैतैरेव' इति मुद्रिते पाठः.

विशेषैः अञ्चितभव्यभागामिति, [1]' तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षं ' (छा. ४-१५-५) इत्यादिश्रुत्यर्थो द्वितीयविशेषणार्थः, एवंभूताया द्वारकाया निश्श्रेयसपद्धतित्वं युक्तमिति भावः ॥ ११९ ॥

**सौधोपरुद्धत्रिदिवावकाशां**
**छायासमाक्रान्तभुजङ्गलोकाम् ।**
**पुरीमिमां भूषितसिन्धुमध्यां**
**कुत्रास्थितां वेत्सि कुतोमुखां वा ॥ १२० ॥**

**सौधेति** — सौधोपरुद्धत्रिदिवावकाशां अत्युन्नतैः सौधैः [2]आक्रान्तनाकलोकावकाशां छायाभिस्समुद्रे गृहाणां प्रतिबिम्बैः समाक्रान्तभुजङ्गलोकां भूषितसिन्धुमध्यां स्वयमवस्थानेन परिष्कृत-समुद्रमध्यां इमां पुरीं कुत्रस्थितां वेत्सि जानासि । सर्वत्र दर्शनाद्दिवि भुवि पाताले वा कुत्र तिष्ठतीति निर्धारयितुं न शक्यत इत्यर्थः । कुतोमुखां वेत्सि —अवान्तरद्वाराणामप्यतिमहत्तया प्रधान-गोपुरभ्रान्तिजनकत्वेन कस्यां दिशि प्रसिद्धगोपुरादियुक्तमस्या मुखमित्यपि निर्धारयितुं न शक्यत इत्यर्थः ॥ १२० ॥

**उदन्वता खातवती समन्ता-**
**दयत्नवप्रायिततुङ्गवेला ।**
**न शक्यते सात्यकिना सनाथा**
**नाथैस्सुराणामपि जेतुमेषा ॥ १२१ ॥**

**उदन्वतेति**—उदन्वता समन्तात् खातवती [3]परिखावती अयत्नवप्रायिततुङ्गवेला अयत्नसिद्धप्राकारायितोन्नतसमुद्रवेला सात्य-किना सनाथा सहिता रक्षिता एषा द्वारका सुराणां नाथैः इन्द्रादि-भिरपि जेतुं न शक्यते ॥ १२१ ॥

---

1 ' यदि च आर्चिषमेवाभिसम्भवन्ति ' इति मुद्रिते पाठः. 2 आक्रान्तदेवलोका—**घ**. 3 परिखातवती—**ञ**.

प्राकारचक्रं यदुराजधान्याः
पश्यैतदुत्तुङ्गमसूर्यलङ्घ्यम् ।
यद्भावमेवं भजते यथार्थं
सङ्कोचमृच्छन्निव चक्रशैलः ॥ १२२ ॥

**प्राकारेति**—उत्तुङ्गं अत्युन्नतं अत एव असूर्यलङ्घ्यं सूर्येणापि लङ्घितुमशक्यं यदूनां राजधान्याः द्वारकायाः एतत् प्राकारचक्रं प्राकारवलयं पश्य । यथार्थं (अर्थं) प्रयोजनमनतिक्रम्य एवं अनेन प्रकारेण सङ्कोचं ऋच्छन् प्राप्नुवन् चक्रशैलः चक्राकारशैलः यद्भावं यद्रूपतां भजत इव । चक्रवालगिरिरिव द्वारकावेष्टनरूपप्रयोजनानुरूपं सङ्कोचं प्राप्य तत्प्राकारतां भजत इवेत्यौन्नत्येनोत्प्रेक्षा ॥ १२२ ॥

निर्मुक्तशेषोरगनिर्विशेषै-
र्निकेतनैरुन्नमितान्तरिक्षम् ।
उदग्रतालध्वजमेतदग्रे
सीमान्तरं सीरभृतो गुरोर्नः ॥ १२३ ॥

**निर्मुक्तेति**—अग्रे पुरतः निर्मुक्तशेषोरगनिर्विशेषैः सद्योमुक्त-[1] कञ्चुकानन्तनागसदृशैः [2] तथा धवलैः 'निर्मुक्तो मुक्तकञ्चुक' इत्यमरः, निकेतनैः गृहैः उन्नमितान्तरिक्षं उत्तम्भितगगनं, [3] गृहाणामभ्रंकषत्वात् तैः स्तम्भैर्गृहवत् अभ्रमुत्तम्भितमित्यध्यवसायगर्भमिदं विशेषणम्, उदग्रतालध्वजं उच्छ्रिततालकेतनं नः अस्माकं गुरोः अग्रजस्य सीरभृतः बलदेवस्य एतत्सीमान्तरं अन्या सीमा, सुप्सुपेति समासः, पृथग्भूता राजधानीत्यर्थः ॥ १२३ ॥

---

[1] कञ्चुकनागराजसदृशैः—घ. [2] ततोऽतिधवलैः—घ. [3] गृहाणामौन्नत्योत्क-र्षाद्—घ. ज.

[1] अभौमसम्भाव्यविभूतियोगं
[2] हैमं सुरत्नैरचिरोपनीतैः ।
अनुत्तमादुत्तरमार्यधाम्नः
ख्यातं त्वया गेहमिदं मदीयम्[3] ॥ १२४ ॥

अभौमेति—[4] अभौमैः स्वर्गादिगतैरपि देवादिभिस्सम्भाव्यः श्लाघनीयः विभूतियोगो यस्मिंस्तत्तथोक्तं हैमं हिरण्मयं अचिरोपनीतैः प्रत्यग्र[5]प्रत्युप्तैः सुरत्नैः उत्तमरत्नैरुपलक्षितं, अनुत्तमात् उत्तमं न विद्यते यस्मात्तस्मात् आर्यधाम्नः [6] अग्रजगृहात् उत्तरं उत्तरभागस्थं, दक्षिणभागे अग्रजगृहौचित्यादिति भावः, त्वया गृहिण्या ख्यातं [7] मदीयं गेहं गृहमिदम् ॥ १२४ ॥

प्रतीक्षमाणानधिचन्द्रशालं
पश्य त्वया शिक्षितचारुलास्यान् ।
त्वत्केशहस्तस्वजनैः कलापै-
र्गोपानसीश्छादयतो मयूरान् ॥ १२५ ॥

प्रतीक्षमाणानिति—अधिचन्द्रशालं चन्द्रशालायां "चन्द्र-शाला शिरोगृहम्" इत्यमरः, विभक्त्यर्थे अव्ययीभावः, प्रतीक्षमाणान् कदा त्वमागमिष्यसीति प्रतिपालयमानान् त्वया शिक्षितचारुलास्यान् अध्यापित[8]मनोज्ञनृत्यान्. त्वत्केशहस्तस्वजनैः तव केशकलापस्य सदृशैः "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे" इत्यमरः, कलापैः बर्हैः गोपानसीः गृहप्रान्तच्छादनानि वक्रदारूणि छादयतो मयूरान् पश्य । 'गोपानसी तु वलभीछादने वक्रदारुणि' इत्यमरः ॥ १२५ ॥

---

[1] नभोगसंभाव्य—घ. [2] हैमैस्सुरत्नै—प्र. दे. मु. [3] त्वदीयम्—घ. [4] नभोगैः—घ. [5] प्रकृतैः—घ. [6] अग्रजस्य गृहा—घ. [7] त्वदीयं—घ. [8] मनोज्ञनर्तनान—ङ. अ.

आहारभेदैरुचितैर्भवत्या
संरक्षितानां तनयाभिमानात् ।
शृणु त्वदालोकनतर्षभाजां
प्रजल्पितं पञ्जरशारिकाणाम् ॥ १२६ ॥

आहारभेदैरिति—भवत्या कत्र्या तनयाभिमानात् "अभिमानस्तु विज्ञाने प्रणये [1]दर्पहिंसयोः" इति वैजयन्ती, उचितैः तज्जातियोग्यैः आहारभेदैः आहारविशेषैः संरक्षितानां अत एव [2]त्वदालोकने तर्षभाजां अभिलाषभाजां, "कामोऽभिलाषस्तर्षश्च" इत्यमरः, पञ्जरशारिकाणां पञ्जरस्थानां पक्षिविशेषाणां प्रजल्पितं शृणु । "वाचाला मुखरा [3]शारी" इति यादवः । शारिका शुकाङ्गनेत्यप्याहुः ॥ १२६ ॥

सीमन्तमुक्तामणिसन्निकर्षात्
प्रसूतिचित्रीकृतशुक्तिरम्याः ।
अमी पुरस्ताद्भवतीसखीना-
मन्तर्मुदामञ्जलयस्स्वदन्ते ॥ १२७ ॥

सीमन्तेति—पुरस्तात् अग्रे अन्तर्मुदां अन्तर्गतहर्षाणां भवत्याः सखीनां सीमन्तस्य केशमध्यरेखायाः मुक्तामणीनां आभरणमौक्तिकानां सन्निकर्षाद्धेतोः प्रसूतिचित्रीकृतशुक्तिरम्याः प्रसूयन्त इति प्रसूतयः स्वप्रभवानि मौक्तिकानि, कर्मणि क्तिन् प्रत्ययः, [4]तैः परितो विशीर्णैः चित्रीकृताः शुक्तय इव रम्याः अमी अञ्जलयः स्वदन्ते [5]रोचन्ते, हृद्या भवन्तीत्यर्थः ॥ १२७ ॥

---

[1] दर्पभिस्सयोः—घ. [2] त्वदालोकनतर्ष—घ. [3] 'शारिः' इति मुद्रित-यादवकोशे. [4] 'तैः' इति ग. घ.—कोशयोर्गलित इति भाति. [5] रोचन्ते दृष्टिहृद्या—अ.

मायाधिकेन विधिना मनसेव [1]सृष्टै-
राभाति यादवगृहैरनघा पुरीयम् ।
नाभागनाहुषनलादिनराधिपाना-
माजानसम्पदवलेपमिवादधानैः ॥ १२८ ॥

**मायेति**—अनघा रम्या इयं पुरी मायाधिकेन मायाप्रचुरेण [2]विधिना चतुर्मुखेन मनसा सृष्टैरिव स्थितैः, प्रसिद्धोपादानद्रव्यैः करादिना च सृष्टेष्वेवं सौन्दर्यासम्भवादिति भावः, नाभागस्सूर्यवंशजो राजा अम्बरीषस्य पिता, नाहुषः नहुषस्यापत्यं ययातिः, कुरुवंश्यत्वात् "ऋष्यन्धकवृष्णिकुरुभ्यश्च" (पा. सू. ४–१–११४) इत्यण्प्रत्ययः, नलः प्रसिद्धः, आदिशब्देन हरिश्चन्द्रादयो गृह्यन्ते, तेषां नराधिपानां [3]आजानसम्पदः सहजैश्वर्यस्य [4]अवलेपं तत्तद्भुजबलार्जितत्वाभावदूषणं आदधानैरिव [5]स्थितैः सौधानां धावल्येन तथाऽपहासोत्प्रेक्षा, एवंभूतैर्यादवानां गृहैः आभाति । "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च" इति विश्वः । "सहजं निजमाजानम्" इति यादवः ॥ १२८ ॥

नित्यं धनेशनगरीं निधिभिः प्रभूता-
माखण्डलेन महिताममरावतीं च ।
प्रत्येकधामविभवैः परिभूय हृसा
सौधैरियं प्रहसतीव सुधावदातैः ॥ १२९ ॥

**नित्यमिति**—नित्यं निधिभिः प्रभूतां समृद्धां धनेशस्य नगरीं अलकां आखण्डलेन महितां आखण्डलाधिष्ठितत्वात् पूजितां अमरा-

---

[1] सृष्टौ–ङ. अ. [2] विधिना मनसा–घ. ङ. [3] आजानसम्पदः जन्मप्रभृति सिद्धस्य निखिलस्यैश्वर्यस्य–ङ. आजानसंपदः निसर्गैश्वर्यस्य–घ. आजानसंपदः सहजस्यैश्वर्यस्य–ङ. [4] अवलेपं दूषणम्–ङ. [5] स्थितैः, तदतिशायिसम्पद्भिः यादवानां–ङ. अ.

वती च प्रत्येकधामविभवैः एकैकगृहसम्पद्भिरेव परिभूय तिरस्कृत्य दृप्ता गर्विता इयं पुरी सुधया लेपनद्रव्येण अवदातैः धवलैः सौधैः प्रहसतीव अपहसतीव ॥ १२९ ॥

इत्यालपन्तमथ तार्क्ष्यरथेन कृष्णं
हेमाद्रिणा हरितशैलमिवोपनीतम् ।
पौरास्समीक्ष्य मुदितास्सह वल्लभाभिः
पद्मावृतां दिवमकुर्वत दृष्टिपातैः ॥ १३० ॥

इतीति—अथ अनन्तरं इत्यालपन्तं उक्तप्रकारेण सम्भाषमाणं तार्क्ष्य एव रथस्तेन हेमाद्रिणा सुमेरुणा हरितशैलं श्यामलपर्वतमिवोपनीतं कृष्णं मुदिताः हृष्टाः पौराः वल्लभाभिः प्रियाभिः सह समीक्ष्य दृष्टिपातैः दिवं पद्मावृतामिव अकुर्वत कुर्वते स्म ॥ १३० ॥

प्रत्युद्गतप्रियसखीजनदत्तहस्तां
सत्यां त्रयीमयरथादवतारयिष्यन् ।
नाथस्तदा नगरमध्यनभःप्रदेशा-
दासीदति स्म निजसौधसमीपरथ्याम् ॥ १३१ ॥

प्रत्युद्गतेति—तदा नाथः कृष्णः प्रत्युद्गतेन प्रियसखीजनेन दत्तहस्तां अवरोहणसमये अवलम्बनाय प्रदर्शितहस्तां सत्यां त्रयीमयरथात् वेदत्रयमयात् गरुडात् अवतारयिष्यन् सन् नगरमध्यनभःप्रदेशात् पुरमध्यगगनप्रदेशात् निजसौधसमीपरथ्यां आत्मीयसौधसान्निकृष्टाविशिखां आसीदति स्म प्राप। देवीं स्वसौधे अवतारणयित्वाशयेनेति भावः॥१३१॥

व्यतिकरितसुवेलां विश्वकर्मप्रसूतिं
लवणजलधिगुप्तामाप लङ्कामिवान्याम् ।
धनपतिबहुमान्यां धर्मसेतुर्यदूनां
दुरधिगमसमीपां द्वारकां राजधानीम् ॥ १३२ ॥

व्यतिकरितेति—धर्मसेतुः धर्माणां सेतुरिव मर्यादास्थापकः

कृष्णः व्यतिकरिताः सञ्जातव्यतिषङ्गाः मिलिताः सुवेलाः शान्ता यस्यां तां, पुण्यक्षेत्रमिति वीतरागैस्सेवितां "[1] व्यतीकरस्समाख्यातो व्यसनव्यतिषङ्गयोः," इति विश्वः, ततस्तारकादित्वादितच् [2] "सुवेलः प्रणते शान्ते [3] सुवेलः पर्वतान्तरे" इति विश्वः, विश्वकर्मणः प्रसूतिं निर्मितिं, कर्मणि क्तिन्प्रत्ययः, लवणजलधिना गुप्तां संवृतां अत एव दुरधिगमसमीपां धनपतेः कुबेरस्य बहुमान्यां अलकातिशायित्वात्, अत एव अन्यां लङ्कामिव स्थितां, यदूनां राजधानीं द्वारकां प्राप। लङ्काऽपि व्यतिषक्तसुवेलपर्वता विश्वकर्मणा निर्मिता समुद्रमध्यगता कुबेरस्य [4] पूर्वावासत्वात् तस्य बहुमान्या चेति साम्यम् ॥ १३२ ॥

विजयिनमुप[5]यातं वीक्ष्य सत्यासहायं
व्यतनुत मुदितेव द्वारका वन्दिकृत्यम्।
अमरतरुसमीरैः प्रेषितैराहृताना-
मुपवनमधुपानामुन्मदानां प्रणादैः॥ १३३ ॥

विजयिनमिति—विजयिनं सन्त[5]मुपयातं सत्यासहायं कृष्णं वीक्ष्य मुदिता हृष्टेव द्वारका प्रेषितैः प्रस्थापितैः अमरतरुसमीरैः पारिजातगन्धवाहैः आहृतानां आनीतानां अत एवोन्मदानां उपवनमधुपानां उद्यानमधुव्रतानां प्रणादैः शब्दैः वन्दिनां कृत्यं स्तुतिपाठं व्यतनुत ॥ १३३ ॥

[6] स्तुतिशतमुखराभिस्स्वर्गनेतुस्स जेता
सविनयमनुयातस्सत्यभामासखीभिः।

---

1 'व्यतिकर;' इति मुद्रितविश्वकोशे अ.-कोशे च. 2 'तदस्य संजातं तारकादिभ्य इतच्' (पा. सू. ५-२-३६) इति सूत्रेणेति भावः। 3 'सुवेले' इति स्यात्. 4 पूर्ववासत्वात्-घ. 5 यान्तं-घ. 6 स्तुतिरवमुखराभिः-घ.

**निजमगमदगारं निर्विशन् प्रेयसीनां**
**स्मरशरशयितानां मन्दमभ्युत्थितानि ॥ १३४ ॥**

**स्तुतीति**—स्वर्गनेतुः इन्द्रस्य जेता स्तुतीनां शतेन मुखराभिः वाचालाभिः सत्यभामायास्सखीभिः सविनयमनुयातः सः कृष्णः स्मरशरशयितानां विरह[1]तापापनयाय पुष्पेषु शयितानां प्रेयसीनां मन्दमभ्युत्थितानि विरहदौर्बल्यान्मन्दं यथा तथा प्रत्युत्थितानि निर्विशन् अनुभवन् सन् निजमगारमगमत् ॥ १३४ ॥

**अभिगतमुषया तदाऽनिरुद्धं**
**बलितनयेन बलीयसा [2] निरुद्धम् ।**
**यदुपरिषदि सर्वलोकदर्शी**
**कलहरुचिः कथयांबभूव योगी ॥ १३५ ॥**

**अभिगतमिति**—तदा तस्मिन् समये उषया बाणसुतया अभिगतं समेतं ततो बलीयसा बलवत्तरेण बलेस्तनयेन बाणेन [3]निरुद्धं निबद्धं सर्वलोकदर्शी अखिललोकवृत्तान्तं प्रत्यक्षीकुर्वन् कलहेषु रुचिर्यस्य स योगी नारदमुनिः यदूनां परिषदि सभायां कथयांबभूव । उषा नाम बाणस्य सुता स्वप्ने अनिरुद्धेन रतिमुपलभ्य प्रबुध्य विरहव्यथामनुभवन्ती मन्त्रिसुतया चित्रलेखया योगप्रभावाद्द्वारकायां सुप्तिसमये गृहीत्वा समानीतमनिरुद्धं कन्यान्तःपुरे रहसि निवेशितवती । इदं चावगम्य बाणः तं नागपाशैर्बबन्धेति [4]कथानुषङ्गः ॥ १३५ ॥

**बाणाभिख्यं बलिसुतमथो बद्धबन्धुं जिगीषुः**
**सेनोत्थानं सुमहति पुरे [5] श्वस्तनं घोषयित्वा ।**

---

[1] तापापनोदाय—घ. [2] निबद्ध—घ. [3] निबद्धं निरुद्धं—घ. ङ. [4] कथा—ङ.
[5] महति च पुरे—प्र. मु.

चिन्तारूढत्रिभुवनहितश्चिन्तनीयो मुनीनां
वासागारं प्रभुरधिगतो वासतेयीं निनाय ॥१३६॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य
श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयनाम्नि
महाकाव्ये अष्टादशस्सर्गः.

---

**बाणाभिख्यमिति**—अथो अनन्तरं बद्धः बन्धुः अनिरुद्धः येन तं बाणाभिख्यं बाणनामकं बलेस्सुतं जिगीषुः जेतुमिच्छुः चिन्तारूढत्रिभुवनहितः चिन्तागतत्रैलोक्यहितः सदा त्रैलोक्य[1]हितध्यायी मुनीनां चिन्तनीयः प्रभुः सुमहति अतिविशाले पुरे श्वस्तनं परेद्युर्भावि सेनोत्थानं सेनायाः प्रयाणसन्नाहं घोषयित्वा वासागारमधिगतः शयनगृहं प्राप्तस्सन् वासतेयीं निनाय रात्रिमतिवाहयामास । "वसतिर्वासतेयी च श्यामा रात्रिश्च कथ्यते" इति हलायुधः । श्वस्तनं इति श्वश्शब्दात् "सायं चिरं प्राह्णे" (पा. सू. ४-३-१२३) इत्यादिना [2]ट्युल् प्रत्ययः, तुडागमश्च ॥ १३६ ॥

[3]इति श्रीमद्भरद्वाजकुलतिलक-विश्वजिद्याजि-श्रीरङ्गराजाध्वरिवर-
सूनुना अप्पयदीक्षितेन विरचिते यादवाभ्युदय-
व्याख्याने अष्टादशस्सर्गः

---

1 हितं ध्यायन्–ङ. 2 ट्युप्रत्ययः–घ. ङ. 3 अत्र 'इति' इत्यनन्तरं श्रीमद्राजाधिराज--राजपरमेश्वर–निजभुजबलविजितनिखिलभूमण्डल–पञ्चतिरुवटिराय-भञ्जन – हयपतिसप्ताङ्गहरण – देवभूदेवभूमीसहोदर – श्रीमन्महामण्डलेश्वर – रामराज चिन्नतिम्मयदेवमहाराजनामाङ्किते' इत्यधिकपाठो ङ–कोशे दृश्यते.

# यादवाभ्युदयगतश्लोकपादानामकारादिक्रमेण सूचनी

आ

WD 4107—GBPM—500—22-6-45.

मैसूरु राजकीय प्राच्यकोशागारे परिष्कृत्य देवनागराक्षरैः संमुद्रय प्रकाशिताः

# संस्कृतग्रन्थाः

---

| ग्रन्थनाम | | मूल्यम् | |
|---|---|---|---|
| | | रू. | आ. |
| * 1 आपस्तम्बगृह्यसूत्रम्, सुदर्शनार्यप्रणीततात्पर्यदर्शनाख्यभाष्यसहितम्. | .... | 1 | 12 |
| * 2 आपस्तम्बयज्ञपरिभाषासूत्रम्, हरदत्तकपर्दिस्वामिभाष्याभ्यां सहितम्. | .... | 1 | 0 |
| * 3 माधवीयधातुवृत्तिः (अदादि-दिवादि-जुहोत्यादयः) | .... | 2 | 0 |
| * 4 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, प्रथमसंपुटम्. | .... | 2 | 8 |
| * 5 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा श्रीभट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, द्वितीयसंपुटम्. | .... | 2 | 8 |
| * 6 दक्षिणामूर्तिस्तोत्रम्, सुरेश्वराचार्यटीकासहितम् | .... | 1 | 4 |
| * 7 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, तृतीयसंपुटम्. | .... | 3 | 0 |
| * 8 श्रीभगवद्गीता, श्रीशंकराचार्यभाष्यसहिता | .... | 2 | 12 |
| * 9 तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्ययुता च, चतुर्थसंपुटम्. | .... | 3 | 0 |

---

*एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| ग्रन्थनाम | | | रू. | आ. |
|---|---|---|---|---|
| *10 | मण्डलब्राह्मणोपनिषत् .... | .... | 0 | 6 |
| *11 | सौन्दर्यलहरी .... .... | .... | 1 | 0 |
| *12 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, पञ्चमसंपुटम्. | | 3 | 0 |
| *13 | ,, ,, दशमसंपुटम् | .... | 3 | 0 |
| *14 | " ,, एकादशसंपुटम् | .... | 3 | 0 |
| *15 | आपस्तम्बधर्मसूत्रं हरदत्ताचार्यप्रणीतोज्वलाख्यवृत्तियुतम्. | .... | 1 | 12 |
| *16 | तैत्तिरीयसंहिता, सस्वरचिह्ना सपदपाठा भट्टभास्करीयज्ञानयज्ञाख्यभाष्यसहिता च, अष्टमं संपुटम्. | .. | 3 | 0 |
| *17 | ,, ,, नवमं संपुटम् | .... | 2 | 4 |
| *18 | ,, ,, द्वादशं संपुटम् | .... | 1 | 12 |
| *19 | श्रीशंकराचार्यप्रबन्धावली, प्रथमसंपुटम्, (श्रीविष्णुसहस्रनाम–सनत्सुजातीय भाष्यम्). | .... | 1 | 4 |
| 20 | ,, द्वितीयसंपुटम्, (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च). | .... | 1 | 4 |
| *21 | ,, तृतीयसंपुटम्, (उपदेशसहस्री गद्यपद्योभयात्मिका, रामतीर्थव्याख्यायुता). | .... | 2 | 0 |
| *22 | ,, चतुर्थसंपुटम्, (आत्मबोध विवेकचूडामणि–वाक्यवृत्ति–स्वात्मनिरूपण–योगतारावली–सर्ववेदान्तसिद्धान्तसारसंग्रहाः). | .... | 1 | 0 |
| *23 | माधवीयधातुवृत्तिः भ्वादौ प्रथमसंपुटम् | .... | 2 | 0 |
| *24 | ,, ,, द्वितीयसंपुटम् | .... | 2 | 0 |
| *25 | गोत्रप्रवरनिबन्धकदम्बम् .... | .... | 2 | 0 |
| *26 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीयभाष्यसहितम्, प्रथमसंपुटम् (1-4 प्रश्नाः). | .... | 1 | 12 |

एतच्चिह्नाङ्किता ग्रन्थाः संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | रू. | आ. |
|---|---|---|---|---|
| *27 | तैत्तिरीयारण्यकम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्यसहितम्, द्वितीयसंपुटम् (5–6 प्रश्नौ). | ... | 1 | 0 |
| *28 | एकाग्निकाण्डः सस्वरचिह्नः, हरदत्तीयभाष्यसहितः | .... | 1 | 4 |
| *29 | तैत्तिरीयारण्यकम्, सस्वरचिह्नं, भट्टभास्करीय-भाष्यसहितं तृतीयसंपुटम् (7-8 प्रश्नौ). | .... | 1 | 0 |
| *30 | ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता .... | ... | 2 | 0 |
| *31 | माधवीयधातुवृत्तिः, स्वादिमारभ्य समग्रा | ... | 2 | 0 |
| *32 | बोधायनगृह्यसूत्रम्, सपरिशिष्टं (प्रथममुद्रणं) | .... | 2 | 4 |
| *33 | तैत्तिरीयप्रातिशाख्यम्, (वैदिकाभरणत्रिभाष्य-रत्नाख्यव्याख्याद्वययुतम्. | ... | 4 | 0 |
| *34 | बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमे-तम्. | .... | 3 | 0 |
| *35 | भाट्टदीपिका, प्रथमसंपुटम् (तृतीयाध्याये तुरीय-पादान्ता). | .... | 3 | 0 |
| *36 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम् भट्टभास्करीय-भाष्ययुतम्. | .... | 3 | 8 |
| *37 | कौटलीयमर्थशास्त्रम्, (प्रथममुद्रणम्) .... | .... | 3 | 0 |
| *38 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय भाष्यसहितम् (तृतीयाष्टके 1-7 प्रश्नाः). | .... | 3 | 8 |
| *39 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रका-शिका-चन्द्रिका-प्रकाशसहितम् 1 सं. | ... | 3 | 0 |
| *40 | भाट्टदीपिका, द्वितीयसंपुटम्, (तृतीयाध्याये पञ्चम-पादप्रभृति सप्तमाध्यायान्तम्). | ... | 3 | 0 |
| 41 | खादिरगृह्यसूत्रम्, रुद्रस्कन्दीयवृत्तिसहितम् | .... | 1 | 0 |
| *42 | तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीय-भाष्ययुतम् (तृतीयाष्टके 8-12 प्रश्नाः). | .... | 2 | 4 |
| 43 | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, संस्कारकाण्डः | .... | 1 | 8 |
| 44 | ” ” आह्निककाण्डः | .... | 2 | 8 |

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| ग्रन्थनाम | | रू. | आ. |
|---|---|---|---|
| 45 स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे प्रथमसंपुटम्. | ... | 2 | 0 |
| *46 भाट्टदीपिका, तृतीयसंपुटम् (अष्टमाध्यायप्रभृति दशमे 4 पादान्ता). | ... | 2 | 8 |
| *47 श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, II सं. समन्वयाधिकरणप्रभृति आकाशाधिकरणान्तम्. | .... | 3 | 0 |
| 48 स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, व्यवहारकाण्डे द्वितीयसंपुटम्. | .... | 3 | 0 |
| *49 भाट्टदीपिका, खण्डदेवकृता, चतुर्थसंपुटम् (दशमाध्याये पञ्चमपादप्रभृति समग्रा. | .... | 3 | 0 |
| 50 गौतमधर्मसूत्रम्, मस्करिभाष्ययुतम् ... | .... | 3 | 8 |
| 51 अलङ्कारमणिहारः, प्रथमसंपुटम् (समासोक्त्यलङ्कारान्तः). | .... | 3 | 0 |
| 52 स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, श्राद्धकाण्डः | .... | 3 | 4 |
| 53 श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, III सं. (प्राणाधिकरणप्रभृति प्रथमे द्वितीयपादान्तं). | ... | 4 | 0 |
| *54 कौटलीयमर्थशास्त्रम् (द्वितीयमुद्रणम्) | .... | 3 | 0 |
| 55 बोधायनगृह्यसूत्रम्, सपरिशिष्टम् " | .... | 2 | 4 |
| 56 स्मृतिचन्द्रिका, याज्ञिकदेवणभट्टकृता, आशौचकाण्डः. | .... | 1 | 8 |
| 57 तैत्तिरीयब्राह्मणम्, सस्वरचिह्नम्, भट्टभास्करीयक्वाचित्कसायणभाष्याभ्यां युतम्, द्वितीयाष्टकम्. | ... | 3 | 8 |
| 58 अलङ्कारमणिहारः, द्वितीयसंपुटम् (परिकरालङ्कारप्रभृति मालादीपकालङ्कारान्तः). | .... | 3 | 8 |

---

* एतच्चिह्नाङ्किता ग्रन्था: संप्रति विक्रयायात्र नोपलभ्यन्ते.

| | ग्रन्थनाम | | रू. | आ. |
|---|---|---|---|---|
| 59 | श्रीमद्ब्रह्मसूत्रभाष्यम्, आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिका-प्रकाशयुतम्, IV सं. (प्रथमाध्याये तृतीयपादे आदितः अपशूद्राधिकरणान्तम्. | .... | 3 | 8 |
| 60 | काव्यप्रकाशः, मम्मटभट्टकृतः, माणिक्यचन्द्रकृतसङ्केताख्यटीकायुतः. | ... | 3 | 8 |
| 61 | आयुर्वेदसूत्रम्, योगानन्दनाथभाष्यसहितम् | .... | 2 | 0 |
| 62 | अलंकारमणिहारः, तृतीयसंपुटम् (सारालंकारप्रभृतिहेत्वलंकारान्तः). | .... | 2 | 8 |
| 63 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् I सं. (1–5) अध्यायाः). | ... | 2 | 0 |
| 64 | कौटलीयमर्थशास्त्रम्, (तृतीयमुद्रणम्) .... | .... | 3 | 0 |
| 65 | अर्थशास्त्रपदसूची प्रथमसंपुटम् .... | .... | 2 | 8 |
| 66 | ,, द्वितीयसंपुटम् ... | .... | 2 | 8 |
| 67 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् II सं. (6–10 अध्यायाः). | .... | 2 | 0 |
| 68 | अर्थशास्त्रपदसूची, तृतीयसंपुटम् .... | .... | 2 | 0 |
| 69 | अभिलषितार्थचिन्तामणिः, प्रथमसंपुटम् | .... | 2 | 0 |
| 70 | विद्यामाधवीयम्, विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् III सं. (11–15 अध्यायाः). | .... | 1 | 8 |
| 71 | सरस्वतीविलासः, व्यवहारकाण्डः .... | .... | 2 | 8 |
| 72 | अलंकारमणिहारः, चतुर्थसंपुटम् (रसवदलंकारप्रभृति समग्रः). | .... | 2 | 4 |
| 73 | आपस्तम्बशुल्बसूत्रम्, कपर्दीय — करविन्दीय — सुन्दरराजीयव्याख्याभिस्सहितम्. | .... | 2 | 12 |
| 74 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्यव्याख्यायुतम्, प्रथमपरिच्छेदः. | ... | 3 | 0 |
| 75 | अद्वैतसिद्धिः, मधुसूदनसरस्वतीकृता, गुरुचन्द्रिकाटीकायुता, I सं. (प्रथमपरिच्छेदे विश्वमिथ्यात्वप्रभृत्यागमादिबाधोद्धारान्ता). | .... | 3 | 12 |

| | ग्रन्थनाम | रू. | आ. |
|---|---|---|---|
| 76 | तत्वमुक्ताकलापः, वेदान्ताचार्यकृत–सर्वार्थसिद्धि तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः, प्रथमो जडद्रव्यसरः .... | 4 | 0 |
| 77 | तर्कताण्डवम्, व्यासयतिकृतम्, न्यायदीपाख्य-व्याख्यायुतम्. II सं· (द्वितीय परिच्छेदे विधिवादान्तं). .... | 2 | 0 |
| 78 | अद्वैतसिद्धिः, मधुसूधनसरस्वतीकृता, गुरुचन्द्रिका-टीकायुता II सं. प्रथमपरिच्छेदे असतस्साधकत्वोपपत्तिप्रभृति अविद्याप्रतिपादकश्रुत्युपपत्तिपर्यन्ता. .... | 3 | 4 |
| 79 | तर्कताण्डवं न्यायदीपाख्यव्याख्यायुतम् III सं. .... | 2 | 0 |
| 80 | अद्वैतसिद्धिः गुरुचन्द्रिकोपेता, III संपुटम् .... | 2 | 4 |
| 81 | तत्वमुक्ताकलापः, वेदान्ताचार्यकृत सर्वार्थसिद्धि-तद्व्याख्यानन्ददायिनीभावप्रकाशाभ्यां युतः II सं. .... | 3 | 0 |
| 82 | तर्कताण्डवं, न्यायदीपाख्यव्याख्यायुतम्, IV सं. .... | 2 | 4 |
| 83 | वाक्यार्थरत्नं सुवर्णमुद्रिकाख्यव्याख्यासमलङ्कृतम् .... | 1 | 0 |
| 84 | श्रीमदुमास्वामिविरचितं तत्त्वार्थसूत्रम्, सुखबोधाख्यवृत्तियुतम्. .... | 2 | 4 |
| 85 | शङ्कराचार्यविरचिता लक्ष्मीधरव्याख्यासमलंकृता सौन्दर्यलहरी, भावनोपनिषत् भास्करराजभाष्यसहिता, देवीपञ्चस्तवी च. | | |
| 86 | श्रीवेदान्ताचार्यविरचितं यादवाभ्युदयम्, श्रीमदप्पय्यदीक्षितेन्द्रविरचितव्याख्या समलङ्कृतम् सर्गाः 13-18. | | |
| 87 | आपस्तम्बश्रौतसूत्रम् श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम् I सं. प्रश्नाः 1—5. | | |
| 88 | 1. मैसूरुप्राच्यकोशागारस्थलिखितसंस्कृतग्रन्थसूची सविवरणा I सं. वेदाः (संहिता, ब्राह्मणं, आरण्यकं, उपनिषत्, मन्त्रसंग्रहश्च). .... | 3 | 12 |
| | 2. ,, द्वितीयं संपुटम्–धर्मशास्त्रम् (स्मृतिः) | | |
| | 3. मैसूरु प्राच्यकोशागारस्थ मुद्रितसंस्कृतपुस्तकप्रदर्शिनी. .... | 2 | 12 |

## ಮೈಸೂರು ಗೌರ್ನಮೆಂಟ್ ಓರಿಯೆಂಟಲ್ ಲೈಬ್ರರಿಯಿಂದ ಪ್ರಕಟಿಸಲ್ಪಟ್ಟ ಕನ್ನಡ ಗ್ರಂಥಗಳು

| | | ಬೆಲೆ ರೂ. | ಆ. |
|---|---|---|---|
| 1 | ಪಂಪಮಹಾಕವಿಯ ಆದಿಪುರಾಣ ... ... | 2 | 8 |
| *2 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಮೊದಲನೆಯ ಮುದ್ರಣ) ... | 2 | 12 |
| 3 | ಸದಾನಂದಯೋಗಿಯ ಮಹಾಭಾರತ (ಪೌಲೋಮಾಸ್ತೀಕ ಪರ್ವಗಳು). ... | 1 | 8 |
| 4 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಸಂಭವಪರ್ವ ... | 2 | 0 |
| *5 | „ ಜತುಗೃಹಾದಿಪರ್ವ ... | 1 | 12 |
| *6 | „ ಸಭಾಪರ್ವ ... ... | 1 | 12 |
| 7 | „ ಆರಣ್ಯಪರ್ವ ... ... | 2 | 0 |
| *8 | „ ವಿರಾಟಪರ್ವ ... ... | 1 | 8 |
| 9 | ಲಿಂಗಣ್ಣನ ಕೆಳದಿನೃಪವಿಜಯ ... ... | 1 | 8 |
| 10 | ಸೋಮರಾಜನ ಉದ್ಭಟಕಾವ್ಯ ... ... | 2 | 0 |
| 11 | ರುದ್ರಭಟ್ಟನ ಜಗನ್ನಾಥವಿಜಯ (ಎರಡನೆಯ ಮುದ್ರಣ) ... | 2 | 12 |
| 12 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಉದ್ಯೋಗಪರ್ವ ... | 1 | 2 |
| 13 | ಸೋಮನಾಥನ ಅಕ್ರೂರಚರಿತ್ರೆ ... ... | 1 | 0 |
| 14 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. I ... ... | 2 | 4 |
| 15 | ಗೋವಿಂದವೈದ್ಯನ ಕಂಠೀರವನರಸರಾಜವಿಜಯ ... | 2 | 8 |
| 16 | ನಯಸೇನನ ಧರ್ಮಾಮೃತ ಸಂ. II ... ... | 1 | 4 |
| 17 | ವೀರಭದ್ರನೃಪಾಲನ ವೀರಭದ್ರವಿಜಯ ... ... | 1 | 4 |
| 18 | ಜನ್ನನ ಅನಂತನಾಥಪುರಾಣ ... ... ... | 2 | 0 |
| 19 | ಸಕಲವೈದ್ಯಸಂಹಿತಾಸಾರಾರ್ಣವ ಸಂ. I ... ... | 1 | 14 |
| *20 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಭೀಷ್ಮಪರ್ವ ... ... | 1 | 0 |
| *21 | „ ದ್ರೋಣಪರ್ವ ... ... | 1 | 12 |
| 22 | ನಾಗವರ್ಮನ ಕಾವ್ಯಾವಲೋಕನ (ದ್ವಿತೀಯ ಮುದ್ರಣ) ... | 1 | 8 |
| *23 | ಕುಮಾರವ್ಯಾಸನ ಮಹಾಭಾರತ, ಕರ್ಣಪರ್ವ ... ... | 2 | 4 |
| 24 | „ ಶಲ್ಯಗದಾಪರ್ವಗಳು ... ... | 1 | 0 |

---

* ಈ ಗುರ್ತಿರುವ ಗ್ರಂಥಗಳು ಈಗ ಬೆಲೆಗೆ ದೊರೆಯುವುದಿಲ್ಲ.

## LIST OF WORKS PUBLISHED BY THE GOVERNMENT ORIENTAL LIBRARY, MYSORE.

---

### A.—Sanskrit Publications.

| | | Price Rs. | a. |
|---|---|---|---|
| *1. | Apastamba Grihya Sutra with the commentary of Sudarsanacarya ... ... ... | 1 | 12 |
| *2. | Apastamba Paribhasha Sutra with the commentaries of Haradatta and Kapardi Swami ... | 1 | 0 |
| *3. | Madhaviya Dhatuvritti, Vol. II, Part I (Adādi-Divādi Juhotyādi) ... ... | 2 | 0 |
| *4. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Swarapatha, Vol. I | 2 | 8 |
| *5. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. II ... ... ... | 2 | 8 |
| *6. | Dakshinamurtistotra with the commentary of Suresvaracharya ... ... ... | 1 | 4 |
| *7 | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. III ... ... ... | 3 | 0 |
| *8. | Bhagavadgita with the commentary of Sankaracarya ... ... ... | 2 | 12 |
| *9. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IV ... ... ... | 3 | 0 |
| *10. | Mandala Brahmanopanishad with a commentary ... | 0 | 6 |
| *11. | Saundaryalahari with the commentary of Lakshmidhara, Bhavanopanishad with a commentary, and Devīpancastavī ... ... ... | 1 | 0 |
| *12. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. V ... ... ... | 3 | 0 |
| *13. | Taittiriya Sambita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. X ... ... ... | 3 | 0 |

*N.B.*—Numbers marked thus * are out of stock.

| | | Price Rs. a. |
|---|---|---|
| *14. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XI ... ... ... | 3 0 |
| *15. | Apastamba Dharma Sutra with the commentary called Ujjvala ... ... ... ... | 1 12 |
| *16. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. VIII ... ... ... | 3 0 |
| *17. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. IX ... ... ... | 2 4 |
| *18. | Taittiriya Samhita with the commentary of Bhatta-Bhaskara with Padapatha and Svarapatha, Vol. XII ... ... ... | 1 12 |
| *19. | Sankaracarya's Miscellaneous Works, Vol. I, commentaries on Vishnusahasranama and Sanatsujātiya ... ... ... | 1 4 |
| *20. | Sankaracarya's Miscellaneous Works, Vol. II, Aparokshānubhūti, Satasloki, Haristuti and Dasasloki with a commentary ... ... | 1 4 |
| *21. | Sankaracarya's Miscellaneous Works, Vol. III, Upadesasāhasri with a commentary ... | 2 0 |
| *22. | Sankaracarya's Miscellaneous Works, Vol. IV, Atmabodha, Vivekacūḍāmaṇi, Vākyavritti, Svātmanirūpana, Yogatārāvali, Sarva vedanta-siddhanta sārasangraha ... ... | 1 0 |
| *23. | Madhaviya Dhatuvritti, Vol. I, Part I (Bhvādi)... | 2 0 |
| *24. | Madhaviya Dhatuvritti, Vol. I, Part II (Bhvādi)... | 2 0 |
| *25. | Gotra-pravara-nibandha-kadambakam ... | 2 0 |
| *26. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. I ... | 1 12 |
| *27. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. II ... | 1 0 |
| *28. | Ekāgnikānda with the commentary of Haradatta with Svarapatha ... ... ... | 1 4 |
| *29. | Taittiriyaranyaka with the commentary of Bhatta-Bhaskara with Svarapatha, Vol. III ... | 1 0 |
| *30. | Brahmamimamsa with the commentary of Srikantha | 2 0 |
| *31. | Madhaviya Dhatuvritti, Vol. II, Part II (Svadi and Curadi) ... ... ... | 2 0 |
| *32. | Bodhayana Grihya Sutra with Parisishta ... | 2 4 |
| *33. | Taittiriya Pratisakhya with Vaidikābharana and Tribhāshyaratna ... ... ... | 4 0 |

*N.B.*—Numbers marked thus * are out of stock.

| | | Price Rs. | a. |
|---|---|---|---|
| *34. | Bodhayana Dharma Sutra with a commentary ... | 3 | 0 |
| *35. | Bhattadipika, Vol. I ... ... ... | 3 | 0 |
| *36. | Taittiriya Brāhmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka I ... | 3 | 8 |
| *37. | Kautilya Arthasastra (First Edition) ... | 3 | 0 |
| *38. | Taittiriya Brahmana with the commentary of Bhatta-Bhaskara with Svarapatha, Ashtaka III, Part I ... ... ... | 3 | 8 |
| *39. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. I ... | 3 | 0 |
| *40. | Bhattadipika, Vol. II ... ... ... | 3 | 0 |
| 41. | Khādira Grihya Sutra with Rudraskandiya ... | 1 | 0 |
| *42. | Taittiriya Brahmana with Bhatta-Bhaskara's commentary, Ashtaka III, Part II .. ... | 2 | 4 |
| 43. | Smriticandrika, Samskara Kanda ... ... | 1 | 8 |
| 44. | Smriticandrika, Ahnika Kanda ... ... | 2 | 8 |
| 45. | Smriticandrika, Vyavahara Kanda, Part I ... | 2 | 0 |
| *46. | Bhattadipika, Vol. III ... ... | 2 | 8 |
| *47. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. II ... | 3 | 0 |
| 48. | Smriticandrika, Vyavahara Kanda, Part II ... | 3 | 0 |
| *49. | Bhattadipika, Vol. IV ... ... | 3 | 0 |
| 50. | Gautama Dharma Sutra with Maskariya ... | 3 | 8 |
| 51. | Alankāra Manihāra, Vol. I ... ... | 3 | 0 |
| 52. | Smriticandrika, Sraddha Kanda ... ... | 3 | 4 |
| *53. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. III ... | 4 | 0 |
| *54. | Kautilya Arthasastra (Second Edition) ... | 3 | 0 |
| *55. | Bodhayana Grihya Sutra with Pariśishta ... | 2 | 4 |
| 56. | Smriticandrika, Aśauca Kanda ... | 1 | 8 |
| 57. | Taittiriya Brahmana with the commentary partly of Bhatta-Bhaskara and partly of Sāyaṇa, Ashtaka II ... ... ... | 3 | 8 |
| 58. | Alankāra Manihāra, Vol. II ... ... | 3 | 8 |
| 59. | Srimad-Brahmasutra Bhashya (Anandatirthiya) with Tatparya Candrika, etc., Vol. IV ... | 3 | 8 |
| *60. | Kavya-Prakasa with the commentary of Sanketa ... | 3 | 8 |
| 61. | Ayurveda Sutra with the commentary of Yoganandanatha ... ... ... | 2 | 0 |
| 62. | Alankāra Manihāra, Vol. III ... ... | 2 | 8 |
| 63. | Vidyamadhaviya of Vidyamadhava with the commentary Muhurthadipika by Vishnu Sarma, Vol. I ... ... ... | 2 | 0 |

*N.B.*—Numbers marked thus * are out of stock.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| 64. | Kautilya Arthasastra (Third Edition) ... | 3 | 0 |
| 65. | Index Verborum to the published texts of Arthasastra of Kautilya Vol. I ... ... | 2 | 8 |
| 66. | Index Verborum to the published texts of Arthasastra of Kautilya, Vol. II ... ... | 2 | 8 |
| 67. | Vidyamadhaviya of Vidyamadhava with the commentary of Muhurtadipika by Vishnu Sarma, Vol. II ... ... ... | 2 | 0 |
| 68. | Index Verborum to the published texts of Artha-Sastra Vol. III ... ... ... | 2 | 0 |
| 69. | Abhilashithartha Cintamani, Vol. I ... ... | 2 | 0 |
| 70. | Vidyamadhaviya, Vol. III ... ... | 1 | 8 |
| 71. | Sarasvati Vilasa (Vyavahara Kanda) ... ... | 2 | 8 |
| 72. | Alankara Manihara, Vol. IV ... ... | 2 | 4 |
| 73. | Apastamba Sulba Sutra ... ... ... | 2 | 12 |
| 74. | Tarkatandava with Nyayadipa, Vol. I ... ... | 3 | 0 |
| 75 | Advaitasiddhi with Gurucandrika, Vol. I ... | 3 | 12 |
| 76. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. I ... | 4 | 0 |
| 77. | Tarkatandava, Vol. II ... ... ... | 2 | 0 |
| 78. | Advaitasiddhi with Gurucandrika, Vol. II ... | 3 | 4 |
| 79. | Tarkatandava, Vol. III ... ... ... | 2 | 0 |
| 80. | Advaitasiddhi with Guruchandrika, Vol. III ... | 2 | 4 |
| 81. | Tattvamuktakalapa with Sarvarthasiddhi, Bhavaprakasa and Anandadayini, Vol. II ... | 3 | 0 |
| 82. | Tarkatandava, Vol. IV ... ... ... | 2 | 4 |
| 83. | Vakyartharatna with the Suvarnamudrika ... | 1 | 0 |
| 84. | Tattvarthasutra of Umāsvami with the Sukhabodha of Bhaskaranandi ... ... ... | 2 | 4 |
| 85. | Saundaryalahari Bhavanopanishat, Devipancastavi. | | |
| 86. | Apastamba Srauta Sutra with the Vritti and Bhashya of Dhurtaswami, Vol. I, Prasnas 1—5. | | |
| 87. | Yadavabhyudaya with the commentary of Appayadikshit, Vol. I, Sargas 13—18. | | |

MISCELLANEOUS.

| No. | Title | Price Rs. | a. |
|---|---|---|---|
| 1. | A Descriptive Catalogue of Sanskrit Manuscripts in the Oriental Library, Mysore, Vol. I—Vedas. | 3 | 12 |
| 2. | Do Do Vol. II—Smṛtis. | | |
| 3. | A Catalogue of Printed Sanskrit Books in the Oriental Library. | 2 | 12 |

*N.B.*—Numbers marked thus * are out of stock.

## B.—Kannada Publications.

| | | Price Rs. | a. |
|---|---|---|---|
| *1. | Adipurana of Pampa ... ... ... | 2 | 8 |
| *2. | Jagannatha Vijaya (First Edition) ... ... | 2 | 8 |
| 3. | Mahabharata—Pauloma and Astika Parvas ... | 1 | 8 |
| 4. | Mahabharata by Kumara Vyasa, Sambhava Parva | 2 | 0 |
| 5. | Mahabharata by Kumara Vyasa, Jatugriha Parva | 1 | 12 |
| 6. | Mahabharata by Kumara Vyasa, Sabha Parva ... | 1 | 12 |
| 7. | Mahabharata by Kumara Vyasa, Aranya Parva ... | 2 | 0 |
| 8. | Mahabharata by Kumara Vyasa, Virata Parva ... | 1 | 8 |
| 9. | Keladinripa Vijaya of Linganna ... ... | 1 | 8 |
| 10. | Udbhatakavya of Somaraja ... ... | 2 | 0 |
| 11. | Jagannatha Vijaya of Rudrabhatta (Second Edition) | 2 | 12 |
| 12. | Mahabharata by Kumara Vyasa, Udyoga Parva ... | 1 | 2 |
| 13. | Akrura Caritre of Somanatha ... ... | 1 | 0 |
| 14. | Dharmamrita of Nayasena, Vol. I ... ... | 2 | 4 |
| 15. | Kantirava Narasaraja Vijaya ... ... | 2 | 8 |
| 16. | Dharmamrita of Nayasena, Vol. II ... ... | 1 | 4 |
| 17. | Virabhadravijaya ... ... ... | 1 | 4 |
| 18. | Anantanathapurana of Janna ... ... | 2 | 0 |
| 19. | Sakalavaidya Samhita Sararnava by Virarajendra | 1 | 14 |
| 20. | Mahabharata by Kumara Vyasa, Bhishma Parva | 1 | 0 |
| 21. | Mahabharata by Kumara Vyasa, Drona Parva ... | 1 | 12 |
| 22. | Kavyavalokana by Nagavarma (Second Edition) ... | 1 | 8 |
| 23. | Mahabharata, Karna Parva ... | 2 | 4 |
| 24. | ,, Salya and Gada Parvas ... | 1 | 0 |
| *25A. | Yogaratnakara with translation in Kannada and Telugu, Part I | | |

*N.B.*—Numbers marked thus * are out of stock.

